विभु[1]रपि कलयन् सदातिवृद्धिं[2]
गुरुरपि गौरवचर्यया विहीनः ।
मुहुरुपचितवक्रिमापि शुद्धो
जयति मुरद्विपि राधिकानुरागः ॥२॥

नान्दीशेषतया द्वितीये पद्ये श्रीराधिकाया भगवति श्रीकृष्णचन्द्रे अनुरागमुपश्लोकते
**विभु(धु)रपीति —**

मुर तन्नामान दैत्य द्वेष्टीति मुरद्विट् [ क्विप् ] तस्मिन् मुरद्विपि ( विषय सप्तमी )
भगवति कृष्णचन्द्रे राधिकाया राधत प्रीणातीति राधा, सा एव राधिका सतत
प्रीणन-प्राणन परायणा, तस्या अनुराग अनुस्यूतो राग प्रणयप्रकर्ष जयति सर्वोत्कर्षेण
वर्तते । *अनुरागो नाम रतिविषये वस्तुनि सर्वकालमनुभूयमानेऽपि, सततमपूर्वतयानु-*
भूतत्वभावनाजन्यप्रमोदातिरेकमर्पक प्रणयस्य प्रकर्षजन्यपाकरूपोऽनुगतमासज्यमान
स्निग्धो भावविशेष । प्रकृते कीदृश स इति जिज्ञासायामाभासितै विरोधि-
धर्माश्रितैस्त्रिभिर्विशेषणैर्विशिनष्टि—

विभु चिदात्मकत्वात्सर्वत्र सर्वभावेन व्यापक सन्नपि सदा प्रतिक्षणमभित
सर्वस्मिन् परिसरे व्यतिकरे च वृद्धिमुपचय कलयन् सम्पादयन् इति प्रथमो विरोध,
यत सर्वतोऽभिव्याप्त प्रतिक्षणं पुनरभिवृद्धिं नार्हते, परन्त्वत्र भगवतो विभुत्वमलौकिकम्
अतो लोकवल्लीलाविभवेन प्रतिनिमेष वर्धिष्णुता चानुरागस्य सघाघटीतीति
विरोधपरिहार । "विधुरपीति"-पाठेऽपि साधायान् भावोन्मेष — तद्यथा, विधु
विशेषेण धुनोति हृदय स्फूर्तिविशेषेण स्पन्देनावर्जयतीति विधुश्चन्द्रापरपर्याय आह्लादक,
स च केवल धवलपक्ष एवाभिवृद्धिं भजते पुनर्बहुले च क्षीयते, किन्त्वसौ विधुरनुरागरूप
सदैवाभिवृद्धिं धत्ते प्रगाढत्वात् इति विशेष, अतो विधुरित्यस्य केवल सन्तर्पकत्वामृत-
मयत्वरूपार्थे तात्पर्यादत्र विरोधपरिहार शब्दशक्तेरर्थविशेषे नियमनात् ।

अपि चासौ अनुराग गुरु मानाधिक्यभाक् सन्नपि गौरवस्य या चर्या
आचरण तया रहित विहीन । य गुरु स गुरुत्वाभाववान् भवितु कथमर्हतेति विरोध,

---

व्यापक होते हुए भी सदा वर्धमान, गुरु होते हुए भी गौरव (गुरु भाव) से उन्मुक्त, बारम्बार लोकव्यवहार के अननुरूप, अत वक्रिम होते हुए भी परम शुद्ध, श्री राधा का मुरारि के प्रति अनुराग विजयी होवे ॥२॥

---

2 Victorious ( supreme ) be the love of Radhā for Krsna the foe of Mura, which (love) perfect everywise yet constantly increasing, though sublime lacks in dignified deportment and though often unconventional is essentially pure

---

1 विधुरपि — इति पाठान्तरम् ।
2 सदाभिवृद्धिम्— „ ।

( नाद्यन्ते )

परन्त्वयमनुरागः गुरुः गभीरः प्रणयभारभरितः, गौरवञ्चात्र लोकव्यवहारानुरूपतया प्रतिष्ठितत्वं तदनुकृताचरणरूपं तेन विहीनोऽलौकिकत्वाद्, एवं सर्वदा प्रातिकूल्याभावप्रतियोगित्वादपारमाधुर्यधुर्यत्वादनुरागस्य तथात्वं प्रतिपद्यते इति प्रक्रान्तविरोधपरिहारः ।

अपि च मुहुर्भूयो भूयः प्रतिव्यवहारं प्रसङ्गे प्रसङ्गे उपचितः वक्रिमा कौटिल्यरूपो विच्छित्तिविशेषो यत्र तादृशः सन्नपि शुद्धः, प्रणये वक्रत्वमपि नायकयोः प्रमोदाय कल्पतेतरामिति हेतोः वक्रिमानुगतोऽपि विमलः । कपटपटीयान् शुद्धो न भवेदिति सामान्यव्यवहारविरोधोऽत्र वक्रिम्णा प्रणयलीलान्तर्गतकुटिलत्वप्रसूतेन सौन्दर्येण महिमशाली, सत्त्वोद्रेकसम्पन्नत्वात् शुभ्रो विशुद्ध इति परिह्रियते ।

एवं विरुद्धधर्माश्रितोऽपि सर्वथा सामञ्जस्यमनुगतः कृष्णविषयको राधिकागतोऽनुरागः जयति सामान्यदाम्पत्यव्यतिरेकी विलक्षणमधुरिममहितः सर्वोत्कृष्ट एव, यतः साधारणजनेषु मिथोऽनुरागः स्त्रीपुंसोः तादृशीं रतिं पुष्णाति या शृङ्गाररसमभिव्यनक्ति, तद्व्यतिरिक्तो वर्ण्यमानानुरागः स्थायिनं तादृशं रतिभावं पुष्णाति यो मधुररसं विभावयतीति सर्वोत्कृष्टिबीजम् । तादृशं विलक्षणानुरागम्प्रति प्रह्वीभूतः कविवरः नमस्कारात्मकम्मङ्गलमातनोतीति भावः ।

अत्र तादृशालौकिकानुरागम्प्रति कविगतो रत्याख्यो भावः प्रणतिरूपो व्यज्यते, जयतेः "सर्वोत्कर्षेण वर्त्तते तम्प्रत्यस्मि प्रणतः" इति तात्पर्यग्रहणात् [ मम्मटः ] । अत्र विशेषणत्रितयेऽपि विरोधाभासो नाम अलङ्कारः । वृत्यनुप्रासश्च शब्दालङ्कारः । माधुर्यं प्रसादश्च गुणौ । उपनागरिका वृत्तिः, वैदर्भी मार्गः, मृद्वीकापाकः । वृत्तञ्चात्र औपच्छन्दसिकं वर्ण्यविषयस्यानुरागस्य परस्परमुपच्छन्दफलकत्वात्सर्वथाऽनुगुणम् । इदमेव पुष्पिताग्रापरनामकम् । तल्लक्षणम् – "अयुजि नयुगरेफतो यकारो युजि तु न जौ जरगाश्च पुष्पिताग्रा" – इति ॥ २ ॥

**नान्द्यन्त इति** — नान्द्याः अन्ते परिसमाप्तौ सूत्रधारः प्रविशति रङ्गमञ्चमिति शेषः । रूपकारम्भे विघ्नोपशान्तये क्रियमाणा आशीर्वचनसंयुक्ता देवद्विजनृपादीनां स्तुतिर्नान्दी । नन्दयति आनन्दयति स्तुत्वा देवादीन् आशिषा च सभ्यानिति इदन्तनन्दधातोः "पचाद्यच्" [ पा. सू. ३-१-११४ ] तेन नन्द इति रूपम् ( घञ् वा ) ततः प्रज्ञादित्वादण्प्रत्ययः स्वार्थे नन्द एव नान्द इति, पश्चात् स्त्रियां ङीप् तेन नान्दी लोकानन्दिनीत्यर्थः । तल्लक्षणं नाटकचन्द्रिकायां रूपगोस्वामिभिरुक्तम् –

"प्रस्तावनायास्तु मुखे नान्दी कार्या शुभावहा ।
आशीर्नमस्क्रियावस्तुनिर्देशान्यतमान्विता ॥" इति

[ नान्दी के बाद ]

*( After Invocation )*

सूत्रधारः — अलमतिविस्तरेण । ((समन्तादवलोक्य) हन्त ! कथ

---

इय नान्दी पूर्वरङ्गस्य अभिनेयरूपकविशेषस्यारम्भे क्रियमाणस्य सज्जादि-क्रियाकलापस्य भरतोक्तनवदशाङ्गकस्यान्यतममङ्गम् — यस्य प्रयोजन विघ्नशमन, सङ्गीतादिना च सभ्यानामभिनयावलोकने प्ररोचनम् — यथाह भरतः —

"*यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्य कर्त्तव्या नान्दी विघ्नप्रशान्तये ॥*
सूत्रधार पठेदेना मध्यम स्वरमाश्रित । नान्दीं पदैर्द्वादशभिरष्टाभिर्वा पदैर्युतामिति ॥"

नान्दीपदानां गणनानियमोऽपि प्रतिपादितो नाट्यविद्भिः "श्लोकपादपदं केचित् सुप्तिङन्तमथापरे । परेऽवान्तरवाक्यञ्च पदमाहुर्विशारदा" — इति ।

अत्र तावत् पद्यद्वयोपनिबद्धा नान्दी — प्रथमे "अन्त स्मेरेति" पद्ये 'श्रिय व क्रियादिति' वचनेनाशीर्वचनम्, द्वितीये तु 'जयति राधिकानुराग' — इत्यत्र जयतेर्नमस्क्रियाक्षकत्वात् देवस्तुति प्रणतिभाव । एवञ्च श्लोकस्य वृत्तस्य पादैकैकेन पदघटनादिय नान्दी अष्टपदा । "रुद्धाया पथि माधवेन" इति वचनाद्बीजस्याभिधेयस्य वस्तुनो निर्देशात् दानकेलीतिनाना-प्रसङ्गस्य किलकिञ्चितस्तबकिनीति वचनादभिव्यज्यमानत्वादिय नान्दी पत्रावली समाख्या "यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुन । श्लेषेण समासोक्त्या वा नाम्ना पत्रावली तु सा" इति नाट्यदर्पणे लक्षणात् । द्वितीयस्मिन् पद्ये श्लेषेण सर्वस्य कथावस्तुनो निर्देशात् । तथा च तत्रैव "विधुरपि" इति पाठे चन्द्रमसो नाम्ना निर्देशात् इय नान्दी नीलीरूपा — यल्लक्षण काव्येन्दुप्रकाशे — "आदान वर्णनं वा भवेद्यत्रेन्दुसूर्ययो । सा नीली स्यात्तदन्या तु शुद्धेति परिगण्यते ॥" — इति । अपि चेयं नान्दी मगणेन "उर्वीं मस्त्रिगुरु श्रिय वितनुते" इति वचनात् श्रीप्रदेन तथा च अकारेण "अकारो वासुदेव स्यादिति" वचनाद्वासुदेव-स्वरूपेणारब्धा, अत इय गणतोऽक्षरतश्च माङ्गलिकी । उक्त हि— "अक्षरे परिशुद्धे तु नायको भूतिमृच्छति" इति । अत सर्वात्मनेय नान्दी नायकस्य भगवत कृष्णचन्द्रस्य दानकेलि-व्याजाद्व्रजनन्दिन्या राधिकाया अङ्गलाभरूपां भूतिं दिशतीति विशदम् ।

अभिनयप्रसङ्गे नान्दी ढक्कानिनाद नाट्यन्यारम्भसूचको विधीयते प्रेक्षागृहेषु *इत्यपि सर्वसङ्गीकृता परिपाटी । एव आशीर्नमस्क्रियात्मक मङ्गल मध्यमस्वरेण भारतीवृत्त्या* पठित्वा सामाजिकान् एकत्र भवितु समाह्वानरूप घण्टानाद विधाय सूत्रधार प्रकान्त मभिनेयमान वस्तु प्रस्तोतु रङ्गम्प्रविशतीति वाक्यशेष । अत एवेद रङ्गद्वारमपि प्रस्तुतमित्यवधेयम् भारतीवृत्त्या समारम्भात् ।

**सूत्रधार** — अभिनेयोपक्रम स्थापयितु स्थापकापरपर्याय सूत्रधार आह । सूत्र नाटकीयं कथासूत्र धारयतीति सूत्रधार "वर्णनीयतया सूत्र प्रथम येन सूच्यते । रङ्गभूमिं

---

**सूत्रधार** — अधिक विस्तार से क्या लाभ । [ चारों ओर देखकर ] अहो !

---

**Stage-Manager** · Enough of prolixity *( Looking around )* Ah!

**मदीय-नान्दी-चन्द्रिका-सन्दीपित-भावबन्धुरा नन्दीश्वरगिरेरुपत्यकायां घूर्णते सतां मण्डली !**

---

समाक्रम्य सूत्रधारः स उच्यते" इति सङ्गीतसर्वस्वे सूत्रधारलक्षणम्। धृधातोः "कर्मण्यण्" (पा. ३।२।१) इत्यनेनाण् प्रत्ययः। सूत्रधारो हि रूपकव्यवस्थापकः प्रधाननटः उत्तमपात्रत्वात्संस्कृतमाश्रयते।

**अलमिति** — अतिविस्तरेण सुबहुलेन नान्दीप्रयोगेण अलम् एतावतैव नान्दीप्रयोजनस्य साकल्येन निर्वाहात्। अतिविस्तरेणेत्यत्र वारणार्थे तृतीया। विपूर्वकस्तृधातोः "प्रथने वाव शब्दे" (पा. ३।३।३३) इति वचनात् शब्दप्रथने घञो निषेधात्तदभावे "ऋदोरप्" (पा. ३।३।५७) इति सूत्रेण अप्प्रत्यये विहिते विस्तर इति रूपम् (अन्यत्र विस्तारः)।

[ततः समन्तात् सर्वतोऽवलोक्य रङ्गस्वरूपं विभाव्य] आह — **हन्तेति** — समोदाश्चर्ये हन्तेत्यव्ययम्। **कथमिति** विस्मयं बोधयितुं पृच्छामुखेन वस्तुस्थितिमवगमयति।

**मदीयेति** — मदीया मत्पठिता या नान्दी सा एव चन्द्रिका कौमुदी तया सन्दीपिताः प्रादुर्भाविता ये भावाः मनोवृत्तिविशेषास्तैः विविधैः बन्धुरा निम्नोन्नता उद्वेलिता इयं पुरःस्थिता सतां सामाजिकानां मण्डली समुदायः नन्दीश्वरस्तन्नामको वृन्दारण्यवर्त्ती गिरिः तस्य उपत्यकायामासन्नायां भूमौ घूर्णते भावविह्वला सती इतस्ततः विचलितेव विभाति।

अत्र नान्द्याः चन्द्रिकया तादात्म्यख्यापनेन आह्लादकत्वसाधर्म्यविगाहित्वं बोध्यते, परम्परया च सतां मण्डले प्रमोदजन्यक्षोभधर्मिणि समुद्रत्वमारोप्यते, चन्द्रिकोदये समुद्रोद्वेलनं निसर्ग एव। अतोऽत्र रूपकमलङ्कारः यद्वशात् नान्द्याः सविशेषरोचकत्वं, सतां समुदाये समुद्रवद्गाम्भीर्यं, बन्धुरत्वात् विविधभावोन्मेषशक्तिमत्त्वं, अभिनेयस्य वस्तुनो राधिकानुरागस्य सुधासारसान्द्रत्वं च वस्तु व्यज्यते।

विस्मयाक्रान्तः सूत्रधारः रङ्गस्य स्थितिविशेषमाकलयितुं पुनरितस्ततः अवेक्ष्य कथं सतां मण्डली घूर्णमाना दरीदृश्यत इति सविशेषं श्लोकशेषं बृंहयति —

---

मेरी नान्दी रूपिणी चन्द्रिका (चांदनी) से भावविह्वल हो नन्दीश्वर पर्वत के समीपवर्त्ती भूभाग में सज्जनों का समुदाय कैसा झूम रहा है! [फिर देखकर]

---

How well this circle of good people undulating with emotions aroused by the moonlight of my (Invocatory) song is happily rolling about at the foot of the Nandīśvara mountain!

( पुनरवेक्ष्य )

भक्तः कोऽपि तनोत्तनोति पुलकैर्नृत्यन्निहोत्फुल्लतां
शुष्यन्कोऽपि चिराद्विवर्णवदनो धत्ते विदीर्णं मनः ।
गर्जन्धावति कोऽपि विन्दति पतन् कोऽप्येष निष्पन्दता-
मुद्यत्यच्युतविभ्रमे गतिरभूत्का स्थेयसामप्यसौ ॥३॥

भक्त इति — अच्युतस्य श्रीकृष्णचन्द्रस्य विभ्रमे लीलाविलासे उद्यते प्रकान्ते सति कोऽपि भक्तस्तदाराधनपरायणो जन नृत्यन् पुलकै रोमोद्गमै तनो उत्फुल्लतां तनोति प्रकटयति, कोऽपि अपर भगवद्विरहमसहमान शुष्यन् सन्तप्यमान चिराद् विवर्ण वदन यस्य तादृश सन् विदीर्णम् असंस्थितं मन धत्ते वहति, कोऽप्यन्य हर्षाद्रेकेण गर्जन् उच्चैर्निनदन् धावति भगवत्सान्निध्यमवाप्तु त्वरते, अपर कोऽपि एष पुरो दृश्यमानो भक्त प्रमोदातिशयेन निष्पन्दता भगवदनुध्यानवशात् पतन् स्तम्भ विन्दति — एव स्थेयसा स्थिरतरचित्तवृत्तानामपि जनानामसौ परिलक्ष्यमाणा का गति विलक्षणैव दशा अभूदिति विस्मय ।

अत्र पूर्वोक्तविभ्रमदशातारतम्यन्तु अधिकारिभेदादवगन्तव्यम्, यत भक्ता अपि विविधरूपा नानाश्रेणीका भवन्ति । भक्त्याश्रयस्य प्रेम्णो मुख्यत द्वैविध्यम् — एक विश्रम्भप्रधान प्रेम यत्र आलम्बन ममैवेति विश्वासस्य दृढत्वम्, अपरमुत्कण्ठाप्रधान प्रेम यत्र समग्रतया आलम्बनस्य भक्ताधीनतापादनाय तत्समागमाय च उत्कण्ठाया प्राधान्यम् इति तोषणीकारा । एवं द्विविधप्रेमाश्रयित्वाद्भक्तानामपि द्वैविध्यात्तत्र तत्रानु भावाना तदुद्दीपनाना विभावानाञ्च स्वरूपभेद । तत्र विश्रम्भप्रधानानां संयोगस्फूर्त्ति

---

( फिर देखकर )

कोई भक्त तो आनन्द की अधिकता से नाचता हुआ शरीर मे उत्पन्न होने वाले रोमाञ्च से विकास को प्राप्त हो रहा है, तो कोई लम्बी अवधि से वियुक्त होने के कारण उदास मुह से विदीर्ण होनेवाले मन को थाम रहा है, कोई हा हा करता हुआ दौड रहा है, तो कोई भावातिरेक से भूमि पर गिर कर एकदम निश्चेष्ट हुआ जा रहा है, इस प्रकार भगवान् श्रीकृष्ण की भाव लीला का समारम्भ होते ही, इस सुस्थिर वृत्ति वाले भी भक्त समुदाय की सम्पूर्ण मनोवृत्ति कसी अवर्णनीय स्थिति को प्राप्त हो रही है ॥३॥

( *Looking again* )

3 Some one of the devotees dancing in a thrill of joy waxes happy, some one languishing long with a pale face has his mind shattered, another runs about roaring, and yet here is another who falls fascinated still Ah ! to what condition have even these otherwise settled people come to in the flurry of mind caused by their love for Lord Krsna !

( क्षणं विमृश्य )

आम् अभिज्ञातं निदानम्। साधिष्ठप्रेमकदम्बकादम्बराणामाडम्बरोऽयम्।

यतः —

गभीरोऽप्यश्रान्तो[1] दुरधिगमपारोऽपि नितरा-
महार्यां मर्यादां दधदपि हरेरास्पदमपि।

---

विशेषात् हर्षे सञ्चारिणि पुलकाविर्भाव–नर्त्तन–गर्जन-धावनादीनामनुभावनम्, उत्कण्ठा-प्रधाने प्रेम्णि वैवर्ण्यादीनां सात्त्विकानां भावानां, चिन्ता-चेतोग्लानि-कण्ठशोष-जागर्यादीनामनुभावनम्भवति। एवमत्रोभयप्रकारकान् भक्तानधिकृत्य तत्तच्चेष्टाविशेषानुभव-वर्णना सुसज्यते; तेन च भगवद्विषयके स्थायिनि रतिभावे आलम्बनगतमधुररसाभिव्यक्तिः स्फुटं प्रतिभाति। अतोऽत्र भाविकालङ्कारः। सूत्रधारस्य चेतसि विस्मयाख्यो भावो ध्वन्यते। का गतिरमूदिति विस्मयस्य हेतुत्वेनोपपादितानां प्रथमचरणत्रितयेऽभिहितानां वस्तूनां समुच्चयादत्र हेतुबाहुल्यात्समुच्चयालङ्कारः, प्रतिपदं भावध्वनिश्च, प्रसादो गुणः वैदर्भी रीतिः। वृत्तञ्च शार्दूलविक्रीडितम् "सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणयोगात्॥ ३॥

**आमिति**—किञ्चिद्विचार्य सूत्रधारः सत्समुदायस्य वैलक्ष्ये हेतुं स्मृत्वा आह। आम् इति सान्तरे स्मरणे अव्ययपदम्। साधिष्ठस्य अतिशयकोट्यवगाहिनः श्रेष्ठत्वस्या-धानभूतस्य प्रेम्णः कदम्बः स्तोम एव कादम्बराः मद्यन्मदाः तत्तदनुभावविशेष-रूपास्तेषाम् आडम्बरः प्रपञ्चोऽयम्। यतः यथा मत्तः स्वस्मिन् न प्रभवति तथैवेयं भगवत्प्रेमसान्द्राणां मण्डली आत्मन्यप्रभवन्ती परिदृश्यते इति तदवस्थां वर्णयति सूत्रधारः —

**गभीरोऽपीति** — सतां सज्जनानां कृष्णभक्तानां स्तोमः समुदायः समग्रे समस्तैर्भावैरनुभाविते सकले प्रेमणि अनुरागे उदयति आविर्भवति सति स्फारं प्रतिनिमेषं परिवर्धमानं [ स्फायतेः रक् ] विकारं चेतसोऽसंस्थितत्वं स्थगयितुमवरोद्धुं न प्रभवति,

---

( कुछ क्षण सोचकर )

अहो! वास्तविक कारण समझ में आया! परम उदात्त प्रेम-भाव से विभोर मनोवृत्ति वाले भक्त-वृन्द का यह कौतुक कितना आनन्दप्रद है। क्योंकि —

*(Reflecting a moment )*

Oh ! I see; the real cause is known. This is a phenomenon of the God-intoxicated men drunk with the various forms of the most excellent love for God (behaving like men drunk with a variety of liquors distilled from the Kadamba flowers.) For,

---

1. क्वचित् "अश्रान्तम्" इति पाठभेदः, स तु चिन्त्य एव।

सतां स्तोमः प्रेमण्युदयति समग्रे स्थगयितुं
विकारं न स्फारं जलनिधिरिवेन्दौ प्रभवति ॥४॥

तस्यातिशयवेगवत्त्वात् । कीदृशोऽयं सतां समूह इत्याह – गभीर: अगाध: सन्नपि अश्रान्त: अस्थिरो गतिशाली, प्रगाढोऽपि सन्नुर्मिल: भावोद्रेकसम्पन्न:, दुरधिगम: पार: सीमा यस्य तादृश: आयामवत्त्वात्, अतिनितरामित्यनेन तस्य इयत्ताया अपरिच्छेद्यत्वमुच्यते । न हार्या हर्तुं शक्याम् अहार्यामपरिहेयां मर्यादां मानुषोचितसीमानं दधत् धारयन्नपि अपार इत्यन्वय: । हरे: हरणशीलस्य भगवत: कृष्णचन्द्रस्य आस्पदं निधानं भूत्वाऽपि आत्मन: अहार्यमर्यादाशालित्वं दधदिति विशेष: । एतादृश: गाम्भीर्यौदार्यत्वादिगुण-गणसन्दानितोऽपि सतां स्तोम: हृदि भगवद्विषयिणि प्रेमणि समुदिते सति चेतसि स्फारं विकारं स्तम्भयितुं नैव प्रभवति – इति भगवत्प्रेम्ण: तीव्रत्वमाधानस्य च सहृदयत्वमभि-व्यज्यते । अमुमेवार्थं द्रढयितुं सतां समूहस्य जलनिधिना साधर्म्यमुपस्थापयति कवि: तद्यथा – यथा जलनिधि: सागर: अगाध: सन्नपि अश्रान्तं सर्वदा प्रवहन् महोर्मिल:, अत्यन्तमेव दुरधिगमपारोऽपि भवन् नियतां मर्यादां परिपालयन्, हरेर्विष्णो: शयनीयतया निधानं भूत्वाऽपि समग्रे परिपूर्णमण्डले इन्दौ उदयति सति पौर्णमास्यां स्फारं विवर्धमानं विकारं क्षोभं स्थगयितुं नियमयितुं न प्रभवति तथेत्युपमालङ्कार: श्लेषानुप्राणित: विरोधाभासेन सङ्कीर्ण: । उपमालङ्कारेण भगवन्तं कृष्णमुद्दिश्य प्रेमणि चन्द्रधर्मा: आह्लाद-कत्वोद्दीपनत्वादय:, भक्तवृन्दे च जलनिधिधर्मा: अतिदिश्यन्ते ।

अत्रोपनागरिकावृत्त्यनुकूलोऽनुप्रासालङ्कार:, रचनायां कान्तिर्नाम, अर्थे च प्रसादो नाम गुण:, वैदर्भी रीति: । मधुरश्च शिखरिणी वृत्तम् – "रसै रुद्रैश्छिन्ना यमनसभला ग: शिखरिणी" – इति लक्षणात् । अत्र तृतीये चरणे यतिभङ्ग:, 'प्रेमणि' इत्यस्य विरामे एकाक्षरविभागात् ॥४॥

---

गम्भीर होते हुए भी सर्वदा अस्थिर, अत्यधिक कठिनाई से भी पार करने में सर्वथा दुर्धर्ष, अनभिभवनीय सीमा से युक्त, तथा भगवान् नारायण का विश्राम स्थल होते हुए भी जिस प्रकार समुद्र पौर्णिमा के पर्व पर चन्द्र के उदय होने पर नि सीम ज्वार (जल भार) से परिपूर्ण हुए बिना नहीं रह सकता उसी प्रकार सदा धीर गम्भीर एवं अश्रान्त, अपार, सर्वदा लोक व्यवहार की मर्यादा का पालन करने वाला और अन्तर्यामी *भगवान् हरि का निवास स्थान होने पर भी यह सज्जन समुदाय भगवान् श्रीकृष्णचन्द्र के* प्रति प्रेमोद्रेक होते ही आनन्दमग्न हो अपनी उल्लसित मनोभावना को रोकने में असमर्थ हो रहा है ॥४॥

4 The mass of devotees, though always deep, though exceedingly inscrutable, though restrained by an inexorable propriety of conduct, though the abode of God Hari (for God dwells in their hearts), cannot resist deviation from their natural state at the rise of perfect love of God in their hearts, just as the ocean, though always deep, though exceedingly difficult to cross and reach the other shore because of its vast expanse, though held by an inexorable boundary, though a place of rest for God Hari, cannot resist swelling at the rise of the full Moon.

( पुनर्निभाल्य )

तत्रापि विश्वविलक्षणा सा निर्भरमतिमोहिनी केलिचर्या ।

( इति मूर्धानमाधुन्वन् सधैर्यम् )

**प्रेमोर्जिता नर्मविवादगोष्ठी गोष्ठेन्द्रसूनोः सह राधयाऽसौ ।**
**हंसानपि श्रोत्रतटीमवाप्ता शुद्धामृतादप्यभितो रुणद्धि ॥५॥**

---

पुनरपि सामाजिकान् विभाव्य परिलक्ष्य, पूर्वस्मिन् पद्ये सतां समुदायं गाम्भीर्यौदार्यादिगुणैः सम्पन्नत्वात्प्रशस्येदानीं वर्ण्यस्याभिनेयस्य राधामाधवयोः केलिचर्यारूपस्य वस्तुनो महिमानं ख्यापयति – **तत्रापीति** – तत्र तस्मिन्सत्समुदाये प्रवर्त्तमाना सा अनिर्वचनीयगुणशालिनी विश्वस्मिन् विलक्षणा निरुपमाऽसामान्या केलिचर्या प्रकृता वल्लवीनां वल्लभवल्लवेन सह नर्मलीला निर्भरं तृप्तिविरोधित्वान्न क्वचिदप्यलम्भावमापादयन्ती यथा स्यात्तथा अतितरां निरतिशयेन हृदयमावर्जयन्ती वर्त्तते इति वाक्यशेषः ।

[ एवं वदन् सूत्रधारः खल्वात्मनोऽपि तादृग्विकाराभिभूतत्वमनुभावयति स्वस्य मूर्धानं शिरः आधुन्वन् कम्पयन् , पुनश्च आत्मन्यपि भावोद्रेकेण विभ्रान्ते सति कथं प्रकान्तस्याभिनेयस्य धुरं धारयितुं प्रभवेयमित्याशंक्य धैर्यं दृढतामाश्रित्य पुनरपि राधामाधवयोर्नर्मणोऽतुलप्रभावित्वं बोधयति । ]

**प्रेमोर्जितेति** — गोष्ठं गावस्तिष्ठन्त्यत्र इति गोस्थानकं, तस्य इन्द्रः अधिपतिः नन्दराजस्तस्य सूनुः पुत्रः श्रीकृष्णचन्द्रस्तस्य राधया सह असौ प्रेम्णा ऊर्जिता उर्जः

---

( फिर सोचकर )

और अतिगम्भीर बुद्धिवाले प्राणियों को भी मोहमग्न कर देनेवाली श्रीकृष्ण की केलि-क्रीडा तो समस्त विश्व से विलक्षण ही है ।

( सिर हिलाते हुए धीरतापूर्वक )

श्री राधिका के साथ गोपराज नन्दकुमार की प्रेमभाव पगी, यह विनोद-गोष्ठी श्रवणपुट तक पहुँचते ही राजहंसों को भी शुद्ध पय से [ एवं परमहंस योगियों को भी विशुद्ध ब्रह्मानन्द की अनुभूति से ] विमुख कर ( कृष्ण-लीलारस के आस्वादन में विभोर कर ) देती है ॥५॥

---

*( Thinking again )*

Even then, most unique is this pleasantry (of Rādhā and Kṛṣṇa) which completely stuns (human) intelligence.

*( Shaking his head, and with composure )*

5. When the love-nourished, sportive altercations of Rādhā and Kṛṣṇa, the son of the Cowherd-king, reach the ears of the ascetics (swans), it prevents them also, in every way, from enjoying even the pure nectar (= the supreme spiritual bliss) (or milk in case of swans).

( प्रविश्य सानन्दम् )

**नटः — अवगणितसन्धिभूमा नाट्यकलेयं बलिष्ठसप्ताङ्गा ।**
**परमसुवृत्तियुगाढ्या, वरराज्यश्रीरिव स्फुरति ॥६॥**

उत्साहः तदतिशयेनान्विता विस्फूर्जिता नर्मविवादगोष्ठी नर्म प्रणयकेलि, नर्मणा गर्भितो विवाद नर्मविवाद ( मध्यमपदलोपी ), तस्य गोष्ठी सलाप श्रोत्रयोः कर्णयोस्तटीं परिसरमपि अवाप्ता गता सती हसान् नीरक्षीरविवेकवतो राजहसान् इव हसान् परमहसान् ज्ञानिनः सन्यासिनोऽपि शुद्धात् असम्पृक्तान् मायानवच्छिन्नात् अमृतात्तु-रीयाद्ब्रह्मणोऽपि तदेक्तानवृत्या अभित समन्तात् रुणद्धि तत आकृष्य कृष्णलीला-गोष्ठीम्प्रति आवर्ज्य ब्रह्माकाराकारितामप्यन्तःकरणवृत्तिं तत स्थगयति । यदा परमहसानामवाप्तब्रह्मानन्दसुखानामपि दशेय तदा प्रेमरसप्रवणाना पेशलाना भक्ताना तु का कथेति वर्ण्यस्य लीलाप्रसङ्गस्य ब्रह्मानन्दातिशायित्वस्य प्रतीयमानत्वादत्र गम्यो व्यतिरेकालङ्कार । हसान् इव हसानित्यत्र एरवृत्तगतफलद्वयन्यायेनाभङ्गश्लेष, शुद्धा-मृतेत्यत्रापि तथैव श्लेषस्तदनुप्राणितोपमालंकृति । अत्र विवादस्तु करादानव्याजेन प्रसक्ता प्रणयकलहगर्भा गोष्ठी राधामाधवयो सलाप इत्यवगन्तव्यम् ।

अत्र गोष्ठेन्द्रपदे इन्द्रशब्द आधिपत्यार्थे भाक्त, तत्सूनुपदेन बलराम व्यतिरिच्य केवल श्रीकृष्णस्याभिधानऽविशेषत्व दोष राधासयोगादभिधाया "साहचर्यं विरोधितेति" वचनात् कृष्णचन्द्रे नियमनात्परिहार्य । श्रोत्रमवाप्तेरयुक्त्वा तत्पदप्रदानेन गोष्ठ्या श्रोत्रपटल यावत्सन्निकर्षानपेक्षत्वरयापनद्वारा परिसरमात्रावगाहित्वेऽपि सुधातिशायिरसस्यन्दित्व वस्तु व्यज्यते । अत्र गुणरीता पूर्ववत् । अत्रेन्द्रवज्रा वृत्तम् — "स्यादिन्द्रवज्रा यदि तौ जगौ ग" — इति लक्षणात् ॥ ५ ॥

अथान्तराले नट सूत्रधारसहाय पारिपार्श्विक रङ्ग प्रविश्य आनन्दोल्लाससम्भृते यथा भवेत्तथा प्रस्तुतस्य अभिनयकलाकौशलस्य महिमानमुपवर्णयति —

**अवगणितेति** — इयं प्रस्तूयमाना नाट्यस्य अभिनयस्य कला कल्यति विविधान् भावान् असौ, वर श्रेष्ठ यद्राज्य तस्य श्रीर्लक्ष्मीरिव स्फुरति स्वमहिम्ना विजृम्भत इति प्रधान वाक्यम् । अत्र प्रकृतस्य नाट्यकलारूपस्य वस्तुन उपमेयत्व, राज्यश्रिय

---

**नटः** — ( प्रवेश कर, आनन्द मग्न हो )

[ कवि प्रस्तुत पद्य मे द्वयर्थकपदों से नाट्यकला की उत्तम राज्यश्री के वैभव से तुलना करते हैं । ]

**Actor :** ( *Enters joyfully* )

6. This dramatic art which rejects an abundance of Junctures, contains seven powerful subdivisions and is rich with twin excellent Bearings known as Bhāratī ( eloquent ) and Kaiśikī ( gay ) shines

उपमानत्वं तत्र स्फुरतेः साधारणधर्मता शेषाणां विशेषणानां श्लेषेणोभयपक्षे समन्वयः। तद्यथा – अवगणितः न्यक्कृतः सन्धीनां भूमा बाहुल्यं यस्यां सा – उपमेयपक्षे नाटकीयाः पञ्च सन्धयः मुख-प्रतिमुख-गर्भ-विमर्श-निर्वहणाख्याः तेषां भूमत्वमाधिक्यं यत्र तिरस्कृतं, प्रस्तुते उपरूपके केवलं मुखनिर्वहणयोरेवावकाशात्। उपमानपक्षे राज्यतन्त्रे स्वहितसाधनाय परैः मित्रैर्वा सार्धं मिथः सापेक्षत्वरूपं सन्धानं सन्धिः तद्बाहुल्यं वरे राज्यतन्त्रे निरपेक्षत्वादनादृतम्। अपि च बलिष्ठानि दृढानि सप्त अङ्गानि यस्यां सा – उपमेयपक्षे भाणिकायाः सप्त अङ्गानि [ नाट्यलक्षणरत्नकोशे ] —

"उपन्यासोऽथ विन्यासः विरोधः साध्वसं तथा।
समर्पणं निवृत्तिश्च संहारश्चापि सप्तमम्॥" इति बीजस्योपक्रमादारभ्य कार्यस्य निर्वहणपर्यन्तं सज्यन्ते। उपमाने राज्यश्रियि राज्यतन्त्रस्य सप्त प्रकृतिरूपाण्यङ्गानि "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि" चेति। उभयत्र सप्ताङ्गानां बलिष्ठत्वं समानम्। अपि च परमसुवृत्तियुगाढ्या – उपमेयपक्षे परमयोः उत्कृष्टयोः सुवृत्त्योः भारतीकैशिकीवृत्त्योः युगेन द्वयेन आढ्या स्फीता परिपुष्टेति भावः। प्रस्तुते उपरूपके वृत्तिचतुष्टये केवलं द्वयोरेव प्रयोगात्। राज्यश्रीपक्षे पदच्छेदेन अन्वयो यथा – परमया सुवृत्त्या शोभनेन न्याय्येन व्यवहारेण युक्ता इति परम-सुवृत्तियुक् (क्विप्प्रत्ययः) अत एव आढ्या धनधान्यसमृद्धिमतीति तात्पर्यम्। एवं-विधगुणप्रकर्षशालिनीयम् अस्माकं नाट्यकला वरराज्यश्रीरिव विभातीति कलाया उत्कर्षख्यापने कवेराकूतम्।

अत्रेदमवधेयं यदादौ सतां मण्डलीं तद्गुणानुवादैः प्रशस्य सामाजिकानां सहृदयत्वं ख्यापितं, तदनन्तरं वर्ण्यस्य राधामाधवकेलिचर्याप्रसङ्गस्य विलक्षणत्वख्यापनद्वारा रसिकरञ्जकत्वं विज्ञापितं, ततः नाट्यकलायाः प्राशस्त्यख्यापनेन अभिनये आहार्याङ्गिक-सात्त्विकवाचिकमण्डिते कलाकौशले आत्मनो दक्षत्वं प्रख्याप्य सर्वतः सामाजिकानां नाट्यं प्रति उन्मुखीकरणादत्र प्रघट्टे प्ररोचनाख्यं भारतीवृत्तेरङ्गमुपन्यस्तं भवति– "उन्मुखीकरणं प्रशंसातः प्ररोचनेति" लक्षणात्। अत्र त्रिविधमपि प्ररोचनानिमित्तं कविवरेण भङ्गिविशेषेणो-द्दर्शितं, तदेवाभिधया रत्नावल्यां श्रीहर्षेण— "श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी, लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम्" इत्यभाणि। तदपेक्षयात्र

---

जिस प्रकार एक समृद्ध राज्य, इतर राज्यों से सन्धि की अपेक्षा न रखते हुए, स्वामी-मन्त्री सुहृत्-कोश प्रभृति राज्य के सप्ताङ्ग से बलिष्ठ हो अत्यन्त सदाचार पूर्ण व्यवहार के कारण समृद्धि से भरपूर राज्यश्री से शोभमान होता है उसी प्रकार कवि की प्रस्तुत नाट्य-कला भी, नाट्यशास्त्रोक्त पञ्च-सन्धि के विन्यास की परवाह न कर, उपन्यास-विरोध-साध्वस आदि सातों ही भाणिकाङ्गों से सुसज्जित तथा भारती तथा कैशिकी वृत्तियों से समृद्ध हो, लोक-रञ्जक हो रही है॥ ६॥

---

brilliantly like the glory of a flourishing state which ignores treaties, maintains the seven powerful constituents of the state and a well-developed diplomacy, and is rich in resources.

सूत्रधारः — भोस्ताण्डवचर्यापाण्डित्यपारङ्गत ! सम्यगभिज्ञातं यदेष नियोगेन सुहृदामुपरूपकभिदां दानकेलिकौमुदीं नाम भाणिकामभिनेतुमुद्यतोऽस्मि। तदत्र निजाभीष्टदैवतानुस्मरणमङ्गलमाचरेयम्। (इत्यञ्जलिं कृत्वा[1])

---

प्ररोचनाङ्गविन्यासः आमुखं विच्छित्तिविशेषेण पुष्णातीति सचेतसः प्रमाणम्। पद्येऽस्मिन् श्लेषानुप्राणिता पूर्णोपमा काव्यलिङ्गञ्च। मध्यमपाञ्चाली रीतिः बन्धस्यैपत्प्रौढत्वात्, पेशलेन ओजसा गुणेनोपस्कृतत्वाच्च। अत्र आर्याजातिः ॥६॥

तत. सूत्रधारो नटं सम्बोधयति भोस्ताण्डवेति — भोः इति सम्बोधनेऽव्ययम्। ताण्डवस्य नृत्यकलाया या चर्या आचारकल्पः तस्यां पाण्डित्ये नैपुण्ये पारङ्गत. विशिष्टः तत्सम्बुद्धौ हे —°पारङ्गत। पारङ्गतेतिविशेषेणेन पाण्डित्येऽवूपारत्वारोपः परम्परितः। नृत्यं द्वेधा – तत्र ताण्डवस्तु हरेणोद्भावितं पुरुषोपपाद्यं नृत्यमुद्धतम्, गिरिजोद्भावितं ललितं स्त्रीजनसाध्य लास्यम्। सम्यक् याथातथ्येन अभिज्ञातं विदितं त्वया यदेष अहं सुहृदां नियोगेन आदेशेन उपरूपकाणा भिदाः भेदा· प्रकार-विशेषास्तासां मध्ये (अत्र निर्धारणे षष्ठी) दानस्य करदानव्याजेन देहार्पणनिमित्ता केलि नर्मलीला तां कौमुदीव प्रकाशयन्तीं प्रेक्षकाणामाह्लादयित्रीं दानकेलिकौमुदीं नाम भाणिकां रूपकस्य भाणाख्यस्य लघीयसीं कृतिं भाणिकां नाम अभिनेतुं सामाजिकानां पुरत. आहार्यादिभिनयाङ्गैः दृश्यकर्मीकर्त्तुम् उद्यत· सन्नद्धोऽस्मीति। तत् तेन हेतुना अत्र प्रक्रान्ते कर्मणि निजस्य आत्मन· अभीष्टस्य आराध्यस्य दैवतस्य अनुस्मरण नामगुणकीर्त्तनरूपं मङ्गलं श्रेयःकल्पम् आचरेयमित्यत्र विध्यर्थे लिङ् अवश्यमनुष्ठेयत्वात्। मङ्गलमिदं नाट्यारम्भसूचिकाया नान्द्या व्यतिरिक्तं कविकृतम् — प्रस्तूयमानम्मङ्गलाचरणं सूत्रधारकृतमभिनेयसाफल्यफलकम्। तत्र आत्मनोऽभीष्टदेवतां प्रति प्रह्वीभावं गमयितुं तदनुभावरूपम् अञ्जलिबन्धं करसंयोगरूपं विधायाभिप्रेतं

---

सूत्रधार — अहो ! उद्धत नृत्यकला में निष्णात सौम्य ! तुम मेरा अभिप्राय ठीक समझे ; मैं अपनी मित्रों की प्रेरणा से, उपरूपकों के अन्तर्गत 'दान-केलि-कौमुदी' नामक भाणिका का अभिनय करने के लिये उद्यत हुआ हूँ। अत· इस प्रसङ्ग पर मैं अपने इष्ट देव का स्मरण द्वारा मङ्गलाचरण करता हूँ ॥ (अञ्जलि बाँधकर)

**Stage Manager :** Well ! You – the well-versed in the art of (horrific) dance – have rightly understood that under the behest of my friends, I am set on enacting a wee-monologue, a type of sub-shows called, Dāna-keli-kaumudī I should, therefore, invoke the blessings by paying homage to my favourite deity.

*(folding his hands)*

---

1. बद्ध्वा — इति पाठभेद।

नामाकृष्टरसज्ञः शीलेनोद्दीपयन् सदानन्दम् ।
निजरूपोत्सवदायी सनातनात्मा प्रभुर्जयति ।।७।।

मङ्गलमाचरति —

**नामाकृष्टेति** — सना सदा भवः इति सनातनः – सदार्थे सना इति अव्ययम् तस्मात् "सायंचिर°–" इति सूत्रेण ( पा. ४।३।२३ ) ट्युप्रत्ययस्तुडागमश्च, शाश्वत इत्यर्थः । निरन्तरः आत्मा स्वरूपं यस्य स सनातनात्मा, प्रभुः प्रभवतीति सर्वान्तर्यामी बुद्धिस्थ-प्रकारावच्छिन्नो भगवान् श्रीकृष्णो जयति सर्वोत्कर्षेण भ्राजते तं प्रति आनतोऽस्मीति भावः । यः श्रीकृष्णः नाम्नैव आकृष्टा रसज्ञाः भक्तिमाधुर्यरसग्राहिणः भक्ता गोप्यो वा अथवा रसज्ञा जिह्वा येन तादृशः अस्ति भक्तानां सदा जिह्वाप्रवर्त्तित्वात् "जिह्वे कीर्त्तय केशवम्" इति भक्तवचनात् । अपि च यः शीलेन स्वनिसर्गेण चरितेन च सदा नन्दम् स्वपितरं, सतामानन्दं वा, सदा आनन्दं सभ्येषु जनेषु वा उद्दीपयन् प्रोल्लासयन् , निजस्य आत्मनो रूपेण आकृतिविशेषेण उत्सवं महान्तं प्रहर्षं ददाति दर्शनमात्रेण तादृशः । प्रथमविशेषणेन कीर्त्तनस्य, द्वितीयेनानुध्यानस्य, तृतीयेण दर्शनस्य भगवतः सदा प्रमोदसन्ततिप्रदत्वं रयाप्यते । अत्र सनातनस्वरूपः प्रभुरालम्बनं तद्विषयिणी यत्कृगता स्थायिनी रतिः प्रह्वीभावानुभाविता ध्वन्यते ।

भङ्ग्यन्तरेण कविवरेण्यो रूपगोस्वामी कार्यारम्भे निजगुरुं सनातनाख्यमपि प्रणमति । वाङ्गभा इव चैतन्यसम्प्रदायधुरन्धरा गोस्वामिनः पूज्यार्थे प्रभुपदेन सम्बोद्ध्यन्ते इति

---

[ प्रस्तुत पद्य द्वारा कवि इष्ट देवता भगवान् श्रीकृष्ण को एवं गम्यरूप से अपने अग्रज श्रीसनातन गोस्वामी को प्रणाम करते हैं । ]

वे सनातन स्वरूप भगवान् श्रीकृष्ण, जो अपने नामोच्चारण मात्र से रसिक भक्त वृन्दों को तथा गोपिकाओं को अपनी ओर आकृष्ट कर लेते हैं, [ अथवा उनकी जिह्वा को अपने मङ्गलमय नाम कीर्तन में तल्लीन कर देते हैं, ] जो अपने शील से गोपराज नन्द को सदा आनन्दित करते रहते हैं [ अथवा अपने स्वभाव से दिव्य आनन्द को सदा अभिवर्धित करते रहते हैं ], एवं जो अपने अलौकिक स्वरूप से सुस्थिर सौख्य या सज्जनों के प्रमोद को प्रदान करते हैं, विजयी हों ।

---

7. Victorious is the eternal Lord ( Śrīkṛṣṇa ) who by his very name attracts the host of devotees ( or their tongues to repeat his name ) ; who, by virtue of his amiable conduct, always rejoices his father, Nanda ( or by his good qualities thrills the meritorious persons or fills them with ecstasy ) and is a source of joy ( to all ) through his personality. [ Through *double entendre* the poet makes obeisance to his *Guru* as well : I bow to the most excellent Sanātana Prabhu ( Gosvāmin ) whose very name attracts near him the throng of devotees who have taste for devotion and who always rejoices the good people by his very nature and makes his own person in me, by name, Rūpa ( Gosvāmin ) always festive ].

नटः — भाव ! पश्य ! पश्य !

गान्धारग्रामगुरोस्तव गान्धर्वविद्याप्रबन्धेन कुरङ्गधर्ममुपलम्भिता रसज्ञरत्न¹मण्डली नात्मानमपि अनुसन्धातुमसौ क्षमते ।

---

भक्तिमार्गे प्रशस्तम् । अत प्रभु पूज्यपाद 'सनातन' इति नाम्ना लोकव्यवहारे "अतति सातत्येन यावज्जीव गच्छतीति सनातन इति नाम्नाऽभिधीयमान , नामसु भगवन्नामसङ्कीर्तने आकृष्ट सत्पा रसज्ञा जिह्वा तादृशोऽथवा यस्य नामग्रहणमात्रेण रसज्ञा' भगवत्प्रेमास्वादिन स्वय यत्सन्निधावावृष्टा भवन्ति तादृश तत्साहचर्येण भक्तिपरिणामिता खलु भक्ताना सिद्ध्यतीति हेतो । पुनश्च स्वीयेन शीलेन कल्याणगुणशालिना चरितेन व्यवहारेण च सदा सता वा आनन्दमुद्दीपयन् जनयन् , निजस्तर्दीयमेव रूपमनुजत्वात् शिष्यत्वाच्च तादृश रूपमेव रूपसन्नामा रूपगोस्वामी प्रस्तुतरचनाकार तस्मै उत्सव महान्त प्रमोद ददात्यसौ निजरूपोत्सवदायी तादृश – अनेन रूपगोस्वामिना प्रभो सनातनगुरोरात्मनिर्विशेषत्व स्वस्य विज्ञाप्यते प्रचुरतरस्नेहभाजनत्वात् ।

अत्र रसज्ञ सदानन्द-रूप सनातनेति पदानामनेकार्थत्वम् सनातनप्रभु श्रीकृष्ण इव सनातनगोस्वामिप्रभुपाद इति औपम्यमूलोपमालङ्कार शब्दशक्त्युत्थो ध्वनिरेव । सनातनेतिप्रभुविशेषणत्वेनोपात्तात्पदात् स्वगुरोर्नामनिर्देशात् रूपपदाच्चात्मनाम्नोऽपि सूचनात् पद्येऽस्मिन् मुद्रालङ्कार "सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरै पदै" – इति चन्द्रालोकलक्षणात् । अत्र माधुर्यं गुण , आवन्ती रीति । छन्दश्च आर्याजाति ॥ ७ ॥

भावेति — नाटकीयसमुदाचारोऽयमेतद्यत्सूत्रधार पारिपार्श्वकेन नटेन भावेति सम्बोद्धव्य । बहुमानसूचकमिद सम्बोधनम् "सूत्रधार वदेद्भाव इति वै पारिपार्श्वक" इति वचनात् । पश्य पश्येति सम्भ्रमे द्विरुक्ति । सङ्गीतविद्याया त्रयो ग्रामा षड्जर्षभादय

---

[ वे सनातन नाम से प्रथित गोस्वामी ( ज्येष्ठबन्धु ), जो अपनी जिह्वा को भगवन्नाम के जप से तल्लीन किये हुए है, ( अथवा जिनका यह दिव्यनाम भक्तो को अपनी ओर उन्मुख किये हुए है ), जो अपने स्वभाव से सर्वदा आनन्द की अभिवृद्धि करते है तथा अपने ही स्वरूप कनिष्ठबन्धु मुझ श्रीरूप ( गोस्वामी ) को मङ्गलमय सुख प्रदान करते रहते हैं, सदा विजयी हो ] ॥ ७ ॥

नट — स्वामिन् ! देखो ' देखो '

गान्धार ग्राम में निष्णात ' आपकी गानविद्या के निदर्शन से प्रवर रसज्ञो की यह मण्डली हरिण जैसी मुग्ध हो अपने आपको भी भूल गई है ( स्वय का ध्यान रखने में भी असमर्थ हो रही है ) ।

---

**Actor :** Sir, Look ' by this specimen of the art of singing of yours – the master of the *Gāndharva* tune, this assemblage of connoisseurs, being committed to the temparament of the deer, are unable to remain conscious of themselves.

---

1. रत्नमिति क्वचिन्नास्ति ।

**सूत्रधारः — प्रकटितललितालंकृतगान्धर्वेयं महाविद्या ।**
**नान्दीमुखी न हि कथं रसिकेन्द्रानन्दिनी भविता ॥८॥**

---

तेषु गान्धारस्तृतीयो ग्रामः – "नाभेः समुद्गतो वायुर्गन्धश्रोत्रे च चालयन् । स शब्दस्तेन निर्याति गान्धारस्तेन कथ्यते ।" इति सङ्गीतदामोदरे । "द्वे गान्धारनिषादयो-" रिति वचनाद्गान्धारग्रामे द्वे श्रुती भवतः । गन्धमृच्छतीति गान्धारः । श्रुत्यारब्धानुरणनात्मकानां स्वराणां सन्दोहो ग्राम इत्यभिधीयते । एतादृशस्य "नानाविधाविष्कृतसामजस्वरः सहस्रवर्त्मा चपलैर्दुरध्ययः" इति ख्यातस्य ग्रान्धारग्रामस्य गुरोः निष्णातस्याचार्यस्य तव गान्धर्वविद्या गानविद्या तस्याः प्रबन्धेन सङ्गीतेन कुरङ्गो हरिणस्तस्य धर्मो निसर्गो गीतिमुग्धत्वम् उपलम्भिता [ उप + लभ् + णिच् + क्त + ङीप् ] प्रापिता वैवश्येन तादृशगतिमवापिता रसज्ञानां सहृदयानां मण्डली गोष्ठीयम् आत्मानमपि अनुसन्धातुं लक्षितुं न क्षमते प्रभवति रसभावमुग्धा सती स्वमपि विस्मरन्ती विवशतां गता रसैकतानत्वादिति कलाप्रकर्षः । सूत्रधाराभिनन्दनपरमिदं नटस्य वचः प्ररोचनाङ्गत्वेनामुखमुपस्करोति ।

ततो गान्धर्वविद्यायाः महिमानं द्रढयितुं सूत्रधारः सोपपत्तिकमाह —

**प्रकटितेति** — इयं प्रस्तूयमाना प्रकटितं स्फुटीकृतं ललिता नाम सङ्गीतालकृतं यस्मिन् तादृशं गान्धर्वं–( प्रज्ञादित्वादण् ) – गानं यया सा । इदं च ललितालंकृतम् – ललिता नाम सङ्गीतालङ्कारः । असौ वसन्तरागस्य रागिणी...."ललिता चाथ हिन्दोली वसन्तस्य वराङ्गनाः" इति सङ्गीतदर्पणे । सा च द्विविधा – प्रथमा 'रि-प-वर्ज्या ललितेति' लक्षणात्, द्वितीया च "धैवतत्रयसंयुक्ता द्वितीया ललिता भवेदिति"–वचनात् । अपि चेयं महाविद्या महती विद्या गानकला यस्यां तादृशी, नान्दी आनन्ददायि गेयं मुखे यस्याः सा नान्दीमुखी मधुरसङ्गीतिः कथं हि नाम रसिकेन्द्राणां सहृदयधुरीणानाम् आनन्दिनी प्रहर्षिणी न भविता अपि त्ववश्यं भवितेति तात्पर्यम् ।

गानविद्याप्रशंसाप्रसङ्गेन स्वरचितामधुनाभिनीयमानां भाणिकामपि स्तौति – प्रकटितानि ललितानि मनोहारीणि अलंकृतानि नाट्यालङ्काराणि गान्धर्वाः गेयपदानि च

---

**सूत्रधार** — [ प्रस्तुत पद्य में सूत्रधार नाट्यकला की अनुरञ्जन क्षमता सिद्ध करते हुए नान्दीमुखी तथा प्रस्तुत भाणिका की भी वैसी ही क्षमता को व्यञ्जना से इंगित करते हैं । ]

ललिता नामक सङ्गीतालङ्कारों से युक्त गान्धर्वविद्या को प्रकट करनेवाली, मङ्गलगायन से प्रारम्भ होनेवाली, मोहिनीशक्ति से सम्पन्न महाविद्यास्वरूपिणी नाट्यकला क्यों कर रसज्ञों में प्रमुख सहृदयों को प्रमुदित करने वाली न होगी !

---

Stage-Manager : 8. Oh well ! why should this great art of mimetics dressed with songs in the graceful (*Lalita*) tune commencing with an auspicious ditty, fail to please the foremost among the men of taste ! i. e., it is bound to please them.

यस्यां सा, अथवा प्रकटिता भरतोक्तदिशा नायिकाचतुष्टयान्यतमा ललिताख्या तया अलंकृता सुशोभिता गान्धर्वा· गानविद्यानिपुणा ललना यस्यां सा, दानलीलाप्रसङ्गस्य मोहनमन्त्ररूपत्वात् तद्वर्णिनी इयं भाणिका महातन्त्ररूपा, नान्दी मङ्गलगानं मुखे प्रारम्भे यस्या. सा नान्दीमुखी सती कथं रसिकेन्द्राणाम् आनन्दिनी हर्षप्रदा न भविता, नूनं भवितेति तात्पर्यम्। भवितेति भूधातोर्लुट् आशंसायाम् नत्वयतने।

अपि चास्य भाणिकाया मुख्यं वस्तु मुख्यानि पात्राणि चोद्दिश्य प्राह सूत्रधार· यत् इयं नान्दीमुखी नाम राधिकाया प्रियसखी गान्धर्विका महाविद्या नर्मप्रसङ्गकुशला दूतिकर्मणि निपुणा, ललितया तदाख्यया गोपिकया अलंकृता वेषभूषाविन्यासेन प्रसाधिता गान्धर्वा गन्धर्वाङ्गनेव रूपवती राधिका प्रकटिता दृष्टिपथं नीता यया सा रसिकेन्द्रस्य श्रीकृष्णचन्द्रस्य आनन्दिनी मोदप्रदा कथं न भवितेत्यर्थः। ललिता-श्यामला-शैव्या-पद्मा भद्रेति श्रीराधायाः प्रमुखसख्य इति भक्तिरसामृतसिन्धौ 'अखिलरसामृतेति' पद्यस्य टीकायां जीवगोस्वामिनः। अथवा प्रकटितं श्रुतिपथं नीतं ललितया राधिकया अलं तृप्तिपर्यन्तं कृतं गान्धर्वं गानं यया तादृशी नान्दीमुखी। ललिता एव राधिकेत्यत्र पद्मपुराणे पातालखण्डे रासलीलाप्रसङ्गे नारदं प्रति स्वयं श्रीकृष्णस्य "या दुर्गा सैव ललिता, ललिता सैव राधिका। एतासामन्तरं नास्ति सत्यं सत्यं हि नारद" इति वचनस्य प्रामाण्यम्। गान्धर्वेति राधिकानामेति आनन्दचन्द्रिकायां चक्रवर्तिनः।

अत्र नैकार्थावगाही सर्वत्र शब्दशक्त्युत्थो ध्वनि, ललिता-नान्दीमुखी-गान्धर्वेति पात्राणां नामकीर्तनान्मुद्रालङ्कार.। अर्थापत्तिश्च। प्राचां मतेऽत्र श्लेषो नामार्थगुण। लाटी रीतिः। आर्याजाति· ॥ ८ ॥

---

अथवा

[मनोहारी नाट्यालंकारों से विभूषित, विविध गेयपदों को प्रस्तुत करने वाली, नान्दी से प्रारम्भ होने वाली कृष्णलीला के वर्णन के कारण महती तन्त्रविद्यास्वरूपिणी यह भाणिका सहृदयों में प्रमुख कलाकोविदों के लिए आनन्ददायिनी क्यों न होगी (अपितु अवश्य होगी।) ॥८॥

अथवा

[ललिता नामक सखी के द्वारा अलंकारों से सुसज्जित गान्धर्विका श्री राधिकाजी को सम्मुख लाने वाली तथा नर्मव्यापार में परम निष्णात नान्दीमुखी गोपिका [आज] रसिकों में शिरोमणि कृष्णचन्द्र को क्योंकर आनन्द देनेवाली न होगी? (अवश्य होगी) ॥८॥

[Again, Why should not this piece under enactment, become pleasing to the house full of persons possessed of poetic sensibility, which is rich with fascinating figures of speech and beautiful songs, is a book on the secrets of enchantment and opens with songs of benediction ]

(Then again it suggests – why should not this Nāndimukhī, the great artist who presents Rādhikā (Gāndharvā) decorated by her friend Lalitā, please Śrī Krsna, the topmost of connoisseurs !)

( नेपथ्ये )

साधु भोः ! कुशीलवाचार्य ! तथ्यं कथयसि ! यदद्य नान्दीमुखी गान्धर्विकामावेद्य रसिकवृन्दमौलेर्व्रजेन्द्रनन्दनस्य चिरमानन्दाय भवित्री ।

सूत्रधारः — कथं वनदेवीयं वृन्दा सुबलेन सार्धमित एवाभिवर्तते । तदत्र नाट्ये नटान्नियोक्तुमितः प्रयावः ।

---

नेपथ्य इति — वक्ष्यमाणेयमुक्तिर्जवनिकान्तरात् नटानां वेषग्रहणस्थलात् सम्बोधनपूर्वकमुच्यते । साधु प्रशंसापरं वचनम् । भोः कुशीलवानां भरतानामभिनेतॄणाम् आचार्य प्रमुख ! तथ्यं सत्यं वचः कथयसि – ( सत्यार्थकात् तथयतेः यतप्रत्ययान्तं तथ्येतिपदम् अथवा तथा + यत् ) यद् अद्य नान्दीमुखी गान्धर्विकाया गायिकायाः भावे भूमिकायां गायिकारूपेण वर्तमाना रसिकवृन्दस्य मौलिरियं सहृदयमूर्धन्यस्य व्रजेन्द्रस्य नन्दगोपस्य नन्दनस्य श्रीकृष्णस्य चिरमानन्दाय भवित्री प्रमोदं सम्पादयित्री । आनन्दायेति सम्पद्यमानेऽर्थे चतुर्थी । अत्रावस्यन्दितं नाम वीथ्यङ्गम् । इयं नेपथ्योक्तिः चूलिकानाम्ना अर्थोपक्षेपकेणाभिधेयं वस्तु विज्ञापयति – "अन्तर्जवनिकासंस्थैश्चूलिकाऽर्थस्य सूचनम्"– इति लक्षणात् ।

सूत्रधारः कथमिति वितर्के । इयं वनदेवी वृन्दारण्याधिष्ठात्री वृन्दा सुबलेन तन्नामकेन गोपबालेन सार्द्धम् इत एव अस्मिन् एव उद्देशे अभिवर्तते परिक्रामति । तदत्र अत एवास्मिन् नाट्येऽभिनये नटान् पात्राणि नियोक्तुं व्यापारयितुम् इतः प्रयावः गच्छावः । अत्रेति – ( सप्तम्यर्थे त्रल् ) नाट्यस्य विशेषणम् ।

इत्युक्त्वा निष्क्रान्तौ रङ्गभूमितोऽपक्रान्तौ नटः सूत्रधारश्च ।

इति प्रस्तावना स्थापनापरपर्याया आमुखं नाम भारतीवृत्तेरङ्गम् । तल्लक्षणं तु—

"नटी विदूषको वापि पारिपार्श्वक एव च । सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा"॥इति यत्र सूत्रधारेण प्रस्तुतो विषयः समाक्षिप्यते सा प्रस्तावना । इयञ्च प्रस्तावना एकस्मिन्

---

[ नेपथ्य में ]

बहुत ठीक, हे नटाचार्य ! तुम ठीक ही कह रहे हो । सचमुच, आज नान्दीमुखी गान्धर्विका श्री राधिका को प्रस्तुत कर रसिकमण्डली में प्रमुख व्रजेन्द्रनन्दन श्रीकृष्ण के लिए चिरकाल तक प्रमोद का निमित्त बनेगी ।

सूत्रधार — अहो ! वनदेवी वृन्दा सुबल को साथ ले, इसी ओर आ रही

*( Behind the curtain )*

Well, Oh the chief of Actors ! right you are. Surely, today Nāndīmukhī playing the rôle of a songstress ( or in the matter of presenting Rādhikā ) shall be the source of an enduring merriment to the prince of Brajaland.

**Stage-Manager :** How is it, the Dryad Vṛndā accompained

( इति निष्क्रान्तौ )

## प्रस्तावना

प्रयोगे नटसूत्रधारसंवादे नान्दीमुखीप्रकरणरूपस्य प्रयोगान्तरस्य प्रवेशात् तद्द्वारा सूत्रधारेण वृन्दा-सुबलयो पात्रयो प्रवेशात्प्रयोगातिशयरूपा – यदुक्त हि "यदि प्रयोग एकस्मिन् प्रयोगोऽन्य प्रयुज्यते । तेन पात्रप्रवेश स्यात्प्रयोगातिशयस्तदा ' इति दर्पणे । चक्रवर्त्तिनस्तु इमा प्रस्तावना कथोद्घातरूपामामनन्ति, "सूत्रिवाक्यं तदर्थं वा स्वेतिवृत्तसम यदा । स्वीकृत्य प्रविशेत्पात्र कथोद्घात स कीर्त्तित ॥" इति नाटकचन्द्रिकोक्त लक्षणञ्चाश्रयन्ते– तदत्र चिन्त्यमेव यत प्रस्तावनान्ते प्रविशत्पात्र वृन्दा "साधु भो – कुशीलवाचार्यति" पठती सुबल सम्बोधयति" – अत्र "साधु भो " इति नैव सूत्रिवाक्य न वा तदर्थं, तस्य नेपथ्यान्तस्थया स्वयं वृन्दयैव पात्रान्तरेण वा पठितत्वात्, नाप्यत्र स्वेतिवृत्तसमत्व मनागपि । साक्षात्सूत्रधारवचो गृहीत्वा स्वप्नवासवदत्ते यौगन्धरायणप्रवेशोऽथवा वेया स्व स्था भवन्तु" इति सूत्रिवच आदाय भीमसेनप्रवेशो जाघटीति – अत्र तु चूलिकयो पक्षिप्त वचो गृहीत्वा तदेव पुनरावर्तयन्ती वृन्दा प्रविशति, यस्या प्रवेश प्रयोगान्तररूपेण सूत्रधार "साधु भो " इत्यस्य पुन पाठात्पूर्वमेवावगमयति, यथा हि विक्रमोर्वशीय चूलिको पक्षिप्त वच 'आर्या परित्रायध्वमिति पुनराददाना अप्सरस प्रविशन्ति । पात्रप्रवेश सूत्रिवाक्यादन्यद्वाक्येन, नामोल्लेखपूर्वकश्च विहितोऽत्र, अत प्रस्तावनेय कथोद्घातलक्षण-विसंवादिनी प्रयोगातिशयरूपेति विभाव्यम् ।

॥ इति प्रस्तावना ॥

---

है ! अत अभिनय प्रस्तुत करने के लिए पात्रों को प्रयोजित करने के लिए अब यहाँ से चलते हैं । [ दोनों रंगमञ्च से चल जाते हैं । ]

॥ प्रस्तावना समाप्त ॥

---

by Subala is coming this way Hence let us go to put the actors on their way

[ *Exeunt* ]

INDUCTION ENDS

[ ततः प्रविशति सुबलेन समं सङ्कथयन्ती वृन्दा ]

**वृन्दा** — ( साधु भोः कुशीलवाचार्येति पठित्वा )

सुबल ! कथमेतयाऽपि मङ्गलवार्तया त्वमुत्फुल्लमुखो नाभिलक्ष्यसे ?

**सुबलः** — वृन्दे ! इमस्स प्रसंगस्स विसेस-विण्णान-सुण्णदाए मुद्धो विअ जातोह्मि, ता फुडं[1] कहिज्जऊ ।

[ वृन्दे ! अस्य प्रसङ्गस्य विशेषविज्ञानशून्यमुग्ध इव जातोऽस्मि । तस्मात् स्फुटं कथ्यताम् । ]

---

**ततः प्रविशतीति** — सुबलेन सहचरेण समं सह सङ्कथयन्ती मिथः आलपन्ती वृन्दा नाम वनदेवी रङ्गं प्रविशति, – साधु भोः कुशीलवाचार्येति नेपथ्यतः श्रुतां वाचमादाय आह च हे सुबल ! कथं केन हेतुना एतया प्रस्तुतया अपि मङ्गलस्य वार्तया राधामाधवयोः भवितृसमागमोदन्तेन ( श्रुतेनापि ) त्वम् उत्फुल्लमुखो विकसितवदनो न अभिलक्ष्यसे दृश्यसे इति प्रश्नः ।

अत्र मङ्गलवार्ताश्रवणे हेतौ सत्यपि स्फुटप्रहर्षरूपफलाभावे विशेषोक्तिः "कार्याजनिर्विशेषोक्तिः सति पुष्कलकारणे" इति चन्द्रालोकलक्षणात् । समं सङ्कथयन्तीत्यत्र सम्पूर्वककथयतेः सहालापरूपार्थकत्वे सममित्यस्य अधिकत्वादधिकपदता दोषः । उत्फुल्लस्य विकासार्थे शक्तत्वात् विकासस्य चेतःस्फीतेरनुभावत्वादत्रानुत्फुल्लेति पाठः साधीयान् भवेदित्यवधेयम् ।

सुबलः **वृन्दे इति** — अस्य प्रसङ्गस्य विषयस्य विशेषविज्ञानशून्यतया कोऽयमिति किमर्थकोऽयमिति विशेषस्वरूपस्य यद् विज्ञानं परिचयः अवगमो वा तेन शून्योऽहमिति हेतुना मुग्ध इव अज्ञाततत्त्व इव जड इव जातोऽस्मि, तस्मात् स्फुटं विशदं यथा स्यात्तथा कथ्यताम् प्रसङ्गः परिचाय्यताम् ।

---

[ सुबल के साथ बातचीत करती हुई वृन्दा का प्रवेश ]

**वृन्दा :** [ बहुत ठीक, हे नटाचार्य..........इन शब्दों को दुहराती हुई ] सुबल ! इस माङ्गलिक वार्ता को सुन कर भी तुम प्रसन्नवदन नहीं दीख रहे हो ?

**सुबल :** वृन्दा ! इस विषय की विशेष जानकारी न होने से मैं कुछ मुग्ध जैसा ( अनजान सा ) हो रहा हूँ । अतः इस प्रसङ्ग के विषय में मुझे कुछ स्पष्ट कहो ।

---

[ *Enters Vṛndā talking with Subala* ]

VṚNDĀ : ( *repeating the words 'Well-done! venerable singer'......* ) Subala, how is it that you do not seem to rejoice even at this auspicious news ?

SUBALA : For want of full information on the subject I have become a muff as it were ; please, therefore, tell me clearly all about it.

---

1. फुडं — इति पाठान्तरम् ।

वृन्दा — अद्य राधा सखीभिर्मण्डितसनीडा गोविन्दकुण्डरोधसि मखमण्डपे गुरूणामभ्यनुज्ञया हैयङ्गवीनं विक्रेतुम् अभिक्रमिष्यति । तदावेदयितुं नान्दीमुखी सान्दीपनेर्मातुरुपदेशेन मुकुन्दमुपलब्धा ।

सुबल —(सानन्दम्) वुन्दे ! एसा णिहिलमाहुरीवरीअसी राहिआ कथं एत्थ लहु अत्थि अत्थे गुरुअणेहिं अणुण्णादा ? [वृन्दे ! एषा निखिल माधुरीवरीयसी राधिका कथमत्र लघुतरे अर्थे गुरुजनैरनुज्ञाता ?]

वृन्दा **अद्येति** – अद्य अस्मिन्नेव दिवसे राधा सखीभि मण्डित सनीड सामीप्यं यस्या सा सहचरीसमेता गोविन्दकुण्डस्य तदाख्यस्य वृन्दावने वर्त्तमानस्य सरस रोधसि तटे मखमण्डपे यज्ञशालायां गुरूणां गुरुजनकर्तृकया अनुज्ञया हैयङ्गवीन ह्यो दोहोऽस्येत्येतादृश नवनीत विक्रेतु ऋत्विग्भ्य मूल्येन दातुम् अभि समन्तात् क्रमिष्यति सञ्चरिष्यति । अत्र क्रमने गत्यर्थत्वात् अभिपूर्वकाच्चापि गतिबुद्धिप्रत्यवसानेति सूत्रेण मखमण्डपेतिपदे द्वितीयाग्रहण प्राप्तम् । तत्र सप्तम्यन्तप्रयोग मखमण्डपस्य गन्तव्यतयाऽभीप्सिततमत्वाभावं गमयति, नवनीतविक्रयव्याजेन तत्परिसरे सञ्चरणमात्रस्ये-वेप्सितत्वाद् माधवसाहचर्योपलम्भायेति मण्डपोत्तरं श्रूयमाणद्वितीयगतवक्रताऽवधेया । तत् वृत्तान्तमावेदयितु विज्ञापयितुं नान्दीमुखी नाम गान्धर्विका सान्दीपनिर्नाम वृन्दारण्यवास्तव्यो मुनिस्तस्य मातुरुपदेशेन प्रेरणया मुकु दमुपलब्धा समीप यातेत्यर्थ ।

सुबल सानन्दं प्रहृष्ट सन् आह **वृन्द इति** — अयि वृन्दे । एषा निखिला समग्रा या माधुरी चेतोद्रावि गुणसम्पत्ति तत्र वरीयसी प्रशस्ततरा राधिका लघौ नवनीतविक्रयेऽल्पीयसि फल्गुनि वा अथ कार्ये गुरुजनै वरिष्ठै अनुज्ञाता अनुमतेति विस्मयावहो विषय, आपातत अनौचित्यप्रसक्ते ।

---

वृन्दा नखशिखान्त सुन्दर आभूषणो से मण्डित सहेलियों को आसपास लेकर आज श्री राधिका अपने गुरुजनों की अनुज्ञा से गोविन्दकुण्ड के तट पर रचित यज्ञमण्डप के चारो ओर नवनीत विक्रय के लिए परिभ्रमण करेगी। इस विषय की सूचना देने के लिए महर्षि सान्दीपिनी की माता के कहने से नान्दीमुखी मुकुन्द के पास गई है।

सुबल : (प्रसन्नतापूर्वक) वृन्दा ! साङ्गोपाङ्ग रमणीयता में कहीं श्रेष्ठ राधिका को इस साधारण से कार्य के लिए क्योंकर गुरुजनों द्वारा अनुमति दी गई ?

VRNDĀ Today Rādhā with her full train of lady friends will, with the permisson of her elders, go round the sacrificial booth at the banks of the Govinda Kunda for selling fresh butter (to the priests) To inform this Nāndimukhī has gone to contact Mukunda under the instructions of Sandīpini's mother

SUBALA (*with joy*) Vṛndā ! how is it that this most excellent Rādhā, all *sweetness incarnate*, is permitted by the elders to go on such a small errand ?

वृन्दा — यदहनि हवनीयं हारि हैयङ्गवीनं
　　　　स्वयमिदमुपहार्यं गोदुहामङ्गनाभिः ।
　　उपहरणकरीणामप्यभीष्टार्थसिद्धिः
　　　　मुनिभिरभिहिताऽस्य प्रक्रियेयं मखस्य ॥९॥

सुबलः — एरिसो सो कस्स महन्तस्स महो । [ ईदृशोऽसौ कस्य महतो मखः ] ।

---

तत्र वृन्दा समाधत्ते **यदहनीति** – यदहनि यस्मिन् दिवसे हवनीयं होमार्थकं हारि प्रत्यग्रत्वान्मनोहारि हैयङ्गवीनं नवनीतं स्वयमेव गोदुहां गोपानामङ्गनाभिः उपहार्यं यज्ञशालायामानेतव्यम् तस्मिन्नहनि उपहरणकरीणां नवनीतानेत्रीणामङ्गनानामपि अभीष्टस्य स्वमनोरथस्य सिद्धिरवाप्तिः नूनं स्यादिति अस्य प्रक्रान्तस्य मखस्य इयं पूर्वोक्ता प्रक्रिया कल्पः मुनिभिः अभिहिता प्रथिता । मनोरथावाप्तिफलकोऽयं महामखः अतस्तत्र नवनीतोपहरणं नामार्थः लघुर्नास्ति इति भावः ।

अत्र हकार-नकार-रेफाणां वृत्त्यनुकूलमसकृदावर्त्तनात् रम्यो वृत्त्यनुप्रासालङ्कारः । प्रसादो गुणः, वैदर्भी रीतिः, श्रुतिसुखो बन्धः । वृत्तञ्च मालिनी – "न-न-म-य-य-युतेयं मालिनी भोगिलोकैरिति" लक्षणात् ॥९॥

सुबलः **ईदृश इति** — ईदृशः सविशेषफलप्रदः असौ कस्य महतः गौरवशालिनो विशिष्टशिष्टस्य ( कर्त्तरि षष्ठी ) मखः । केन महता जनेनोपक्रान्तोऽयं यज्ञः यत्रैतादृशाः समवेता मुनयः सकलार्थावाप्तिफलं दिशन्तीति साकूता पृच्छा ।

---

वृन्दा : जिस दिन गोपाङ्गनाओं द्वारा ( हविष्य के लिए ) यह अत्यन्त हृद्य नवनीत स्वयं लाकर ( यज्ञशाला में ) उपस्थित किया जाना है उस दिन नवनीत लाने वाली अङ्गनाओं को भी अपने अभीष्ट मनोरथ की प्राप्ति होगी — महर्षियों ने इस यज्ञ का यही भव्य विधान निर्दिष्ट किया है ॥९॥

सुबल : तो ऐसे महायज्ञ का किस महापुरुष ने शुभारम्भ किया है ?

---

VṚNDĀ : 9. The day on which this savoury, fresh butter is to be personally offered (at the sacrifice) by the cowherd women, the wish of even those who carry it there will be fulfilled. Such is the order (promise) of this sacrifice declared by the sages.

SUBALA : Which is that great man who performs such a sacrifice ?

वृन्दा — सुगृहीतनामधेयस्य आनकदुन्दुभेः ।

सुबल — महुपुरं मुञ्चिअ कहं वणमज्झे तिणा आरम्भिदो जण्णो ?
[ मधुपुरं त्यक्त्वा कथं वनमध्ये तेनारब्धो यज्ञः ? ]

वृन्दा — जीवति वसहतके क्व मथुरायां तस्य यज्ञसिद्धिः, अतस्तेनात्र भागुरिर्नाम गर्गस्य जामाता स्वप्रतिनिधिर्न्यधायि ।

सुबल — फुड आहिआरिओ एसो जण्णो । [ स्फुटमाभिचारिक एष यज्ञः ]।

---

वृन्दा सुगृहीतेति — सुगृहीतं नामधेयं यस्य तादृशस्य पुण्यश्लोकस्य आनकदुन्दुभेः श्रीकृष्णजनकस्य वसुदेवस्य, तदुपक्रान्तोऽयमित्यर्थः ( अत्रापि कर्तरि षष्ठी )।

सुबल मधुपुरमिति — वसुदेवस्य वास्तव्यं मधुपुरं मथुरेति नगरं तत् त्यक्त्वा कथं वनमध्ये वृन्दारण्येऽस्मिन् तेन यज्ञः आरब्धः प्रक्रान्तः इति हेतुविशेषजिज्ञासा ।

वृन्दा जीवतीति — कंसो नामोग्रसेनस्य तनयः राज्ये प्रतिषिद्धयज्ञादिकर्मजातः दुष्टतमो मधुराधिपतिः स एव हतकः नीचः, तस्मिन् जीवति सति मथुरायां यज्ञस्य निर्विघ्नतया सिद्धिः साकल्येनानुष्ठानं क्व सम्भाव्यते इति शेषः । अतः तेन तत्रभवता वसुदेवेन अत्र वृन्दावने भागुरिर्नाम गर्गस्य नन्दोपाध्यायस्य जामाता दुहितृपतिः स्वप्रतिनिधिः स्वस्थाने यजमानरूपेण न्यधायीति निपूर्वकदधातेः लुङि रूपम् कर्मणि । अत्र-°गुरिर्गर्ग — निधिर्न्यधेति सकृदावर्तनाद्वर्णानां छेकानुप्रासालङ्कारो विदग्धप्रियः ।

सुबल स्फुटमिति-एवं गोपनायतयानुष्ठीयमानत्वं मखस्य दृष्ट्वा तर्क्यते यदेष यज्ञः स्फुटं स्पष्टरूपेण आभिचारिकः अभिचारः शत्रुनाशस्तमुद्दिश्य कृतः ( ठन् प्रत्ययः ) इति भाति ।

---

वृन्दा यह माननीय श्री वसुदेवजी का यज्ञानुष्ठान है ।

सबल मथुरा नगरी को छोड़ उन्होंने इस वन में किस प्रयोजन से यज्ञारम्भ किया ?

वृन्दा दुष्ट कंस के जीवित रहते, मथुरा में उनकी यज्ञसिद्धि कैसे हो सकती है ? अत एव उन्होंने उपाध्याय गर्ग के जामाता भागुरि को ( यजमान के स्थान पर ) अपना प्रतिनिधि बनाया है ।

सुबल प्रतीत होता है यह यज्ञ आभिचारिक ( शत्रुनाश के लिए ) है ।

VRNDĀ The man blessed with the famous name, Vasudeva

SUBALA Why did he start the sacrifice in a forest leaving the city of Mathurā ?

VRNDĀ So long as the vile Kamsa is alive how can he accomplish his sacrifice at Mathurā ? That is why he has appointed Bhāguri, the son in law of Garga, to represent him ( as *Yajamana* ) to perform the sacrifice here

SUBALA Evidently, the sacrifice is malefic

वृन्दा — नहि नहि किन्तु शान्तिकोऽयम्, यत्र सुतादप्यधिकस्य मित्रसूनोः कृष्णस्य स्वपुत्रस्य च रामस्य निखिलानिष्टशान्तिः फलम्।

सुबलः — (क्षणं विभाव्य सकौतुकम्) पिअवअस्सस्स सुइरं हिअ-अट्ठिदा सा गरिट्ठा केलिघट्टाहिआरिदानुरुवस्स राहिआपहुदीहिन्तो दाणग्गहविलासस्स लालसा अज्जच्चेअ सिद्धा। [प्रियवयस्यस्य सुचिरं हृदयस्थिता सा गरिष्ठा केलिघट्टाधिकारितानुरूपस्य राधिकाप्रभृतिभ्यो दानग्रहविलासस्य लालसा अद्यैव सिद्धा।]

---

वृन्दा सुबलोक्तिं प्रतिषेधति – **नहि नहीति** वीप्सायां द्विरुक्तिः। अयं यज्ञः शान्तिकः शान्तिं दुरितोपशमं लक्ष्यीकृत्य क्रियमाणः यत्र यस्मिन् कर्मणि सुतादप्यधिकस्य पुत्रापेक्षयाऽपि प्रेयसः मित्रसूनोरुपकारित्वात्सुहृदो नन्दगोपस्य सूनोः कृष्णस्य स्वपुत्रस्य रामस्य बलदेवस्य च निखिलानाम् अनिष्टानां शान्तिः फलमस्तीति शेषः।

सुबलः क्षणं विभाव्य वस्तुस्थितिमाकलय्य सकौतुकं प्रसादगर्भौत्सुक्येनाह **प्रियवयस्येति** – प्रियो यो वयस्यः श्रीकृष्णचन्द्रस्तस्य सुचिरं सुदीर्घकालेन हृदयस्थिता अभिलष्यमाणा, केलिघट्टः क्रीडास्थानकं तस्याधिकारितायाः स्वाम्यस्यानुरूपः यः राधिकाप्रभृतिभ्यः व्रजसुन्दरीभ्यः दानग्रहविलासः करादानमधुरप्रसङ्गः तस्य लालसा बलवती उत्कण्ठा अद्यैव कालातिपातमन्तरा सिद्धा इति प्रमोदविषयः। बहोः कालात् कृष्णहृद्गतस्य मनोरथस्य राधिकादानग्रहणरूपस्याद्यैव सिद्धिरिति सम्यगूहः।

---

वृन्दा : नहीं नहीं; यह तो शान्तिक कर्म है। अपने पुत्र से कहीं अधिक प्रिय अपने मित्र नन्दगोप के पुत्र कृष्ण तथा अपने पुत्र बलराम का अनिष्ट निवारण ही इस अनुष्ठान का प्रयोजन है।

सुबल : (क्षण भर सोचकर – बड़े कौतुक के साथ) तो फिर मेरे प्रिय मित्र श्रीकृष्ण के हृदय में चिर काल से गुरुतर रूप में विद्यमान लीलाघाट के अधिकारी के नाते श्रीराधा आदि गोपवनिताओं से कर ग्रहण (चुंगी-वसूली) की लालसा आज ही पूर्ण होगी!

---

VRNDA : No, no. this is propitiatory. The benefit arising from the performance of this sacrifice is the removal of all probable calamities from the lives of his son, Balarāma and his friend's son, Kṛṣṇa, who is dearer to him than his own son.

SUBALA : (*reflecting a moment — with curiosity*) then, our dear friend's long cherished ardent desire, as toll-gate officer, to enjoy the sport of collecting taxes from persons like Rādhā and others is fulfilled today itself!

वृन्दा — सुवल ! [1]भवद्विधानामपि निधानायते सा दानलीला। तदेहि मानसगङ्गातीरमवतराव। (इत्युभौ तथा कुरुत )

सुवल — वुन्दे, वणान्तराले अकराला मरालाण धुनिधोरणी धुणीदाहिणे सुणिज्जइ। (वृन्दे ! वनान्तराले अकराला मरालाना ध्वनिधोरणी धुनीदक्षिणे श्रूयते।)

वृन्दा — नाय मरालाना ध्वनि. किन्तु पशुपालबाला-तुलाकोटीनाम्।

---

वृन्दाऽप्यभिनन्दती प्राह सुवलेति — भवद्विधानां युष्मादृशां कृष्णसुहृदामपि कृते सा दानलीला शुल्कग्रहणव्याजेनोपात्ता केलि निधान सर्वस्वमिवाचरतीति निधानायते (आचारार्थे क्यङ्)। युष्माकमपि तत्र विषये तावदेवोत्साह, अत एहि आगच्छ मानसगङ्गायास्तीरमवतराव उपकण्ठ गच्छाव (लोट्)। अत्र क्यङ्गतोपमा।

[इति उक्त्वा उभौ वृन्दासुवलौ तथा कुरुत गङ्गातीरम्प्रति प्रस्थितौ।]

सुवल वृन्द इति — वनान्तराले अस्मिन् वनमध्ये अकराला सरला मनोहारिणी मरालानां हसानां ध्वनिधोरणी निनादस्याविच्छिन्ना सरणि, धुनी नदी अत्र मानसगङ्गा तस्या दक्षिणे पार्श्वभागे श्रूयते इति। अत्र रम्यो वृत्त्यनुप्रास। नदीसामान्यवाचकेन धुनीपदेनात्र बुद्धिस्थत्वात् मानसगङ्गाऽवगन्तव्या, अन्यथा अविशेषाख्यदोष प्रसज्येत।

वृन्दा — नायमिति। अय श्रूयमाणो ध्वनिर्निनाद मरालाना न, अपि तु पशुपाला गोपा तथा बालाना षोडशवर्षदेशीयाना कन्यकाना तुलाकोटीना नूपुराणामयं

---

वृन्दा सुवल ! तुम जैसे सखाओं के लिए भी तो यह दान लीला निधि के समान महत्व रखती है। तो आओ, हम मानसगङ्गा के तीर जा पहुँचें।
(दोनों का प्रस्थान)

सुवल वृन्दा ! इस वन प्रदेश के बीच नदी के दक्षिण भाग की ओर हसों की मधुर ध्वनि लगातार सुनाई दे रही है।

वृन्दा यह हंसों का कल निनाद नहीं है — यह तो गोप बालाओं के नूपुरों की ध्वनि है।

---

VRNDĀ For persons like you also that sport (*dana lila*) will serve as a treasure So come, let us go to the bank of the Manasa Gaṅgā *(So they do)*

SUBALA Vrndā ! sweet sounds of herons are being heard in an uninterrupted series from the interior of the forest on the southern side of the river

VRNDĀ This is not the sound of the herons, but that of the anklets of the cowherd girls

---

1 मद्विधानामिति पाठान्तरम्।

( पुनर्निरूप्य सानन्दम् )

शोणे मण्डितमूर्ध्नि कुण्डलतया क्लृप्ते दुकूलोत्तमे
न्यस्तां स्वर्णघटीं वहन्त्यचटुलां हैयङ्गवीनोज्ज्वलाम् ।
दूरे पश्य तथाविधाभिरभितः स्मेरा सखीभिर्वृता
राधा मानसजाह्नवीतटभुवं स्वैरं परिक्रामति ॥१०॥

---

रवः । "तुलाकोटिर्नूपुरे शोणे दुकूलोत्तमे" इति कोषः । तत्र विशेषं परिज्ञातुं पुनः निरूप्य विभाव्य मनोऽनुकूलप्रसङ्गवशात् सानन्दमाह –

**शोण इति** — मण्डितमूर्ध्नि विविधाभिः मणिभूषाभिः सुतरां प्रसाधिते शिरसि कुण्डलतया वर्त्तुलाकारेण शोणे लोहिते दुकूलोत्तमे वस्त्रे क्लृप्ते वेष्टिते सति तत्र न्यस्तां स्थापितां हैयङ्गवीनेन नव-नवनीतेन उज्ज्वलां शुभ्राम् अचटुलां स्थिरां स्वर्णेन घटितां घटीं वहन्तीं धारयन्तीं, तथाविधाभिः तेनैव प्रकारेण शिरसि दुकूलघटितायां कुण्डरयां नवनीतपूर्णां घटीं निधाय चलन्तीभिः सखीभिः अभितः सर्वतः वृता परिस्तृता स्मेरा ईषद्धास्ययुता राधा मानसजाह्नव्याः मानसगङ्गायाः तटभुवं परिसरवर्त्तिनं प्रदेशं स्वैरं स्वच्छन्दभावेन परिक्रामति इति दूरे दीर्घमितः स्थानं पश्य ।

वस्तुविक्रेत्र्यः शिरसि वस्त्रनिर्मितं वर्त्तुलाकारं उपधानं निवेश्य तदुपरि विक्रेतव्यद्रव्यपात्रं निधाय ग्राहकान् परितः प्रचलन्तीति स्वाभाविकीं स्थितिं वर्णयता कविना तच्चित्रं शब्दैर्विशदमुपस्थापयता भाविकालङ्कारेण यथावद्वस्तुवर्णनं विहितम् । अत्र, सर्वत्र सानुप्रासो बन्धः, प्रसादो गुणः, अरपवृत्तित्वाद्वैदर्भी रीतिः, वृत्तञ्च शार्दूलविक्रीडितम् ॥१०॥

---

[ पुनः ध्यान से देखते हुए प्रसन्नतापूर्वक ]

सुवल : तनिक दूर देखो । श्री राधिकाजी अपने अलंकृत मस्तक पर लाल रेशमी वस्त्र की कुण्डली बनाकर उस पर नवनीत से भरी हुई सोने की मटकी को सुस्थिर रूप से वहन करती हुई, अपनी जैसी सखियों से चारों ओर घिरी हुई, मानसगङ्गा की प्रान्तभूमि पर मुसकराती हुई स्वच्छन्द सञ्चार कर रही हैं ॥१०॥

---

*( listening again, with joy )*

10. Mark, at a distance.

Carrying a small, gold pot, brilliant with fresh butter, kept firmly on her decorated head decked with a coil of beautiful red silk, Rādhā, smiling, surrounded by her friends likewise equipped, is going, quite at ease, towards the bank of the Mānasa Gaṅgā.

सुबलः — अम्महे, चंचलाहिं सहअरीहिं पुणो पुणो उद्दीविदाए राहिआए आहंडल-कोअंड-लदाए विअ जलदमंडली मंडिज्जइ णिअ-माहुरिएण वुन्दाडई। (अहो! चञ्चलाभिः सहचरीभिः पुनः पुनरुद्दीपितया राधिकया आखण्डल कोदण्डलतया इव जलदमण्डली मण्डयते निजमाधुर्येण वृन्दाटवी।)

वृन्दा — सुबल! राधामाधुर्यस्य गिरामप्यग्रगामित्वादुद्देशोऽपि साह-

---

सुबल **अम्महे इति**। अम्महे अहो इति सहर्षविस्मये। चञ्चलाभिः नर्मलोलाभिः सहचरीभिः पुनः पुनरपि वारम्वारम् उद्दीपितया नर्महासादिषु प्रोत्साहितया राधिकया आखण्डलस्य इन्द्रस्य कोदण्डः धनुः एव लता तया तद्वद्विविधरङ्गरञ्जितया इव जलदमण्डली मेघपक्तिः इव निजेन माधुर्येण लावण्येन वृन्दाटवी मण्ड्यते विभूष्यते। यथा इन्द्रधनुषा सहभूता मेघपक्तिः शोभते तथैव वृन्दाटवी रक्तश्वेतादिविविधरङ्गैः प्रसाधितया राधिकया शोभते इति पूर्णोपमा। नीलाम्बुयमुनापरिसृता तमालादिनीलानोरुहः वैरावृता वृन्दाटवी श्यामत्वेन मेघपक्तिसाधर्म्यमाधत्ते। — कोदण्डलतेति रूपकं राधाङ्गयष्टेस्तन्वीत्वस्थापनायोपात्तम्।

विचित्ररङ्गमेदैः परिष्कृताऽऽहतित्वं राधायाः पूर्वस्मिन् पद्ये वर्णितं, तत्रापूर्वत्वं यथा — स्वयं गौरवर्णिनी पीताभा, तत्र नीलत्वं श्यामकेशपाशत्वादुत्तमाङ्गे, तत्र शोणदुकूलस्य कुण्डली, तदुपरि स्वर्णघटी तस्याः शुभ्रं हैयङ्गवीनं, इतरत्र विविधैः मरकतपद्मरागेन्द्रनीलमुक्ताभरणैः विच्छुरितरागवत्ता राधिकावपुषस्तेन तस्येन्द्रधनुर्वर्णकराङ्ग विभूषितत्वमुपपद्यत एव। एवं विचित्रस्य मनोमोहकस्य स्वरूपस्यात्र सचित्रवर्णनं चमत्काराधायकं कामपि काव्यसुषमां परिपुष्णातीति सहृदयैर्विभाव्यमेव॥

वृन्दा — **सुबलेति** — हे सुबल! राधायाः माधुर्यस्य रामणीयकस्य गिरां वाचामपि अग्रगामित्वात् परिधेरग्रे गमनशीलत्वात् अनिर्वचनीयतया वाचामगोचरत्वात्

---

सुबल अरे! मदमाती चाल से इसती हुई सखियों के द्वारा बारबार प्रोत्साहित की जानेवाली राधा अपनी मधुरिमा से इस वृन्दावन को इन्द्रधनुष से शोभमान मेघमाला के समान सुशोभित कर रही है।

वृन्दा सुबल! वाणी की परिधि से कहीं आगे बढ़ी हुई राधा की मधुरिमा का नामतः कीर्त्तन भी मैं एक दुस्साहस ही समझती हू। [मुख को

---

SUBALA Ah! With its own native charm the forest of Vṛndā, with Rādhā in its precincts – Rādhā, again and again excited by her agile friends — looks decorated as an assembly of clouds with the rainbow in their midst constantly glittering with flashes of lightning

VṚNDĀ Subala!
The beauty of Radhā is so exquisite that it is even

सिक्यमेवावधारयामीति । ( मुखमानम्य सापत्रपम् )

अनालोच्य व्रीडां यमिह बहु मेने बहुतृणं
त्यजन्नीर्षापन्नां मधुरिपुरभीष्टामपि रमाम् ।
जनः सोऽयं यस्याः श्रयति न हि दास्येऽप्यवसरं
समर्थस्तां राधां भवति भुवि कः श्लाघितुमपि ॥११॥

---

उद्देशेऽपि तत्कीर्त्तनेऽपि ( विषयसप्तमी ) साहसिक्यं दुस्साहसपूर्णं कर्म एवेत्यवधारयामि निश्चिनोमि ।

मुखमानम्याधःकृत्वा सापत्रपं त्रपां स्वीयहीनतां विभाव्य लज्जां नाटयन्ती आह — **अनालोच्येति** । यं मद्रूपं जनं इह लोके व्रीडामनालोच्य जनाः किं मंस्यन्ते इति त्रपां विहाय *मधुरिपुः श्रीकृष्णचन्द्रः अभीष्टां प्रेयसीमपि ईर्षापन्नां सापत्न्यभावान्मानाभिभूतां* रमां लक्ष्मीमपि बहुतृणं तृणवत्तुच्छं यथा भवेत्तथा त्यजन् बहु मेने बहुमानपूर्वकम् अमंस्त सः अयं तादृशः कृष्णप्रियोऽयं मल्लक्षणो जनः यस्या राधाया दास्येऽपि अवसरम् अवकाशं न हि श्रयति अर्हते तां राधां भुवि कः श्लाघितुं प्रशस्यत्वेन वर्णयितुं समर्थः ईशः स्यात् न कोऽपीत्यर्थः । अतिक्रान्तरमासुषमाऽहं, सापि राधारामणीयकस्य पुरतः तद्दास्येऽप्यधिकारितां नैव दधातीत्येतादृशस्य राधारूपस्य सङ्कीर्त्तने को नाम जनः प्रभुरिति सर्वथाऽद्वितीयत्वस्यापनादत्रासमालङ्कारध्वनिः । वाच्य उदात्तालङ्कारः "लोकातिशय-सम्पत्तिवर्णनोदात्तमुच्यते" इति दर्पणलक्षणात् । तृणमिवेति बहुतृणं तृणशब्दादिवार्थे बहुच् पूर्वनिपातश्च । रमाया अप्याधिक्यवर्णनाद् व्यतिरेकालङ्कारश्च । दमयन्तीवर्णने "तदास्यदास्येऽप्यधिकारितां ययौ न शारदः पार्वणशर्वरीश्वरः" इति श्रीहर्षोऽप्याह । ईर्ष्यार्थकम् ईर्षापदमपि ।

पद्येऽस्मिन् समासवृत्तिशून्यत्वाद् अर्थवैमल्याच्च प्रसादो गुणः, मनोहरा वैदर्भी रीतिः । अत्र शिखरिणी वृत्तम् ॥११॥

---

अवनत कर लज्जित सी ] लोक लज्जा की परवाह न करते हुए मधुरिपु भगवान् श्रीकृष्ण ने ईर्ष्या से भरी हुई अपनी परम प्रेयसी रमा को तृणवत् त्यागकर जिस मुझ जैसे जन को अत्यधिक सम्मान प्रदान किया वह मैं राधा के सौन्दर्यविशेष के कारण उसकी दासता के लिए भी अवकाश नहीं पा रही हूं । ऐसी स्थिति में इस भूतल पर राधा की रमणीयता की प्रशंसा करने में भला कौन समर्थ हो सकता है !

---

beyond the range of expression in words. I, therefore, deem it a temerity even to mention it (let alone describe it by way of illustration).

(*bashfully with face down-cast*) —

11. Who on earth is competent to extol Rādhā, when a person like me, whom Kṛṣṇa, the foe of the demon Madhu highly esteems, setting aside public opinion and abandoning like a blade of grass, even his most cherish e consort, the jealous Lakṣmī, is not afforded scope e n for serving her ?

भवतु । तथापि स्वगिरं वासयितुं तत्सौरभं किञ्चिदुदञ्चयामीति ।
( सुबलमवलोक्य )

राधाया मुखमण्डलेन बलिना चन्द्रस्य पद्मस्य च[1]
व्याक्षिप्ता सुषमेति केयमबुधैः श्लाघा विनिर्मीयते ।
यद्दूरेऽप्यनुभूय भूयसि सुधाशुद्धापि चन्द्रावली
पद्माली च विसृज्य शीर्यति निजां सौन्दर्यदर्पश्रियम् ॥१२॥

---

**भवतु** — साहसिक्यमेव, तथापि स्वस्या गिरं वाचं वासयितु राधासौन्दर्य-सौगन्ध्येन परिष्कर्तुं तत्सौरभं किञ्चिद् यावद्वाचा शक्यं तावत्स्वल्पमेव उदञ्चयामि उद्गृह्णामि उद्गिरामीत्यर्थ. ॥

सुबलमवलोक्य व्रीडावनतमात्मनो वदनमुखमग्य सुबल सम्बोध्य वृन्दा सञ्चित्य धैर्यमाह – **राधाया इति** । राधाया बलिना कस्तूरिकाकुंकुम-परिक्रिया-सुशोभितेन मुखेन वर्तुलाकारेण चन्द्रस्य पद्मस्य च सुषमा परमा शोभा व्याक्षिप्ता विकृष्याक्षिप्ता समादत्ता इति अबुधै अविवेकिभि का इय श्लाघा विनिर्मीयते क्रियते ? चन्द्रारविन्दयो शोभामादाय राधामुखम् घटितम् इति विवेकशून्यमेवाभिहितम् , यतो भूयसि बहुतरे दूरे अपि-किमुत नैकट्यात् यत् राधामुखम् अनुभूय साक्षात्कृत्य सुधया पीयूषेण शुद्धा भ्राजमाना अपि चन्द्रावली चन्द्रबिम्बम् अथवा बहूनां चन्द्राणाम् पंक्ति. अपि, तथा च पद्माना

---

अस्तु । तथापि अपनी वाणी को सुबासित करने की कामना से राधा के सौन्दर्य-सौरभ को कुछ उलेचती हूँ ॥ ११ ॥

[ सुबल की ओर देखती हुई ]

सौन्दर्य मे प्रबल राधा के मुखमण्डल ने चन्द्रमा एव कमल की सुषमा को उद्धृत कर ली है – कैसी यह प्रशसा अबूझ लोगो द्वारा की जाती है ! – वस्तुत जिस राधा वदन को दूर से भी

---

Nevertheless to perfume my own speech I shall try to reveal a bit of its fragrance ( = the charm of her beauty ) in my own words

12 What appreciation of Rādhā is that when the *fools* declare that the beauty of the Moon and the lotus was drawn upon by the shapely face of Rādhā ! In

---

1. 'वा' इति पाठभेद ।

**सुबलः** — एसो वि से कत्तिओ[1] उक्करिसो ? [ एषोऽपि अस्याः कियानुत्कर्षः ? ]

**वृन्दा** — सुबल ! गोवर्द्धनमूर्धनि श्यामलमण्डपिकायाः पृष्ठतः शिखण्ड-

---

श्रेणिरपि निजस्य सौन्दर्यस्य यः दर्पः गर्वः तस्य श्रियं शोभां विसृज्य परित्यज्य शीर्यति विदीर्णा मुकुलिता वा हतप्रभा भवति ।

अत्र चन्द्राणाम् आलिः इति कल्पनायाम् यदि चन्द्राः अनेके भवेयुः तदापि राधावदनसुषमायाः साम्यं नैव कर्तुम् प्रभवेयुः इति यद्यर्थातिशयोक्तिः अलङ्कारः । शीर्यत्यनेन पद्मचन्द्रयोः अधरत्वानुभवात् त्रपा व्यज्यते । प्रसिद्धोपमानयोः न्यूनतापादनात् अत्र व्यतिरेकालङ्कारश्च व्याक्षिप्ता अपह्नुतिरिति अर्थग्रहणेऽपि । एवमेव कालिदासोऽपि पार्वतीमुखवर्णने, "चन्द्रं गता पद्मगुणान्न भुंक्ते" इत्याह् । भङ्ग्यन्तरेण चन्द्रावली-पद्मालीति यूथेश्वरीमुख्ययोः परामर्शः तेन च मुद्रालङ्कारश्च । प्रतियोगिनीनाम् अन्यासाम् यूथेश्वरीणाम् राधायाः सौन्दर्येण पराजितत्वम् बोध्यते, तेन राधायाश्च परमोत्कर्षख्यापनात् उदात्तालङ्कारः । सर्वत्र अनुप्रासः छेकः, अनुभूय भूय इत्यत्र यमकालङ्कारः, प्राचाम्मते वृत्त्यनुप्रास एव । माधुर्यम् गुणः, वैदर्भीरीतिः । शार्दूलविक्रीडितम् वृत्तम् ॥१२॥

सुबल **एषइति** — एष एतावानपि वैभवः अस्य राधामुखमण्डलस्य कियान् उत्कर्षः वरिष्टभावः ।

वृन्दा **सुबलेति** — गोवर्द्धनस्य गिरेः मूर्धनि सानौ श्यामलमण्डपिकायाः नीलतरुघटितायाः अथवा श्यामला राधाप्रियसखी तन्नाम्ना उद्दिष्टायाः मण्डपिकायाः

---

प्रत्यक्ष कर लेने पर अमृत से शुभ्र चन्द्रावली ( अनेक चन्द्रमाओं की पंक्ति ) तथा पद्माली ( अनेक कमलों की कतार ) भी अपने सौन्दर्य गर्व की शोभा से विहीन हो मुरझा जाती है (हतप्रभ हो जाती है) [स्मरण रहे — चन्द्रावली एवं पद्मा राधिका की प्रतियोगिनी सखियाँ हैं – उनकी ओर भी इस उक्ति में सङ्केत है । ]

सुबल : यह भी उसके कितने भारी उत्कर्ष का द्योतक है ।

वृन्दा : सुबल ! गोवर्धन गिरि के शिखर पर नीलमण्डप के पीछे मयूरपिच्छधारी

---

*fact, seeing the face of Rādhā, even from a* considerable distance, thousands of nectar-like brilliant moons and thousands of honey-filled lotuses cast aside their pride of beauty and pale into insignificance.

SUBALA : *Ah! How sublime its beauty looks even by this* description — inadequate as it is!

VRNDĀ : Subala, the one with his head decked with a peacock's

---

1. किंवि तिर ( कियान् तस्य ) – इति पाठान्तरम् ।

52870



मौलिस्त्वयोपनीयताम्, मया तु मनोहरमासां विहारकौशलमवलोकयन्त्या शनैरागन्तव्यम् ।

[ इति सुबलेन सह निष्क्रान्ता ]

## ॥ विष्कम्भकः ॥

---

ल्घुमण्डपस्य पृष्ठत पश्चात्तने भागे शिखण्ड· मयूरपिच्छ मौलौ चूडायामस्य स शिखण्डमौलि· कृष्णचन्द्रस्त्वया उपनीयताम्, मया तु आसां गोपीनां विहारकौशलं लीलाचातुरीमवलोकयन्त्या प्रेक्षमाणया शनै· किञ्चित् किञ्चिद्विरम्य आगन्तव्यम्।

[ इति एवमुक्त्वा वृन्दा सुबलेन सह निष्क्रान्ता रङ्गतोऽपक्रान्ता । ]

एव वृत्तं वसुदेवयज्ञवृत्तान्त तत्र नवनातविक्रयार्थं व्रजसुन्दरीणां मखमण्डप निकषा उपस्थिति, घट्टाधिकारितया कृष्णेन ताभ्य· विक्रयस्रदानव्याजेन नर्मप्रसङ्ग इति विज्ञाप्य वर्त्तिष्यमाणस्य च ससखीराधाया सञ्चारस्य वस्तुन उपक्रम विधाय कथाप्रसङ्गस्य योजनादत्र विष्कम्भकं नामार्थपिक्षेपकम् । तल्लक्षण यथा –

"वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शक· ।

सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शित· ॥" इति ।

अत्र वनदेवीत्वात्संस्कृतमाश्रयन्ती वृन्दा उत्तमपात्र, सुबलश्च मध्यमपात्र, तयो संलापघटितत्वादय विष्कम्भो मिश्ररूप· । एव मिश्रविष्कम्भकद्वारा भूतभविष्यत्कथाप्रसङ्ग संयोज्याधिकारिक वस्तु इत परं प्रस्तौति ।

इति विष्कम्भक ।

---

श्रीकृष्ण को तुम लिवा लाओ । मैं इन सहेलियो के मनोहर विहार कौतुक को देखती हुई धीरे धीरे आ रही हू ।

[ यों कहती हुई सुबल के साथ मच से चली जाती है ]

विष्कम्भक समाप्त ।

---

tail ( = Śrīkṛṣṇa ) may be led by you to the back of the Blue Arbour on the top of the Govardhana mountain as for me, I shall reach there in my own way observing the charming feats of the sport of these belles

*( Exit Vṛndā with Subala )*

INTERLUDE ENDS

[ ततः प्रविशति सखीचतुष्टयेनासज्यमाना राधा ]

**राधा** — अम्महे ! वणलेहाए लोअणलोहणिज्जदा ! [ अहो ! वनलेखाया लोचनलोभनीयता ! ] ( इति संस्कृतमाश्रित्य ) ललिते, पश्य पश्य।

पदततिभिरलङ्कृतोज्ज्वलेयं
ध्वजकुलिशाङ्कुशपङ्कजाङ्किताभिः।

---

**ततः प्रविशतीति** — वृन्दासुबलयोः रङ्गतो निर्गमानन्तरं दृश्यान्तरं सखीचतुष्टयेन चतसृभिर्ललितादिभिः सखीभिः आसज्यमाना परिवृता राधा प्रधानपात्रे रूपकस्य नायिका प्रविशतीति।

आह च राधा **अहो इति** — वनस्य वृन्दारण्यस्य अथवा वनानां वृक्षसमूहानां या लेखा राजिः तस्याः लोचनलोभनीयता प्रेक्षकनयनाभिरामता विस्मयावहा इति अहोपदार्थः।

कीदृशमभिरामणीयकं वनराजेरिति ललितां प्रियसखीं सम्बोधयन्ती संस्कृतगिरमाश्रयन्ती विस्मयहर्षोत्फुल्लत्वात् पश्य-पश्येति वीप्सया बोद्धव्यजनस्य तत्र ध्यानमाकर्षन्ती राधा वनशोभां वीक्ष्य स्वानुभूतिं व्यावर्णयति **पदततिभिरिति**— इयं वनानां तरुवृन्दानाम् आलिः श्रेणी ध्वजः पताका कुलिशः वज्रं अङ्कुशः पङ्कजः कमलञ्च एभिः चक्रवर्तिलक्षणैरङ्किताः चिह्निताः तादृशीभिः पदततिभिः चरणचिह्नश्रेणिभिः

---

[ चार सखियों के साथ राधा का प्रवेश ]

**राधा** — अहो ! आँखों को कितनी लुभानेवाली यह वनराजि है !
(संस्कृत का आश्रय लेकर)

अरी ललिता ! देखो, देखो —

(सामुद्रिक लक्षणों में चक्रवर्ती पद के सूचक) ध्वज, वज्र, अंकुश तथा कमल के चिह्नों से अंकित (श्रीकृष्ण के) पद-विन्यास से सुशोभित, परम उज्ज्वल तथा चरण-नखों से मर्दित कलिकाओं से आकीर्ण यह वनभूमि मेरी अन्तरात्मा को अनिर्वचनीय आनन्द से विभोर कर रही है और साथ ही (औत्सुक्य से) कम्पित भी कर रही है।

---

*[ Enters Rādhā with her four friends ]*

RĀDHĀ : Ah ! what a feast to the eyes this grove of trees ! Lalitā, mark.

13. This woodland, lovely with a series of footprints imprinting a flag, a thunderbolt, a goad and a lotus, and with buds trampled over by toes and left lying

नखरलुठितकुड्मला वनाली
किमपि धिनोति धुनोति चान्तरम्मे ॥१३॥

ललिता — ( स्मित्वा ) विसाहे, पेक्ख, पेक्ख [ विशाखे, प्रेक्षस्व प्रेक्षस्व । ]

( संस्कृतेन )

सदा सुधाबन्धुरवेणुमाधुरी-विस्मारिताशेषशरीरकर्मणाम् ।

---

अङ्कृता उज्ज्वला सुस्पष्टा च, नखरैश्चरणाग्रैः लुठितानि मर्दितानि कुड्मलानि कुसुमकलिका यस्या सा मे मम अन्तरं हृदय किमपि अवर्णनीयतया विलक्षणेन भावेन धिनोति तर्पयति च धुनोति भावोद्रेकेण कम्पयति विचालयति वा । अत्र भावशबलता । अत्र द्वितीयतृतीयचरणयोर्वृत्त्यनुप्रास , अन्यत्र श्रुत्यनुप्रासश्च । वृत्तञ्च पुष्पिताग्रा ॥१३॥

ललिता स्मित्वा स्मेरमुखी सती विशाखां तन्नामधेयां सखीं सम्बोध्य आह प्रेक्षस्वेति । प्रेक्षणीय किमिति संस्कृतमाश्रित्य [ मध्यमपात्रत्वात् प्राकृत विहाय संस्कृतेन कथनं विशेषो विदुषीत्वात् ] सदेति – यत्र यस्मिन् कानने सदा सुधया अमृतेन बन्धुरा तत्तुल्यत्वाद्रम्या [ बन्धूरबन्धुरौ रम्ये नम्रे – इति विश्व ] या वेणुमाधुरी वश्या हारी स्वर॰ तया विस्मारितानि अशेषाणि शरीरस्य कर्माणि खादनपानादीनि येषां तिरश्चां तिर्यग्योनिगताना रसभावशून्यानामपि तदा विगुत ज्ञानवता सचेतसा मनासि समाधे वेणुनिनादश्रवणे एकाग्रताया ( पञ्चमी ध्रुवमपाये ) न कदापि क्वचित् क्षणमानमपि न उदासते विरमन्ति । तिर्यञ्चोऽपि यत्र मुग्धास्तत्र युष्मादृशा रसप्रवणाना का कथेति वेणुमाधुर्या उत्कर्षं तद्वादकस्य कृष्णचन्द्रस्य पर मनोमोहकत्व ख्याप्यते । सुधाबन्धुरेति वेणुमाधुरीविशेषणम् । नतोन्नतत्व बन्धुरस्य सामान्योऽर्थं । तत्र

---

[ वनाली रूप मेरी सखी ध्वजवज्रादि चिह्नों से सुशोभित श्रीकृष्ण के प्रसाद चिह्नों से प्रमुदित, उज्ज्वल वेष से विभूषित तथा ( श्रीकृष्ण के ) नख चिन्हों से अंकित कुचकलिकाओं से मण्डित मेरे मन को अत्यधिक आनन्दित कर रही है – साथ ही ऐसा सौभाग्य मुझे कब प्राप्त होगा – इस प्रकार की उत्कण्ठा के कारण मेरे मन में कम्प भी उत्पन्न कर रही है । ] ॥ १३ ॥

ललिता ( मुसकराती हुई ) सखि विशाखा ! देख, देख देख ( संस्कृत के माध्यम से ) इस वन में अपने समस्त शारीरिक क्रिया-कलाप से विरत पशु-पक्षियों के

---

about tickles my heart in an inexplicable way and also makes me wistful

LALITĀ (*smiling*) Viśākhā, behold yonder

14 In this forest where even the lower animals (like deer, cows and calves ) and birds, always frozen into

चिरं तिरश्चामपि यत्र कानने <क्वचित्समाधेर्न मनांस्युदासते[1]>॥१४॥

वेणुरवाणां तारमन्द्रस्वरविशेषान्नतोन्नतत्वं ततश्च श्रोतृजनानामपि भावोद्रेके नतोन्नतत्वं विस्मारणे हेतुः।

अत्र उत्पूर्वकस्यास्धातोरदादित्वात् उदास्ते इति एकवचनान्तं रूपमुदासते इति बहुवचने एव साधुः; अत्र कर्तृपदं मन एकवचनान्तं बहुवचनान्तेन क्रियापदेनान्वेतुं नार्हते अतः स्फुट एव च्युतसंस्कारता दोषस्तन्निवारणाय "क्वचित्समाधेर्न मनांस्युदासते" इत्थं पाठः उरीकरणीय एव। अथवा 'मनः कदाप्युदासते' इति पाठे वेणुमाधुरीकल्पनोद्दीपित-भावाभिभूतत्वं स्वयं कवेः विस्मारणे धातुपाठानुशासनस्य छन्दोविचितेश्च हेतुरिति सुधीभिर्मन्तव्यम्। तेन निल्योऽपि च्युतसंस्कारतादोषः वक्तृविशेषस्य गुणाय कल्पताम् नाम। उदास्यते इति क्वाचित्कः पाठो हीनतर एव।

अथवा धातुपाठे भ्वादिगणपरिगणितः उभयपदिको गत्यर्थकः असधातुः [ धातुसंख्या ९५० ] तस्य उदाङ्पूर्वकस्य लटि प्रथमपुरुषैकवचनान्तं कर्तरि आ समन्तात् उद्गच्छतीत्यर्थे उदासते इति रूपं भवितुमर्हते। तथा गृहीते सति मनः समाधेः वेणुमाधुरीविषयकाग्रभावात् न कदापि उद्गच्छति समन्तात् न कुत्रचिदुड्डीय प्रयातं भवतीति तात्पर्यं गृहीत्वा मनः समाधेयम्॥

सुधाबन्धुरेत्युपमालङ्कारः, प्रथमे पादे 'धुर-धुरी'त्यत्र छेकानुप्रासः। प्रसादो गुणः, वैदर्भी रीतिश्च। पद्येऽस्मिन् द्वितीयचरणं विहाय अन्ये त्रयः पादा वंशस्थवृत्तेन घटिताः "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् – द्वितीयपादस्तु इन्द्रवंशाया एव "स्यादिन्द्रवंशा यदि तौ ततो जरौ" इति लक्षणयोगात्। अतः वंशस्थेन्द्रवंश-योर्मेलनादत्र करम्बजातिः, सा चात्र, प्रथमं वंशस्थपादमनु द्वितीय इन्द्रवंशापादो वंशस्थ-पादद्वयानुगतः [ वं इ वं वं-रूपः ], अतः रताख्यानकी नाम प्रतिपाद्यविषयानुगुणा–

तद्यथा– "यत्रेन्द्रवंशाचरणो युनक्ति चेद्वंशस्थपादेन सहैत्यनेकधा।
करम्बजातिर्भवतीह सा क्वचित् कुलालचक्रं क्व च वंशमालिका॥"[2]
– इति जयकीर्तिः।

केदारमते उपजातिर्नाम वृत्तम् "अनन्तरोदीरितलक्ष्मभाजौ" – इति नियमात्॥१४॥

---

मन को भी अमृत की मधुरिमा से परिपूर्ण ( स्वरों के आरोहावरोह के कारण नतोन्नत ) वंशी की ध्वनि चिरकाल तक तल्लीनता के भाव से विलग नहीं होने दे रही है॥ १४॥

physical inactivity by the undulating nectar-like melody of the flute, are never able to withdraw from their concentrated attention towards it ( flute ).

---

1. "मनः समाधेर्न कदाप्युदासते" इति पाठः, "कदाप्युदास्यते" इत्यपि पाठभेदः; उभावपि चिन्त्यावेव।, अतः समीचीनः पाठोऽत्र समाहितः।
2. For further details see 'A Manual of Classical Sanskrit Prosody"– by S. N. Shastri ( II Edn. pp. 33-34 ).

राधा — ( स्वगतम् ) अवि णाम अतिक्कदं आअदुअ हेअंगवीणोव-हारिणीणं अम्हाणं मग्गं अज्ज रुज्झिस्सदि वइंदणन्दणो । [ अपि नामातर्कितमागत्य हैयङ्गवीनोपहारिणीनामस्माकं मार्गमद्य रोत्स्यति व्रजेन्द्रनन्दन ! ] ( प्रकाशम् ) हला ललिदे, एण्हिं पत्थाण-ओसरे ईसिसि विहसिअ किं भणिदं भअवदीए ? [ सखि ललिते ! इदानीं प्रस्थानावसरे ईषद्विहस्य किं भणितं भगवत्या ? ]

---

राधा **स्वगतमिति** – स्वगतमात्मगतं परैरश्राव्यमिति । रूपकेषु दृश्यप्रधानेषु किञ्चिद्वस्तु श्रव्य यथा नेपथ्योक्ति, किञ्चिदपरैः पात्रैरश्राव्य स्वगतोक्तिरूपं, किञ्चिन्नियत-श्राव्य जनान्तिकमपवारितरूपं, दृश्यश्राव्यशेषमन्यत्सूच्य वस्तु पञ्चभिरर्थोपक्षेपकैरूपन्यस्तमेव भवतीति नाट्यतन्त्रे वस्तुव्यवस्था ।

**अपि नामेति** – अपि वितर्के, नाम सम्भावनायाम् किमिद सम्भवम्भवेदिति तात्पर्यम् । अतर्कित पूर्वमकल्पित यथा स्यात्तथा सहसैव आगत्यैतस्मिन् परिसरे हैयङ्गवीनापहारिणीनां नवनीतविक्रेत्रीणाम् अस्माक बल्लवीना मार्गमन्तराले एवाद्य व्रजेन्द्रनन्दन श्रीकृष्ण रोत्स्यति अवरुद्ध करिष्यति – रोत्स्यतीति रुध्धातोर्लृटि रूपम् ।

अत्र नायिकायाश्चेतसि व्रजेन्द्रनन्दन नायकमधिकृत्य सयोगविषयकमौत्सुक्य व्यक्तम्भवति, तेनात्र पूर्वरागस्य अभिलापो नाम प्रथमा दशा । "आदौ वाच्य स्त्रियो राग" इति भरतोक्तदिशा नायिकाया औत्कण्ठ्यमादौ प्रदर्शितम् । तेन च रत्याख्यस्य स्थायिनो भावस्य बीजमपि प्रक्षिप्त भवति यदर्थप्रवृत्ते प्रथममङ्कम् । इति स्वचेतसि मन्त्रयित्वा प्रकाश सर्वश्राव्यमाह नायिका **इदानीमिति** – अधुनैव प्रस्थानावसरे नवनीतविक्रयाय मखमण्डप प्रति प्रस्थानवेलायाम् ईषत्किञ्चिद्विहस्य स्मित्वा भगवत्या पौर्णमास्या किं भणितमिति जिज्ञासा कार्यावस्थासु प्रथमारम्भनाम्नी अवस्था । तेन बीजस्य स्वगतोक्तौ प्रक्षिप्तस्य प्रथमया कार्यावस्थया योजनाद् मुखसन्धि प्रारभ्यते यस्य प्रथम सन्ध्यङ्गमुपक्षेपनामकमत्रोक्त भवति ।

---

राधा (स्वगत) आज कहीं व्रजराजकुमार अचानक आगे आकर यज्ञवाट मे नवनीत लेकर सञ्चार करती हुई हम सखियो के मार्ग को रोक तो न लेंगे ? (समक्ष) अरी ललिता ! जब हम घर से प्रस्थान करने लगी थीं उस समय भगवती पौर्णमासी ने कुछ मुसकरा कर क्या कहा था ?

RĀDHĀ : ( *to herself* ) Could it be that the Prince of Braja would all of a sudden hold us up on our way while carrying fresh butter ? ( *aloud* ) Dear Lalitā, what was that the revered lady (Paurnamāsī) spoke with a gentle laugh at the time of our starting today ?

**ललिता** — एव्वं भणिदं 'अज्ज तुम्हाणं को वि अपुव्वो उवत्थिदो दीसई लाहो' त्ति । [एवं भणितम् -'अद्य युष्माकं कोऽप्यपूर्व उपस्थितो दृश्यते लाभः' इति ।]

**राधा** — ललिदे! कहाप्पसंगे पुच्छअदु सा महातावसी सव्वण्णा तत्तहोदी पोण्णमासी । [ललिते ! कथाप्रसङ्गे पृच्छयतां महातापसी सर्वज्ञा तत्रभवती पौर्णमासी । ]

**ललिता** — किं ता पुच्छिदव्वं ? (किन्तत् पृष्टव्यम् ?)

**राधा** — पुव्वभवे णन्दीमुहीप्पहुदीहिं कीदिसं महाव्वदं किदंति ? (पूर्वभवे नान्दीमुखीप्रभृतिभिः कीदृशं महाव्रतं कृतमिति ?)

---

ललिता प्रत्युत्तरेण विज्ञापयति **अद्येति** – युष्माकं नवनीतोपहारिणीनां कोऽपि अपूर्वः पूर्वानुभूतविलक्षणो लाभः उपस्थितः प्राप्तो दृश्यते – इति सम्भावना भगवत्या प्रकटीकृता । अत्र सदाशंसाप्रकटनेनाशीर्नाम नाट्यालङ्कारः ।

राधा – **ललितेति** ! प्रियसखि ललिते ! कथाप्रसङ्गे स्वच्छन्दालापे सा महातापसी तपोविभवसम्पन्ना अत एव सर्वज्ञा अतीतैष्यद्वस्तुविज्ञानिनी तत्रभवती मान्या पौर्णमासी पृच्छयताम् ।

ललिता **किमिति** – पृच्छाविषयस्यानुक्तत्वात् पृष्टव्यङ्किन्तदिति जिज्ञासते ।

तत्राह राधा **पूर्वभव** इति – पूर्वभवे पूर्वस्मिन् जन्मनि नान्दीमुखीप्रभृतिभिः गोपीभिः कीदृशं किंलक्षणं महाव्रतमनुष्ठितं कृतमिति = कीदृशी किल तपस्या ताभिः चरितेति पृष्टव्यम् ।

---

**ललिता** : यह कहा था कि आज तुम सभी को कुछ अभूतपूर्व लाभ होगा।

**राधा** : ललिता ! प्रसङ्गानुसार तुम महातपस्विनी, सर्वज्ञा परम पूजनीया भगवती पौर्णमासी से पूछना ... ।

**ललिता** : पूछना क्या है ?

**राधा** : पूर्व जन्म में नान्दीमुखी आदि गोपिकाओं ने कौनसा महाव्रत किया था।

---

LALITĀ : She said, "you will see an unprecedented gain coming your way today."

RĀDHĀ : Lalitā, would you, by the way, inquire of Reverend Paurnamāsī, the great all-knowing ascetic.....?

LALITĀ : What's it to inquire of her ?

RĀDHĀ : What great austerity was practised by persons like Nāndīmukhī in their previous life ?

ललिता — एदाण महाव्वदकारिदा कथं तक्किदा ? (एतासां महाव्रतकारिता कथं तर्किता ?)

राधा — हद्धी हद्धी ! अमुद्धे[1] तुम पि एव्वं पुच्छसि । जं तस्स मद-दोलिअ मअरकुडल किरण-पराअ कदली सुन्दरस्स मुहारविंदस्स अचरिअं सिविणे वि दूरादो तुह्मादिसीण दुल्लहगन्धलअ महामाहुरीमअर णेत्त-इन्दिअरेहिं ताओ सव्वहा अणिआरिदं पिअन्ति । ता भणामि परमाहिट्ठा-णुपलम्भमुम्मुरजालिदाण तुह्माण पि तत्थमहाव्वदे दिक्खा सहाच्चेअ[2]

ललिता तत्राह एतासामिति - एतासां नान्दीमुखीप्रमुखानां महाव्रतकारिता कठोरतपश्चर्या कथं केन कारणेन त्वया तर्किताऽनुमिता इति प्रश्नः ।

प्रश्नममुं निशम्य ललितायाः अबोधतां व्यक्तुर्वती राधाऽऽह हा धिक् इति - अमुग्धे अविज्ञाततत्त्वा सरलेव व्यवहरन्ती मुग्धा सा न भवतीति अमुग्धे विदग्धे ! त्वमेतावती प्रौढा सत्यपि एवं बोधशून्येव पृच्छसि । यत तस्य मन्दमान्दोलिते दोलायमाने मकराकारे कुण्डले तयो मणिभास्वरत्वात् स्फुरता किरणानां परागसदृशानां कदली तया सुदरस्यापि रामस्य मुखमेवारविन्द तस्य आश्चर्यं विस्मयावहमलौकिक युष्मादृशानां पामराणां कृते स्वप्ने-ऽपि दूरत दुर्लभो यो गन्धस्य सौरभस्य लव अंशो यस्य तादृश महामाधुरीमकरन्द नयनेन्दिन्दिरै लोचनभ्रमरै दिव्यमाधुरीमहित मकरन्द कुसुमरस ता नान्दीमुखीप्रभृतय सर्वदा अनिवारितं स्वैरं पिबन्ति । तद्भणामि अत एव वच्मि परमस्य अभीष्टस्य तादृशमकरन्दा-स्वादस्यानुपलम्भोऽनवाप्ति तस्मात् मुर्मुर इदिस्थस्तापस्तेन ज्वालितानां दन्दह्यमानानां

---

ललिता इन सभी ने कोई महाव्रत किया होगा ऐसा क्यों कर सोचती हो ?

राधा — अहो धिक । तू इतनी समझदार होकर भी ऐसा पूछती है । देख — धीमे धीमे झूलते हुए मकराकृति कुण्डलों से शोभमान श्रीकृष्ण के मधुर मकरन्द का - जिसके सौरभ की अंशात प्राप्ति भी तुम जैसी सजनियों को स्वप्न में भी दूर स दुर्लभ है - वे नान्दीमुखी आदि सखीवृन्द अपने

---

LALITĀ What makes you think that these women practised severe austerities (*in their previous life*) ?

RĀDHĀ What a pity ! even you, my clever friend ! ask like this ! For, they always drink freely through the bees of their eyes the extremely *sweet juice of Śrīkṛṣṇa's face resplendent* with pollen like rays of his gently swinging shark shaped ear rings - a miracle, the slightest scent of which

---

1 'अई मुद्द' (= अयि मुग्धे) इति पाठान्तरम् । 2 'सव्वधा जेव्व' इति पाठभेद ।

जुत्ता। जधा ताण णंदीमुहीप्पहुदीणं पअवी भाविणि भवे वि ण दुल्लहा भवे।
[हा धिक्! असुग्धे, त्वमप्येवं पृच्छसि यत्तस्य मन्दान्दोलित-मकर-कुण्डल-किरण-पराग-कन्दली-सुन्दरस्य मुखारविन्दस्य आश्चर्यं स्वप्नेऽपि दूरतः युष्मादृशानां दुर्लभगन्धलवं महामाधुरीमकरन्दं नेत्रेन्दिन्दिरैः[1] ताः सर्वदाऽनिवारितं पिबन्ति। तद्भणामि, परमाभीष्टानुपलम्भमुर्मुरज्वालितानां युष्माकमपि तत्र महाव्रते दीक्षा सर्वथैव युक्ता यथा तासां नान्दीमुखीप्रभृतीनां पदवी भाविनि भवेऽपि न दुर्लभा भवेत्।]

युष्माकमपि तत्र तादृशे महाव्रते दीक्षाऽनुष्ठानेसङ्कल्पः सर्वथा एव युक्ता समीचीना यथा येन तासां नान्दीमुखीप्रभृतीनां पदवी स्थानं भाविनि आगामिनि भवे जन्मनि दुर्लभा असुलभा न भवेत्। इदं जन्म मुधा नीयते, अत्र तावत्कापि तपस्या एवं-विधाऽऽचरणीया यया परस्मिन् जन्मनि तादृशसौभाग्यं विन्देमहीति भावः।

अत्र नान्दीमुख्यादयो धन्या, न वयमिति स्थायिनो रत्याख्यभावस्य सञ्चारी खेदः, ताः प्रति ईर्ष्यामिनिविष्टोऽमर्षश्च विप्रलम्भं पुष्णीतः। अत्र कन्दलीसु दरस्येलत्रोपमा, मुखारविन्दस्य माधुरीमकरन्देत्यत्र नेत्रेन्दिन्दिरैरित्यत्र च रूपकम्, नेत्रेन्दीवरैरितिपाठे नेत्रयोरिन्दीवरत्वारोपे रूपितेऽपि पिबतेः करणत्वेनान्वयानुपयोगित्वाद्विषये विषयिणः परिणमनात्परिणामाल र:, यल्लक्षणम् — विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि, परिणामो भवेत्" इति।

अत्र दीर्घसमासघटितस्य सानुप्रासस्य बन्धस्य उत्कलिकागद्यरूपता। गौडी रीतिः ओजो गुणः।

---

नयनरूपी मधुकरों द्वारा नित्य विना किसी बाधा के पान करती रहती हैं। अत एव कहती हूँ कि जिस अत्यन्त अभीष्ट मनोरथ की अप्राप्ति के कारण तुम मन ही मन अन्तर्ज्वाला से सन्तप्त होती रहती हो उसे प्राप्त करने के लिए तुम्हें नान्दीमुखी आदि गोपिकाओं द्वारा सम्पादित *महाव्रत की दीक्षा* ग्रहण करनी ही चाहिये ताकि भावी जन्म में तो भी तुम्हें वह पदवी दुर्लभ न हो।

*is not available to persons like you from a distance* even in a dream! So I say for you people also who are corroded with deprivation of your cherished end, it is meet to undergo the ordeal of an austere penance so that it should not be difficult for you to get a position like that of Nāndīmukhī and others at least in the next birth.

---

1. "णेत्तिन्दिरेहिं (= नेत्रेन्दीवरैः) – इति पाठान्तरम्।

**विशाखा** — राहि ! णंदीमुहीप्पहुदिणो गोवक्कणागणादो वि किंवा अविसेसेण । सव्व गोउलवासिजणादो वि कावि एक्का महाभाइणी किदमहाव्वदलक्खा लक्खीअदि । [राधे ! नान्दीमुखीप्रभृतितो गोपकन्यागणतोऽपि किं वा अविशेषेण । सर्वगोकुलवासिजनतोऽपि काऽपि एका महाभागिनी कृतमहाव्रतलक्ष्या लक्ष्यते ।]

**राधा** — (सोत्कण्ठम्) विसाहे ! का क्खु एसा पुण्णवदीण सिहामणी ? [विशाखे ! का खल्वेषा पुण्यवतीनां शिखामणि ?]

---

अनान्तराले ममज्ञेव विशाखा राधा सम्बोधयति **राधिका इति** — नान्दीमुखीप्रभृतित न केवल ताभ्य एव अपि तु गोपकन्याना गणत समुदायादपि किं वा अविशेषेण साधारण्येन, [वस्तुतस्तु] सर्वभ्य गोकुले वसद्भ्य जनेभ्य इति सर्वगोकुलवासिजनत अपि काऽपि काचन एका महाभागिनी सद्भाग्यविशेषशालिनी या (पूर्वस्मिन् जन्मनि) कृतमहाव्रतलक्ष्या कृतस्य कस्यचन महाव्रतस्य तपसोऽनुष्ठानस्य लक्ष्य निदर्शनरूपेण वर्त्तमाना लक्ष्यते दृश्यते ।

सविशेष विशाखावच श्रुत्वा सोत्कण्ठ का सा तादृशीति ज्ञातुमुत्का सती राधिका पृच्छति **का खल्विति** — खलु इति प्रश्ने, का नाम एषा भवत्या उद्दिष्टा पुण्यवतीनां सुकृतशालिनीना शिखामणि चूडाया मणिरेव श्रेष्ठा वर्तते ? अत्रोपमालङ्कार ।

---

**विशाखा** — राधा ! नान्दीमुखी आदि गोपबालाओ में अथवा अन्य किसी में भी ऐसी कोई विशेषता नहीं है । हा, समग्र गोकुलवासियों में एक ही भाग्यशालिनी दिखाई देती है जिसने कदाचित् किसी महाव्रत का अनुष्ठान किया हो ।

**राधा** — (बड़ी उत्सुकता से) पुण्यात्माओ मे ऐसी सर्वश्रेष्ठ वह कौन है ?

VISĀKHA Dear Rādha ! there seems to be some one , — luckier than Nāndimukhi and others – luckier than the entire community of cowherds, or the luckiest of all the residents of Gokula who has practised the severest penanee with this end in view.

RĀDHĀ Visākhā ! which could be such, the foremost among the fortunate ?

ललिता — (स्वगतम्) तुअत्तो का ईदिसी अण्णा दुदिआ ।
[त्वत्तः केदृश्यन्या द्वितीया ।]

राधा — सहि ! विण्णादं विण्णादं । सच्चं कधेसि । [सखि ! विज्ञातं विज्ञातम् । सत्यं कथयसि ।]

**श्लाघ्यते कलितकेलिकाकलीव्याकुलीकृत-समस्तगोकुला ।**
**श्रीहरेरधरशीधुमाधुरीमादिता मुरलिरेव नेतरा ॥१५॥**

---

ललिता स्वगतमात्मनि चिन्तयति **त्वत्त इति** — त्वत्तः युष्मच्छब्दात्पञ्चम्यन्तात्तसिः भवतीं विहायेत्यर्थः । का ईदृशी भाग्यवती अन्या द्वितीया त्वदपरा भवेदिति शेषः ।

विशाखाया उक्तिमन्यथा योजयित्वा वाक्चतुरा राधिका विशाखामनुमोदमाना वक्ति **सखीति** —

सखि ! विज्ञातं विज्ञातमिति प्रहर्षे वीप्सा । सत्यं कथयसि — कुत इत्याह **श्लाघ्यत इति** — कलिता कृता या केलिकाकली क्रीडाप्रसङ्गे अव्यक्तमनोहरस्वरा वाक् काकली तया व्याकुलीकृतम् अव्याकुलं स्वस्थमपि व्याकुलं यथा स्यात्तथा कृतम् (च्विप्रत्ययः) समस्तमखिलं गोकुलं लक्षणया तन्निवासि-नर-नारी-पशु-पक्षिणः यया सा, अपि च श्रीहरेः शोभाशालिनः कृष्णचन्द्रस्याधरात् स्यन्दी शीधुः आसवः तस्य माधुरीमादिता सारस्येन मत्ता मुरलिः वंशी एव श्लाघ्यते प्रशस्यते त्वया, नेतरा वंशीं विहाय नास्ति काचिदपरा यां त्वं श्लाघसे इत्यर्थः । अत्र राधिकामुद्दिश्य कथितस्य विशाखावचसः वंशीरूपिण्यन्यस्मिन्नर्थे नियोजनाद् अवस्यन्दितं नाम वीथ्यङ्गमुक्तं भवति, यद्भारतीवृत्तेरङ्गम् । अत्र सुप्रसन्नो वृत्त्यनुप्रासालङ्कारः । वृत्तञ्च रथोद्धता — "रान्नराविह रथोद्धता लगौ" इति लक्षणात् ॥ १५ ॥

---

ललिता — (मन ही मन) अरी ! तुझे छोड़ और कौन दूसरी ऐसी भाग्यशालिनी हो सकती है !

राधा — हला ! समझ गई, समझ गई । तू सच कह रही है [संस्कृत के माध्यम से] मनोमोहिनी लीलाओं के सुमधुर प्रसङ्ग पर श्रवणेन्द्रिय को तृप्त कर देने वाले स्वर से समस्त गोकुल को व्याकुल कर देनेवाली, श्रीकृष्ण के अधरासव से मदोन्मत्त बाँसुरी ही एक ऐसी सौभाग्यशालिनी कही जा सकती है – और तो कोई नहीं ॥ १५ ॥

---

LALITĀ : *(aside)* Who else, other than you, could be such an one !

RĀDHĀ : 15. Friend ! I follow, what you say is true. It is only the flute and none else, that is extolled by you — the flute. which, intoxicated with the sweet nectar of Śrī Kṛṣṇa's lips, has stirred the depths of the entire Gokula with its sweet sounds of sport ( the flute being played upon by Śrī Kṛṣṇa in course of his sports ).

ललिता – ( सस्मितम् )

सच्चं मुरली-कूइद-तरलीकिद-धीरमाणसा गौरी ।
उत्तमवंसुप्पण्णा साराहीणा महासरसमहुरा ॥१६॥

[ सत्यम् मुरलीकूजिततरलीकृतधीरमानसा गौरी ।
उत्तमवंशोत्पन्ना साराहीना महासरसमधुरा ॥१६॥ ]

एतस्मिन्व्यतिकरे नमकुशला ललिता सस्मिता वचोभङ्गया राधिकोक्तिं तथयति **सत्यमिति** — सत्यमवितथमेतत्, यदिय गौरी अरुणा मुरली वंशी कूजितेन मधुर ध्वनेन तरलीकृत चञ्चलतां नीत धीराणाम् अपि मानस यया सा, अपिच उत्तमात् वंशतरोरुत्पन्ना सारेण अहीना सम्पन्ना त्वचि श्लक्ष्णा दृढा चेति साराहीना महासरसमधुरा अतीव सरसा विविधानां रसाना सप्तस्वरविभेदैर्व्यञ्जिका अत एव मधुरा आस्ते इति शेष । प्राकृतरचनायां "साराहीणामहासरसमहुरा' इति पदोच्चय "सा राही णाम हासरस महुरा" इति विच्छिद्य पाठान्वये "सा राधा नाम हासरसेन परिहास विनोदेन मधुरा रम्या गौरी कनकपीतवर्णा मुरलीकूजितेन तरलीकृत लोलतामाप्त धीरं दृढ मानस चेतो यस्या सा उत्तमे वंशे कुले उत्पन्ना अभिजाता सा एव श्लाघाविषय" इति तात्पर्यं गम्यते, अतोऽत्र भाषाश्लेषालङ्कार सभङ्गरूप । अत्र प्रक्रान्तघटनावैचित्र्यमर्थमुपस्करोति ।

प्राकृतपद्यमिदमुद्गाथाछन्दसा निबद्ध पूर्वार्धोत्तरार्धयो त्रिंशन्मात्राभि समानतया घटितत्वात् । अस्य संस्कृतरूपान्तरमपि आर्यापूर्वार्धतुल्यत्वादुत्तरार्धस्यापीति हेतोरियं गीतिर्नाम जाति – "आर्यायाः प्रथमदलोक्तं यदि कथमपि लक्षणं भवेदुभयो दलयोः कृतयतिशोभां तां गीतिं गीतवान् भुजङ्गेश" — इति लक्षणात् ॥ १६ ॥

---

**ललिता** — ( मन्दहास करती हुई )

अपने कूजन से धीर चित्त प्राणियों को भी अधीर कर देने वाली, पीत वर्ण की, श्रेष्ठ बाँस से बनी हुई, अन्त सारवती, सरस होने के कारण परम मधुर यह बाँसुरी सचमुच भाग्यशालिनी है।

[ श्लिष्ट पदों के कारण "सा राही नाम हासरस मधुरा" इस प्रकार पदच्छेद करने से दूसरा अर्थ –

वंशी की मधुर ध्वनि से विचलित मनोवृत्ति वाली, सुवर्ण की भाँति पीत आभा वाली, उत्तम कुल में उत्पन्न, सदा हास्य रस में मग्न रहने वाली राधा निश्चित ही सौभाग्यशालिनी है। ] ॥ १६ ॥

LALITĀ 16 ( *smiling* ) True, ( Fortunate is ) this tawny flute, made of the finest reed, essentially sound and smooth to touch and capable of producing various sentiments in the sweetest possible manner Its warbling is so sweet that it shakes the hearts of even the self-possessed souls OR ( *fortunate is* ) this gold-complexioned smooth-skinned, humorous Rādhā, born of the noblest family, whose mind, however composed, is moved by the sweet warblings of [ Srī Kṛṣṇa s ] flute

**राधा** — हला ! कीस हससि। मन्दभाइणा वि इमिणा जणेण अप्पणो पणइजणाणं प्पसादादो तं मुहमंडलं दो-तिण्णवारं विदिट्ठं अत्थि। तहवि पइदिमादएण तिमा तस्स [1]माहुरीमहुणा हिअअं उम्महिअ तधा सव्वं विह्मरावीअदि जधा प्पणिहाणेण पेक्खणं वि दुलहं। [सखि ! कस्माद्धससि। मन्दभागिनाऽप्यनेन जनेन आत्मनः प्रणयिजनानां प्रसादात् तन्मुखमण्डलं द्वित्रिवारमपि दृष्टमस्ति। तथापि प्रकृतिमादकेन तस्य तेन [1]माधुरीमधुना हृदयमुन्मथ्य तथा सर्वं विस्मार्यते यथा प्रणिधानेन प्रेक्षणमपि दुर्लभम्।] (इत्यौत्सुक्यमभिनीय संस्कृतेन)

---

ललिताया नर्मोक्तिं निशम्य राधिका साक्षेपमाह **सखि कस्मादिति** — प्राकृते हला इति सखिसम्बोधनम्। कस्मात्कारणात्त्वमेवं हससि ममोपहासं करोषि। (वस्तुस्थितिमवधारय) मन्दभागिना स्तोकसौभाग्यशालिना अमुना मद्रूपेण जनेन आत्मनः प्रणयिजनानां प्रियाणामभिभावकानां प्रसादात् कृपया तन्मुखमण्डलं प्रियस्य वदनारविन्दं द्वित्रिवारं द्विवारं त्रिवारं वा दृष्टमस्ति प्रत्यक्षीकृतम्। अत्र मन्दभागित्वादात्मनः, प्रियत्वात्कृष्णस्य च प्रथमपुरुषवाचिना पदेन परामर्शः उक्तिगाम्भीर्यं गमयति। तथापि दृष्टचरत्वे सत्यपि प्रकृतिं मादयतीति प्रकृतिमादकं तेन चित्तोन्माथिना तस्य प्रियस्य तेन विलक्षणेन माधुरीमधुना अक्षुद्रास्वादवता क्षौद्रेण हृदयं ममान्तरमुन्मथ्य प्रसह्य विह्वलतां नीत्वा तथा सर्वं विस्मार्यते यत्प्रणिधानेन ध्यानद्वारा मानससन्निकर्षेण वा तस्य प्रेक्षणं साक्षात्करणमपि दुर्लभम्। तदीयमाधुर्यस्यानिर्वाच्यकर्षकत्वेन चकिते चेतसि मानससंयोगोऽपि दुर्घट एवेति निर्वेदः सञ्चारी गम्यते; प्रियस्य च गुणाख्यानाद् विलोभनं नाम मुखसन्ध्यङ्गमुक्तम्भवति "गुणाख्यानं विलोभनम्" – इति भरतोक्तेः। माधुरीमधुनेत्यत्र रूपकालङ्कारः।

---

**राधा :** हला ! क्यों उपहास कर रही हो ! मुझ मन्दभागिनी ने तो अपने सखीजनों के अनुग्रह से दो-तीन बार उनके (श्रीकृष्ण के) मुखमण्डल के दर्शन किये हैं, तथापि सहज ही उन्मादित कर देने वाले उनके मुख की सुषमा मोहित हृदय को विह्वल कर इस तरह सुध-बुध भुला देती है कि एकाग्र ध्यान करने पर भी उनका दर्शन भी दुर्लभ ही रहता है।

---

**RĀDHĀ :** Friend, why do you laugh ? Ah unlucky me ! I too, with the favour of my loving friends, have seen his comely face twice or thrice, but (whenever) I see him my heart is so much perturbed by his naturally intoxicating sweet face that I clean forget everything and find it difficult afterwards to bring his face before my mind's eye even by concentration.

---

1. "मउरम्मेण (= अपूर्वेण)"–इति क्वचिदधिकम्।

तपस्याम: क्षामोदरि ! वरयितुं वेणुषु जनु-
र्वरेण्यं मन्येथाः सखि ! तदखिलानां सुजनुषाम् ।
तपस्तोमेनोच्चैर्यदियमुररीकृत्य मुरली
मुरारातेर्बिम्बाधरमधुरिमाणं रसयति ॥१७॥

---

एव तद्दर्शनविषयकमौत्सुक्यमभिनीय नाटयित्वा वक्ष्यमाणस्य वैशिष्ट्यावबोधनाय सस्कृत समाहृत्य पुना राधिका मुरलीसमक्षपुण्यार्जनाय तपश्चरणमेव साधीय इति सङ्कल्प प्रथयन्ती आह **तपस्याम इति** — क्षामम् कृशमुदर यस्या सा क्षामोदरी तत्सम्बुद्धौ हे क्षामोदरि ललिते ! वेणुषु वशवृक्षेषु जनु जन्म वरयितु प्राप्तु तपस्याम कठोरवतमाचरिष्याम । तत्र हेतुमाह — हे सखि ! तद्वेणुजनु अखिलानां सुजनुषा सौभाग्यवतां जन्मना वरेण्य श्रेष्ठ मन्येथा गणय । सर्वयोनिषु वशतरो जन्म वरिष्ठ मन्तव्यम् । तत्रोपपत्ति प्रतिपादयति यत् जन्म इय मुरली तपसा स्तोमेन राशिना उच्चै उररीकृत्य स्वीकृत्य लब्ध्वा मुरारातेः भगवत कृष्णचन्द्रस्य बिम्बवदारक्तस्य अधरस्य मधुरिमाणं ( इमनिच्प्रत्यय ) माधुर्यं रसयति आस्वादयति । वेणुषु जन्मावाप्य यत कृष्णाधरमाधुरीस्वादनसौभाग्यमनया वश्योपलब्ध यन्मानुषे जनुषि दुरवापमत वशीतरुता एव वरीयसीति मन्येथा, तज्जन्मराशिरपि तपोविशेषसञ्चयमन्तरा नैव सुसाध्येति वयमिदानीं तपस्याम इति पूर्वपूर्ववाक्यस्य उत्तरोत्तरवाक्यम्प्रति हेतुत्वादन कारणमालालङ्कार, "पर परं प्रति पूर्वपूर्वस्य हेतुता तदा कारणमाला स्यादिति" दर्पणवचनात् । तत्र कृष्णाधरमाधुरीलाभवत्यै मुरल्यै असूयन्ती नायिका तद्विषयकीमात्मनो लालसा प्रकटयति, तेन पूर्वरागावस्थायामयोगजा औत्सुक्यासूयाखेदा सञ्चारिणो भावा व्यज्यन्ते । पूर्वार्धे वृत्त्यनुप्रास उत्तरार्धे छेक । प्रसादो गुण, वैदर्भी रीति, शिखरिणी वृत्तम् ॥ १७ ॥

---

[ यों औत्सुक्य का अभिनय करती हुई सस्कृत में ]

हे कृशोदरि सखि ! हम सभी को आगामी जन्म में बाँस की जाति मे जन्म पाने के लिए तपस्या करने का सङ्कल्प करना चाहिये, समस्त भाग्यशाली जन्मो मे से वेणुकुल में जन्म को ही सर्वोत्तम समझना चाहिये, क्योंकि देखो — किसी अत्यधिक तपोराशि के प्रभाव से ही यह बाँसुरी मुरारि के बिम्बाधर की मधुरिमा का प्रचुर रसास्वादन कर रही है ॥ १७ ॥

*( expressing her ardent desire to see him )*

17 Let us my slender-waist friend !, perform a penance to get a birth among the reeds in our next life Know for certain, friend ! that a birth among the reeds is the best of all the good births For, it is only by virtue of this birth obtained through austere penances performed, this flute has gained a position to relish and enjoy the sweetness of Srī Krsna's lips

( प्रविश्य )

वृन्दा —ललिते ! कथं कथाभिनिवेशेन संरब्धहृदयाः शक्रध्वजवेदि-पदवीमधिरोहन्तमप्यात्मानं न जानीथ यूयम् ।

सर्वाः — ( परावृत्य ) सहि वृन्दे ! सच्चं कथेसि ज गोअड्ढणो पुट्ठदो संवुत्तो ता डाहिणे गोइंद कुंडवट्टिणीं अणुवट्टह्म । [ सखि वृन्दे ! सत्यं कथयसि यद्गोवर्धनः पृष्ठतः संवृत्तः, तद्दक्षिणे गोविन्दकुण्डवर्तिनीं अनुवर्तामहे । ]
( इति तथा कुर्वन्ति । )

---

एतस्मिन् व्यतिकरे रङ्गं प्रविश्य वृन्दा ललितां बोधयति कथमिति — कथासु परस्परालापेषु यः अभिनिवेशः प्रहिलता तेन संरब्धं प्रसतं मानसं यासां तादृश्यो यूयं शक्रध्वजवेदिपदवीं इन्द्रध्वजेतिनाम्ना ख्याताया वेदिकाया उन्नतभुवः पदवीं सरणिमधिरोहन्तं गच्छन्तमपि आत्मानं स्वं न जानीथ । गन्तव्यस्य गोविन्दकुण्डस्य मार्गं विस्मृत्य तद्भिन्नदिशि नयन्तं मार्गमुपसर्पमाणा यूयमिति न ज्ञातं भवतीभिः । अहो सल्लापे गभीरासक्तिः । इत्यत्र विरोधो नाम भाण्यङ्गमुपस्थाप्यते ।

एवं प्रबोधिताः सर्वाः सख्यस्तस्मादपथः परावृत्याहुः सखि वृन्दे ! सत्यमाह भवती यद् गोवर्धनो नाम गिरिस्तु अस्माकं पृष्ठतः संवृत्तः पृष्ठवर्त्ती जातः, तद् अतः दक्षिणे इत दक्षिणतः सरन्तीं गोविन्दकुण्डस्य वर्त्तिनीं पद्यामनुवर्त्तामहे अनुगच्छेम इत्युक्त्वा तन्मार्गमनुसरन्ति । "सरणिः पद्धतिः पद्या वर्त्तिन्येकपदीति च" — इत्यमरः ।

---

[ वृन्दा का प्रवेश ]

**वृन्दा :** अरी ललिता ! चर्चा के प्रभाव में मग्न होकर तुम सब ही इन्द्रध्वज नामक स्थान की ओर आगे बढ़ी जा रही हो — तुम्हें यह भी पता नहीं है ।

**सब :** [ लौटती हुई ] सखि वृन्दा ! तुम सच कह रही हो — गोवर्धन तो पीछे ही रह गया — तो चलो अब यहां से दक्षिण की ओर गोविन्दकुण्ड ले जाने वाली पगदण्डी को पकड़ लें ।

[ यों कहकर सब वैसा ही करती हैं ]

---

**VRNDĀ :** *( entering )* Lalitā ! how wonderful ! so absorbed you are in your conversation that you do not know you are ascending the way leading to the mound of Indradhvaja.

**ALL :** *( turning back )* Friend Vrndā ! correct you are. Gone back is the Govardhana mount. Let us now turn to south and follow the track that leads to Govinda Kunda.

*[ So they do ]*

वृन्दा — (अपवार्य) चम्पकलते ! पश्य पश्य —

ध्रुवं निखिलमाधवप्रणयिनीकदम्बादलं
विकृष्य विविधं विधिर्मधुरिमाणमत्यद्भुतम् ।
प्रभोः परमतुष्टये निरमिमीत राधां मुदा
यदत्र रमते हरिः परिहृतान्यनारीस्पृहः ॥१८॥

अपवार्य अन्याभि सखीभिरश्रूयमाण यथास्यात्तथा चम्पकलता सम्बोधयन्ती, राधाया सुषमा वर्णयन्ती वृन्दाऽऽह ध्रुवमिति — विधि प्रजापति निखिलासां माधवस्य श्रीकृष्णस्य प्रणयिनीना प्रेयसीनां कदम्बात् समूहात् अत्यद्भुत सविशेषरमणीय परमविलक्षण विविध मधुरिमाणं चेतोद्रावि सौन्दर्यं विकृष्य समादाय प्रभो भगवत परमतुष्टये महते सन्तोषाय राधा निरमिमीत सृष्टवान् इति ध्रुव सम्भावनायाम् "शङ्के मन्ये ध्रुवम्"—इति दर्पणोक्ते । तत्र हेतुमाह - यत् यत हरि परिहृता अन्याभ्यो नारीभ्य स्पृहा इच्छा यस्य तादृश सन् अत्र राधायां मुदा परमोल्लासेन रमते समासज्यते इति ।

अत्रान्यगोपिकाभ्य तत्तत्प्रकारक लावण्यमुपादाय राधा विधिना निर्मितेति ध्रुवम्पदवाच्य उत्प्रेक्षालङ्कार । तेन अन्यासां सौन्दर्यस्य रिच्यमानतया राधायां सौन्दर्यप्रसृष्टि हरिचेत समासक्तिरूपाल्लिङ्गाद्विभाव्यतेऽतोऽनानुमानालङ्कार, उभयो सोपक्षत्वात्सङ्करालङ्कारश्च । अत्र राधाया लावण्यप्रकर्षवर्णनात् गुणोत्कीर्तन नाम नाट्यालङ्कार । अनुप्रासबहुलो बन्ध, प्रसादगुणमण्डितो वैदर्भीरीत्या गुम्फित, पृथ्वीवृत्तेनोपनिबद्ध । पृथ्वीवृत्तस्य लक्षणन्तु—"जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरु" इति ॥१८॥

---

वृन्दा · (एक ओर मुड़ कर) अरी चम्पकलता देख —

सचमुच विधाता ने श्रीकृष्ण की समस्त प्रेयसियों की विविध अलौकिक *मधुरिमा को अत्यन्त सावधानी से एकत्र कर पूर्ण मनोयोग से श्रीकृष्ण की प्रसन्नता के हेतु राधा के कलेवर का निर्माण किया है — यही कारण है श्रीकृष्ण अन्य सकल सुन्दरियों से विमुख हो, राधा के प्रति आसक्त रहते हैं ॥ १८ ॥*

VRNDĀ (*aside*) Dear Champakalatā ! Look —

18 Indeed, the Creator Brahmā drew a rich diversity of the marvellous sweetness from the train of all the beloveds of Srī Krsna and happily created Radhā for the greatest satisfaction of the Lord, so much so that, *since then, Srī Krsna has no longer any taste for any* one else, but rejoices only in her ( Rādhā )

**राधा** — ( दक्षिणतः प्रेक्ष्य ) अम्महे ! माणसगंगाए उप्फुले कमलकलावे रोलंवाणं काअलि-कलअलस्स कोमलदा । [ अहो मानसगङ्गाया उत्फुल्ले कमलकलापे रोलम्बानां काकलि-कलकलस्य कोमलता ! ]

**वृन्दा** — ( साकूतम् )

सरोजानां पुञ्जे मदकलममुं पश्यत पुरः
परागैरापिङ्गैः स्फुरदधरकायं मधुकरम् ।

---

चम्पकलतां प्रति वृन्दावचनमुपेक्ष्यैव राधा आत्मनो दक्षिणस्यां दिशि मधुरं मधुकरगुञ्जारवं निशम्याह—**अहो इति** । मानसगङ्गायाः ( शेषे षष्ठी ) मानसगङ्गाप्रवाहे उत्फुल्ले विकचे कमलकलापे पद्मसमूहे रोलम्बानां भ्रमराणां काकली मधुरध्वनिस्तस्याः कलकलस्य यौगपद्येनोपस्थितस्याव्यक्तरम्यस्वनस्य कोमलता पेशलता हृदयहारिणीति भावः । ईषत्कलः काकली सूक्ष्मध्वनिः ।

ततो वृन्दा साकूतममिप्रायविशेषं हृदि निधाय आह **सरोजानामिति** — सरोजानां पुञ्जे कमलवृन्दे मदेन कलं मधुरस्वनं, आ समन्तात् पिङ्गैः पीतवर्णैः परागै रजोभिः लिप्यमानत्वात् स्फुरन् कम्पमानः कायस्य अधरो निम्नो भागो यस्य सः स्फुरदधरकायः तादृशं अमुं पुरोदृश्यमानं मधुकरं पुरः अग्रे पश्यत यूयमिति शेषः । पुनस्तं विशिनष्टि — यः मधुकरः भ्रामं भ्रामं सन्ततं भ्राम्यन् ( भ्राम्यतेः पौनःपुन्यार्थे णमुल् ) भ्रमररमणीः मधुकरीः ( द्वितीयाबहुवचनान्तं पदम् ) सरभसं तरसा मुहुर्वारम्वारं निरुन्धानः प्रहृयालुः ध्वानस्य तासां स्वस्य च गुञ्जारवेन विधुतः नर्मणि कम्पितो मूर्धा शिरो यस्य तादृशः सन् विहरति ।

---

**राधा** : (दाहिनी ओर देखती हुई) अहो ! मानसगङ्गा के विकसित कमलवन में भ्रमर-वृन्द की सुमधुर गुञ्जार कितनी आह्लादक है ।

**वृन्दा** : (कुछ गूढ़ अभिप्राय से) सामने ही, सतत टपकने वाले पराग के संसर्ग से पीत इस कमलवन में, जिसके शरीर का अधोभाग कम्पित हो रहा है ऐसे मदमाते भौंरे को देखो जो बारम्बार परिभ्रमण करता हुआ मधुर गुञ्जन करने वाली भ्रमरियों की सरस ध्वनि पर अपने सिर को कम्पित

---

RĀDHĀ : (*Looking towards south*) Oh ! the tenderness of the gentle humming of the bees among hundreds of full blown lotuses growing in the Mānasa Gangā !

VṚNDĀ : 19. (*Significantly*) Look at this passionate drone in front of you, who, with the lower part of his body shining with the deep yellow pollen (of the lotuses) and with

मुहुर्भ्रामं भ्रामं भ्रमररमणीयः सरभसं
निरुन्धानो ध्यानोद्धतिविधुतमूर्धा विहरति ॥१९॥

राधा — (स्वगतम्) णूणं वुन्दाए किं पि हिअए कदुअ एदं वाहरिअदि। [नून वृन्दया किमपि हृदये कृत्वा इद व्याह्रियते।] (प्रकाशम्)

अत्र भ्रमर्य आलम्बनम्, मधुकरो नायक, सरोजवन गुञ्जारवश्चोद्दीपनम्, कायस्फुरण सात्त्विकभाव, मुहुर्भ्रमण निरोध प्रेयसी परीत्येत्यनुभाव, मद सञ्चारी — एभिरुपकरणै मधुकरमधुकरीणां मिथो रत्याख्यो भाव संयोगशृङ्गारध्वनिमातनोति, असौ च तिर्यग्गतत्वेन शृङ्गाररसाभास बहूनाम्मते (एकावलीकारो विद्याधरपण्डितस्तु रसध्वनिमेव स्वीकरोति)। अपि च सरोजं कामिनीवदनानाम यवसाय, अवयवग्रहणेनावयविग्रहणाद्गतल्वीना निरूपणम् कृष्णत्वस्य साम्या मधुकरपदेन निगीर्य कृष्ण-चन्द्रस्याध्यवसान शैत्यौर्यापारविशेषैरनभावित नेकवल्लवीनिरुद्ध्य सरभस कृष्णस्य सङ्गतत्व समासोक्त्या सहृदयहृदयग्रहेलियमर्थमर्थशत्तयुत्थध्वनिना व्यनक्ति। तेन च पिङ्गत्वात्पीताम्बरस्य कृष्णस्य गोपरमणीनिरोध विधुतमूर्धं नर्मणा विहारस्य तामि सार्धमिति भाविनो वर्ण्या अर्था कविवरेण सूचिता यत भाणिकाया पूर्वमुल्लिखितेषु सतस्वङ्गेषु प्रथममुपन्यासो नामाङ्गमत्र सन्बधम्, यल्लक्षण "उपन्यास प्रसङ्गेन भवेत्कार्यस्य कीर्तनम् —" इति अत्र तुल्यविशेषणकतया मधुकरापदेशेन कृष्णचरितस्य सङ्केतात्पताकास्थानकमुपन्यस्त भवति। गुणरीती पूर्ववत्। वृत्तमत्र शिखरिणी ॥ १९ ॥

राधा स्वगतमाह **नूनमिति** — नून निश्चयेन वृन्दया किमपि हृदये स्वमनसि चिन्तयित्वा व्याह्रियते। तत प्रकाश सर्वश्राव्यमाह **सखि वृन्द इति** — धन्या भाग्यशालिन्य कुसुमकीट्यो भ्रमर्य या कान्तेन प्रियेण मधुकरेण सम सह

---

करता हुआ अपने वेग से उन्हें निरुद्ध करता हुआ उनके साथ विहार कर रहा है। [इस उक्ति मे पीताम्बर धारण किये हुए, कमलवृन्द से भ्रष्य वसित कोमल कान्त कामिनियों के चहुँ ओर मडराते, उन्हें निरुद्ध करते श्रीकृष्ण की लीला का अर्थभगी से (वक्रिमा) निरूपण करना ही वृन्दा का अभिप्राय है।] ॥ १९ ॥

राधा (स्वगत) निश्चय ही वृन्दा अपने मनमाने किसी अभिप्राय को प्रकट कर रही है। [संस्कृत के माध्यम से]
(स्पष्ट) सचमुच ये फूलों के कीडे कहीं धन्य हैं जो अपने कान्त के साथ

his head proudly tossed about in buzzing, is sporting among the bed of lotuses, constantly whirling round and round and impetuously blockading the female bees

RĀDHĀ (*aside*) Vṛndā has certainly something in her own mind when she speaks like this (*aloud*) Dear Vṛndā,

हला वुन्दे धण्णा कुसुमकीडओ जाओ कन्तेण समं कीलन्ति। मन्दभाइणीणं उण उम्माणं सूरोवासिणीणं दूरादो क्खणं वि पेक्खणं दुल्लहं। (प्रकाशम्)
[सखि वृन्दे! धन्याः कुसुमकीट्यः याः कान्तेन समं क्रीडन्ति। मन्दभागिनीनां पुनरासां सूर्योपासिकानां दूरात् क्षणमपि प्रेक्षणं दुर्लभम्।]

भवतु माधव जल्पमशृण्वतोः श्रवणयोरलमश्रवणिर्मम।
तमविलोकयतोरविलोकनिः सखि! विलोकनयोश्च किलानयोः ॥२०॥

क्रीडन्ति रमन्ते। अत्र भ्रमरीणां परामर्शेन कृष्णसहचरीणां गोपिकानामेव बोधः कान्तेन च कृष्णस्य। ता नूनं धन्याः कान्तप्रलोभनपटीयस्यो रमण्यः "धन्या योषित्प्रलोभिका"-इति वचनात्। ताभ्योऽसूयन्ती नायिका इतरासां मन्दभागिनीनां हतभागधेयानां पुनस्तु आसां अस्मादृशीनां सूर्योपासिकानां सौभाग्याभिवृद्ध्यर्थं सद्वरलाभाय च नित्यं भगवन्तमादित्यमुपतिष्ठमानानां कान्तस्य दूरात् क्षणमपि प्रेक्षणं दुर्लभम्। अत्र दूरादित्यनेन देशसामीप्यं क्षणमपीत्यनेन काललवमपि संयोगार्थं प्रतिक्षिप्तम्। धर्मानुष्ठानावबोधशून्यास्तिर्यग्जातीयाः स्त्रियोऽतिरश्चीनं कान्तसंयोगं लभन्ते पुनश्च प्रतिबोधवत्यः देवताराधनतत्परा मानुष्यः तस्माद्विप्रकृष्टा आकुलीभवन्तीति धिक् दैवदुर्विलसितमित्यात्मानमधिक्षिपन्ती स्वीयामुत्कण्ठां धन्याः प्रत्यसूयां प्रादुष्कुरुते।

आत्मग्लानिं विवृण्वती राधिका पुनराह भवत्विति — हे सखि! माधवस्य जल्पं स्वैरालापमशृण्वतोः मम श्रवणयोः कर्णयोरश्रवणिः श्रवणासामर्थ्यं बाधिर्यमेव अलं वरीय एव भवतु; एवमेव तं माधवमविलोकयतोः अनयोः मम विलोकनयोर्नयनयोः अविलोकनिः दर्शनक्षमताराहित्यमन्धत्वमेव भवतु किल। माधववचसां श्रवण एव श्रोत्रयोस्तद्दर्शन एव नेत्रयोः साफल्यम्, तत्तदभावे अनयोरिन्द्रिययोर्वैयर्थ्यापत्तिरेवेति

---

विहार करती हैं। हतभागिनी इन सूर्योपासिकाओं को तो क्षण भर के लिए भी दूर से दर्शन दुर्लभ हैं।

हे सखि! मेरे ये दोनों कान यदि कृष्ण के मधुर वचनों से वञ्चित रहते हों तो कहीं अच्छा हो कि इनमें श्रवण शक्ति ही न रहे, और यदि ये मेरे नेत्रद्वय कृष्ण के दर्शन न कर पाँय तो वही अच्छा हो कि इनमें दर्शन-शक्ति ही न रहे ॥ २० ॥

---

blessed are these flower-worms (= female bees) who play with their lover. For these unfortunate worshippers of the Sun (= for us), on the other hand, not even a momentary glimpse of him, howsoever from a distance, is available!

20. Oh friend! If my ears donot catch the voice of Śrī Kṛṣṇa, better it is that they lose the power of hearing, and if these eyes of mine cannot catch the glimpse of him, it is better they lose the vision itself.

वृन्दा — सखि राधे ! रात्रिन्दिन दिव्यलीलया दीव्यसि, तथापि कथं निर्विद्य खिद्यसे ?

ललिता — हला राहे ! कध मथरा विअ लक्खीअसि ? [सखि राधे ! कथ मन्थरेव लक्ष्यसे ?]

वृन्दा — हैयङ्गवीनमृदुला त्वमतः कथं वा
हैयङ्गवीनकलसीं चलिता वहन्ती ।

तादात्म्यातिशायिनीं माधवविषयिणीं रतिमुद्भावयन्ती पूर्वरागे अयोगविप्रलम्भशृङ्गाररस महता निर्वेदेन सञ्चारिणा भावेनानक्ति । अत्र क्लिशेति गर्हायाम् । पद्येऽस्मिन् काष्ठा नीतो निर्वेद भाणिकाया अपरमङ्ग विन्यासाख्यमुपन्यस्यति । पद्येऽस्मिन् प्रतीपमलङ्कार । अत्र मर्मस्पर्शि माधुर्यं, ललित सानुप्रासो बन्ध , लाटी रीति , द्रुतविलम्बितञ्च रसानुगुण वृत्तम् — "द्रुतविलम्बितमाह नभौ भरौ" — इति लक्षणात् ॥ २० ॥

अस्थाने खलु राधिकाया एतावान्खेद इत्यामन्त्रती वृन्दा तामाह — सखीति — अयि राधे ! रात्रिन्दिवमहर्निश दिव्यलीलया दिव्या लोकोत्तरा या लीला अथवा दिव्येन माधवेन सार्धं लीलया दीव्यसि क्रीडसि, तथापि निर्विद्य नैराश्येन खिद्यसे आत्मान मुधा ग्लपयसि इति ।

वृन्दा किमपि हृदि कृत्वा जल्पतीति विभाव्य तद्वचसो वितथत्व मन्वाना अनाकर्णितत्व रूपयन्ती प्रत्युत्तरदानेनाप्यसभाजयन्ती यावद्राधा तत्रोदास्ते ललिता राधाया गतौ शैथिल्यं प्रेक्षमाणा तद्धेतुमनुयुङ्क्ते कथमिति — अयि राधे ! कथ सञ्चारे त्व मन्थरा शिथिलगति इव लक्ष्यसे, किमु श्रान्तेति प्रश्न ।

यावदुत्तरयति राधा तावदन्तराल एव परमसुकुमार्यास्तस्या नवनीतोद्वहनश्रममायास निमित्त कल्पयन्ती वृन्दा झगित्याह — हैयङ्गवीनेति — हैयङ्गवीनमिव मृदुला प्रकृतिपेलवा त्वमसि, अत एव कोमलाङ्गी सत्य कथ वा ( इति वितर्के ) हैयङ्गवीनेन पूर्णां कलसीं घटीं

---

वृन्दा — सखि राधा ! तू नित्य ही दिव्यलीला का आनन्द लेती रहती है, फिर दु खी होकर क्यों ऐसी खिन्न हो रही है ?

ललिता — अरी राधा ! तू इतनी शिथिल क्यों हो रही है ?

वृन्दा — तू स्वय नवनीत के समान सुकुमार है तो तू नवनीत से भरे कलश को माथे पर रख कसे चल सकती है ! जुही की कली रखने योग्य तेरे

---

VRNDĀ — Friend Rādhā ! you are day and night refulgent with divine sport , what makes you then so despondent and feel dejected ?

LALITĀ — Why friend Rādhā ! you look so tired and bent ?

VRNDĀ — 21 You are as delicate as fresh butter, how can you carry a pot of fresh butter ! Ah ! your head, fit only for

हा मल्लिकार्पणपदं व्यथते शिरस्ते,
मूर्धन्यमुं मम निधेहि कृपां विधेहि ॥२१॥

**राधा** — सहि ! कलसीए भारो ण मं मंथरविदि । पेक्ख, भूरि भूसणाणं च्चेअ जाहि णिआरिदाए वि ललिदाए प्पसहं अप्पिदाइ ।
[ सखि ! कलस्याः भारो न मां मन्थरयति । प्रेक्षस्व, भूरिभूषणानामेव यानि निवारितयापि ललितया प्रसभमर्पितानि । ]

**विशाखा** — हला राहे ! क्खणं चिट्ठ । उद्धारेमि मडणभारं ।
[ सखि राधे ! क्षणं तिष्ठ, उत्तारयामि मण्डनभारम् । ]
( इति यथार्हमुत्तारयति )

---

वहन्ती शिरसि निधाय चलिताऽसि । हा इति खेदे । ते शिरः मल्लिकायाः परमसुकुमारस्य जातीकुसुमस्य अर्पणं विन्यासस्तस्य पदं योग्यमथवा स्थानमपि कृतञ्चेत् व्यथते क्लिश्यति । जातीप्रसूनभरमप्यसहमानं तव शिरः, अतः इमां कलसीं मम मूर्धनि शिरसि निधेहि स्थापय, मयि कृपां विधेहि, मा मात्मानं क्लेशयेति राधामुपयाचते स्नेहपारवश्यात् ।

अत्र प्रथमचरणे लुप्तोपमा, तृतीयचरणे च व्यतिरेकः । नायिकायाः परमसौकुमार्यं ख्याप्यते । प्रसादो गुणः, वैदर्भी रीतिः । वसन्ततिलका वृत्तम्–"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥ २१ ॥

वृन्दाया ऊहं प्रत्याख्यान्ती राधिका तां मान्थर्यहेतुं विज्ञापयति — **कलस्या इति** — कलस्याः भारः न मां मन्थरयति शिथिलगतिमतीं करोति नायास्यतीति भावः । तस्य भारोद्वहनेनैवामिल्पितसिद्धिरिति तत्राकूतम् । यदि नवनीतं न वहेयं शुल्कादानव्याजेन कथं वा मां माधवो निरोत्स्यति यदर्थं नितान्तमातुराऽस्मीति, अतस्तस्य भारो मां नोद्वेजयति । आयासहेतुस्तावत् **प्रेक्षस्वेति** — भूरिभूषणानां भारः मां मन्थरयति, यानि भूषणानि ललितया प्रसह्य हठेन निवार्यमाणया मद्वपुषि आरोपितानि ।

ततो विशाखा राधाया भूषणभारं लघूकर्तुमिच्छन्ती प्राह **सखि राधे इति** — क्षणं तिष्ठ विरम, ते मण्डनानामलङ्काराणां भारमुत्तारयामि अपनयामि–इत्युक्त्वा तथा करोति ।

---

सिर को इससे व्यथा होती है । अतः मुझ पर कृपा कर – इस पात्र को मेरे सिर पर रख दे ॥२१॥

**राधा** — सखि ! इस कलश का भार मुझे शिथिल नहीं कर रहा है किन्तु बारबार मना करने पर भी ललिता द्वारा पहिनाए हुए इन आभूषणों का बोझ मुझे कष्ट देरहा है ।

**विशाखा** : अरी राधा ! ज़रा रुक जा, मैं इन आभूषणों को उतार देती हूँ ।
( अलङ्कार उतारने लगती है )

---

a jasmine to be placed upon, is pained with the pot of fresh butter on it. Put it on my head, please, and oblige me.

RĀDHĀ : Friend ! it is not the weight of the pot that bends me. What is crushing me is the abundance of ornaments which, though forbidden, Lalitā put forcibly on me.

VIŚĀKHĀ : Friend Rādhā, wait a bit, I shall relieve you of the burden of the ornaments. (*She suitably removes them*)

वृन्दा — त्रपते विलोक्य पद्मा ललिते राधां विनाऽप्यलङ्कारम् ।
तदलं मणिमयमण्डनमण्डलरचनाप्रयासेन ॥२२॥

राधा — हला वुन्दे ! तत्थ जण्णे हेअंगइणोवहारिणीणं हरिणी-
णेत्ताणं सव्वंगारिहस्स मण्डणउलस्स मुणिजणादो उवलद्धी सुणीअदि ।
[ सखि वृन्दे ! तत्र यज्ञे हैयङ्गवीनोपहारिणीनां हरिणीनेत्राणां सर्वगार्हस्थ्यमण्डन-
कुलस्य मुनिजनात् उपलब्धिः श्रूयते । ]

---

अनान्तरे राधावपुषो निसर्गत. सुषमा श्लाघमाना वृन्दाऽऽह **त्रपत इति** —
अयि ललिते ! राधा विनाप्यलङ्कारं भूषणान्यपरिदधानामपि विलोक्य पद्मा नाम
चन्द्रसखी रमा वा त्रपते व्रीडिता भवति, मणिमयाना रत्नप्रचुराणा ( मणिमयेत्यत्र
प्राचुर्यार्थे मयट् ) मण्डनाना मण्डलम् समुदाय तस्य रचना विन्यासः तद्रूतेन प्रयासेन
अलम् – माऽस्तु तादृश प्रयासः वैयर्थ्यापत्तेः, भूषणानाम् इतररमणीना त्रपाकरत्वेन
वर्ष्मणश्चारुतापादकत्वेन प्रियाकर्षकत्वेन साफल्य, तदविकलं विनाऽपि मण्डनानि
राधावपुषा साध्यते इति हेतोः ।

अत्र श्रीराधावपुषि रूपं नाम कायिको गुण — "अङ्गान्यभूषितान्येव
केनचिद्भूषणादिना । येन भूषितवद्भाति तद्रूपमिति कथ्यते ।"– इति लक्षणात् ।
कालिदासोऽप्याह – "प्रियेषु सौभाग्यफला हि चारुता" — इति । अत्रोत्तरार्धे
दीर्घसमासेन घटितं पदं नि भेडतया मण्डनसन्निवेशस्यानुरणनमिव कुर्वदोजस्विता
दधत् अनुद्वयसयोगेन बहुशः गौडीरीतिं निदर्शयति । अत्र आर्या जातिः ॥२२॥

राधिका वृन्दां सम्बोद्ध्याह **तत्र यज्ञ इति** — तत्र गोविन्दकुण्डोपकण्ठे
रचिते यज्ञे हैयङ्गवीनोपहारिणीनां नवनीतनेत्रीणां हरिणनेत्राणा रमणीना सर्वः

---

**वृन्दा :** अरी ललिता ! व्रजसुन्दरी पद्मा राधा के निरलकार शरीर की सुषमा को देख मन ही मन लज्जित होती रहती है । अत एव राधा के लिए मणिमण्डित आभूषणो क धारण करने का प्रयास व्यर्थ ही है ॥२२॥

**राधा :** अरी वृन्दा ! सुना जाता है कि यज्ञशाला मे नवनीत ले जानेवाली मृगनयनी गोपिकाओं को समस्त गृहस्थोचित मण्डन प्राप्त होने वाले हैं ।

---

VRNDĀ : 22 Lalita ! Padmā, the well known beauty of Braja (or Goddess Laksmi) blushes when she sees Rādhā even unadorned. No use exerting on decorating her with numerous pieces of jewellery

RĀDHĀ , Friend Vrndā ! they say a full decorative set of household ornaments will be had by each of the fawn-eyed blondes offering fresh butter at that sacrifice.

**वृन्दा** — न केवलं मण्डनकुलस्यैवोपलब्धिः किन्तु क्रियारम्भ एव निजाभीष्टानामपि । तदेभ्यः प्राञ्जलमञ्जलिः क्रियतां कामदेभ्यः शैलेन्द्रतीर्थेभ्यः । ( इति सर्वास्तथाकुर्वन्ति )

**चम्पा** — सहि चित्ते । अदिचित्ता एसा णिहिल-जीअ-मंडली-कुंडिआ-कुलालस्स पुंडरीअ-जोणिणो कुंडेण मंडिदा गिरिन्द-सिहर-त्थली

---

साकल्येनेत्येकवचनम् गार्हस्थ्यस्य दाम्पत्यजीवनस्य कृते यानि मण्डनानि सौभाग्यखहपाणि तेषां कुलस्य समूहस्य उपलब्धिः भवित्रीति श्रूयते । वृन्दायाः पूर्वतरवाक्यसन्दर्भमनुमोदमाना भङ्ग्या मण्डनानामिहोत्तारणमेव वरीयो यतस्तत्र मखे समस्तमण्डनमण्डलस्योपलब्धिर्भाविनीति स्फुटोक्तिः प्रतीयमानतया स्वप्रियोपलब्धिं केतयते वाग्मिनी राधेति विभाव्यम् ॥

वृन्दा ततोऽप्यधिकमाशंसमाना राधामुपढौकते **न केवलमिति**—नैतावदेव । किन्तु निजानां समेषाममीष्टानां मनोरथानां क्रियारम्भः पूरकव्यापाराणामुपोद्घातः अपि भविता । मण्डनकुलावाप्तितोऽप्यधिको लाभः अभीष्टक्रियारम्भस्तत्र भावीति तात्पर्यम् । तत् एभ्यः प्राञ्जलं समस्ताङ्गुलिप्रसारणपूर्वकं सरलः अञ्जलिः प्रणतिसूचकः करबन्धः कामान् ददति ते कामदास्तेभ्यः शैलेन्द्रस्य गोवर्धनस्य तीर्थेभ्यः उपाध्यायेभ्यः ऋषिभ्यः क्रियताम् ।

नवनीतपूर्णे घटे उह्यमाने शिरसा प्रणामस्याशक्यत्वादञ्जलिबन्धेन आत्मनः प्रह्वीभावप्रदर्शनमादिश्यते । अपि च कामदेति तीर्थविशेषणमत्र स्थाने स्थाने इहैव भवतीनामचिरेण

---

**वृन्दा :** केवल मण्डन-सामग्री उपलब्ध होने वाली हैं इतना ही नहीं, अपितु उन्हें अपने अपने अभीष्ट मनोरथों की पूर्ति का आरम्भ भी होने वाला हैं। अतः सकल कामनाओं के पूरक गोवर्धनगिरि के तीर्थों ( शुभस्थान एवं ऋषिमण्डल ) को हाथ जोड़कर प्रणाम करो।

( सब सखियाँ वैसा ही करती है )

**चम्पा :** अरी चित्रा ! समस्त जीवजगत्रूप ब्रह्माण्डभाण्ड के निर्माता कुम्भकाररूप कमलयोनि ब्रह्मदेव के नाम से प्रख्यात कुण्ड से

---

**VṚNDĀ :** Not only that, but the fulfilment of one's own desires is also assured at the very initial stage of the action, *viz.* of offering fresh butter. Therefore, fold your palms respectfully in all sincerity to those wish-fulfilling holy places (like Brahma-kuṇḍa and others) situated on this lord of mountains, Govardhana.

*( all do so )*

**CAMPĀ :** Friend Citrā ! here on the right shines this extremely picturesque mountain-plataeu of Govardhana which

डाहिणे रेहदि [सखि चित्रे ! अतिचित्रा एषा निखिलजीवमण्डली कुण्डिकाकुलालस्य पुण्डरीकयोनेः कुण्डेन मण्डिता गिरीन्द्रशिखरस्थली दक्षिणे राजते।]

**चित्रा** — सहि ! इध ज्जेअ भत्ताणं वच्छलो हरिदेअणामा णाराअणो वसेदि । [सखि ! इत एव भक्तानां वत्सलो हरिदेवनामा नारायणो वसति।]

---

कामलीलाविलासो भवितेति सूचनात्तासामिप्रायमत परिकरालङ्कारमुद्भावयति। अञ्जलिकरणस्य प्रणामरूपत्वात्तादर्थ्य इति चतुर्थी। "तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरज सु च। अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु" — इति मेदिनी।

[इति उक्तप्रकारेण सर्वा गोप्य तथा प्राञ्जलमञ्जलिं कुर्वन्ति।]
अत्रान्तरे चम्पा गोवर्धनशिखरस्थलीम्प्रति सर्वासां ध्यानमावर्जयन्ती चित्रां नाम सखीं सम्बोधयन्ती प्राह –

**सखि चित्र इति** — अतिचित्रा सविशेषं विचित्रा नैकरूपा एषा निखिलानां जीवानां प्राणभृतां मण्डली समुदाय स एव कुण्डिका भाण्डं तन्निर्मितौ निमित्तकारणस्य कुलालस्य घटकारस्य, पुण्डरीकं विष्णोर्नाभिकमलं योनिरुत्पत्तिस्थानं यस्य तादृशस्य ब्रह्मण कुण्डेन पल्वलेन ब्रह्मकुण्डेति ख्यातेन मण्डिता सुशोभितेयं गिरीन्द्रस्य गोवर्धनस्य शिखरे वर्त्तमाना स्थली अकृत्रिमा भूमि इत दक्षिणे दक्षिणभागे राजते इति। अत्र रूपकमलङ्कार॥

चित्रा तद्विशेषमाह – **इत एवेति** – इत अस्मिन्नेव स्थले (अत्र सप्तम्यर्थे तसिल्) भक्तानामिति कर्मणि षष्ठी भक्तानुद्दिश्य वत्सल कारुण्यादिगुणसम्पन्न प्रीत. हरिदेवनामा हरिदेव इत्याख्यया विश्रुत नारायणो भगवान् विष्णु "नराणां निवासानामयनमिति नारायणपदम्" वसति॥

---

सुशोभित गिरिराज की यह शिखरभूमि तुम्हारे दक्षिण की ओर विराजमान है।

**चित्रा :** यहीं भक्तवत्सल हरिदेव नामक नारायण निवास करते हैं।

---

is adorned with Brahmakunda, the pool named after Brahmā, the lotus-born Creator — the potter who has made this pot of entire community of living beings

CITRĀ : Friends, it is here where lives Nārāyana, called Harideva, who is fond of his devotees.

वृन्दा — पश्य पश्य —

सखि बहुलशिरस्त्वे भूभृतौ चेह साम्यं
दधदपि गिरिरश्चत्येष शेषाद्विशेषम् ।
अघरिपुरयमङ्के मूर्ध्नि यस्योदरे च
प्रणयति रतिलीलामद्भुतां प्रेयसीभिः ॥२३॥

ततोऽपि विशेषं विज्ञापयन्ती वृन्दाऽऽह—**पश्य पश्येति** । वीप्सायां द्विरुक्तिः । वक्ष्यमाणश्लोकार्थस्य कर्मत्वं पश्य-पश्येति चूर्णकस्थस्य क्रियापदस्येत्यवधेयम् ॥

उन्नतशीर्षस्य फणिपतेः शेषस्य गिरिराजस्य गोवर्धनस्य तारतम्यं प्रकटयति **सखि बहुलेति** – हे सखि चम्पे ! बहुलशिरस्त्वे शिरसां फणानां सानूनाञ्चानेकत्वरूपे उभयोः साधर्म्ये विद्यमानेऽपि भूभृतौ पृथ्वीधरणधर्मेऽपि साम्यं दधत् धारयन्नपि गिरिर्गोवर्धनः शेषनागाद् विशेषमाधिक्यमश्चति प्राप्नोति । तदुपपादयति यथा अयं प्रकृष्टः अघरिपुः अघासुरस्य निहन्ता श्रीकृष्णः यस्य गिरेः मूर्ध्नि शिरसि, उदरे मध्यभागे दरीगृहे प्रेयसीभिर्नैकाभिः प्रियाभी रमणीभिः अद्भुतामनेकविधां रतिलीलां प्रणयति प्रणयप्रवण आरचयति । अत्रायं विशेषस्तु व्यज्यते – अघरिपुः अयमितिविशेषणमहिम्ना पूर्णकलः अंशी भगवान् श्रीकृष्णः गिरौ विहरति, तत्र शेषशरीरे श्रीकृष्णस्यांशरूपो विष्णुः केवलं शेते एव; अपि च तत्र कुण्डलीकृते शेषशरीरे एकत्रैव विष्णोः स्थितिरिह तु गिरौ तन्मूर्ध्नि उदरे कन्दरादौ च इत्यनेनोच्चावचेषु रम्यस्थलेषु सर्वत्र विहारः, अपि च तत्र शेषशरीरे एकया एव लक्ष्म्या सहोपस्थितिरत्र गिरौ तु प्रेयसीभिः भूयसीभिः, पुनश्च तत्र शेषे केवलं लक्ष्मीकृतचरणसंवाहनमात्रः सम्पर्कः, इह गिरौ तु अद्भुतां मणित-रणित-क्वणितललितां रतिक्रीडां निर्विशते इति नैकप्रकारकं शेषापेक्षया विलासाधिक्यं प्रपञ्चितम् ।

पद्येऽस्मिन् बहुलशिरस्त्वे भूभृतौ च श्लेषालङ्कारः, शेषपक्षे शिरांसि फणाः गिरिपक्षे शिखराणि, एवमेव फणासु निहितभारत्वात् शेषस्य भूभृत्त्वं (भुवं बिभर्ति

---

वृन्दा : देखो, देखो ! अनेक फणाओं के मण्डल से सुशोभित शेषनाग एवं शताधिक शिखरों से विभूषित इस गिरिराज में बहुत अधिक समता होने पर भी, गिरिराज की विशेषता कहीं अधिक है; कारण, [शेषनाग की शय्या पर तो अघासुर के निहन्ता श्रीकृष्ण के अंशभूत नारायण केवल महालक्ष्मी के ही साथ विहार करते हैं, किन्तु] गिरिराज की कन्दरा कन्दरा में, उसके मध्यभाग में, उसके शिखरों पर (अंशी)

---

VṚNDĀ : 23. Behold, friend, this mountain, though, in the matter of having numerous peaks ( hoods ) it bears resemblance with the thousand-hooded serpent ( Śeṣa ), has a superiority over the latter in that Lord Kṛṣṇa, the slayer of the demon Agha, leads the marvellous

ललिता — ( राधामवेक्ष्य । संस्कृतेन )

निविडरुचिनि गण्डग्रावखण्डे गरिष्ठे
सुरभिणि किर दृष्टिं गौरि ! गोवर्धनस्य ।
सखि ! मृगमदपङ्कैः सुष्ठु यत्रोपविष्ट-
स्त्वदुरसि रसिकेन्द्रः पत्रवल्लीमलेखीत् ॥२४॥

---

धारयतीति ), गिरेस्तु भूधरत्वाद् भूभृत्त्व भुवः स्थिरीकरणात् ( भुवं बिभर्ति पोषयतीति-भृञ् धारणपोषणयोरिति धातुपाठवचनात् ) शेषाद्विशेषम् विगतशेषत्वमतिक्रान्तशेषधर्मत्ववैशिष्ट्यमञ्चतीति भाव – तेनात्र छेकानुप्राससहचारी व्यतिरेकालङ्कार । उत्तरार्धेन तदुपपत्तिस्थापनादत्र हेत्वलङ्कार । अपि च भगवतोऽत्र अघरिपुधर्मेण परामर्शात् श्रीकृष्णस्यैव बोध यस्तु अंशी, अन्यत्सर्वं तदंशभूतम् इति अयम्पदेन सङ्केतितम् । अत्र विशेष्यस्याघरिपुपदस्य साभिप्रायत्वात्परिकराङ्कुरो नामालङ्कार । अत्र इहैव कन्दरादिस्थलीषु विविधा लीला भाविन्य इति सङ्केतस्थलान्यपि सङ्केतितानि । अत्र प्रसादगुणमण्डिता वैदर्भी रीति । मालिनी वृत्तम् ॥२३॥

ललिता राधा पश्यन्ती संस्कृतेन गिरेः प्रीत्यापादकत्व स्मारयति — **निविडरुचिनीति** — अयि गौरि नवयौवने राधे ! गोवर्धनस्य गिरे ( पुरो दृश्यमाने ) सुरभिणि प्रसमरविकचकुसुमसौगन्ध्यवति गरिष्ठे गुरुतमे निबिडत्वात् रुचिनि सुखावहे गण्डग्राव्णः खण्डे महति शिलापट्टे दृष्टिं किर इतस्तत देहि । अयि सखि ! यत्र शिलोच्चये उपविष्ट समासीनो रसिकेन्द्रो लीलाकोविद श्रीकृष्ण त्वदुरसि त्वदीये वक्ष स्थले मृगमदपङ्कै कस्तूरिकाविलेपनै सुष्ठु शोभना पत्रवल्लीं अलेखीत् मण्डनानि व्यरचत् ।

अत्र पूर्ववृत्तस्य स्मरणात् स्मरणमलङ्कार उद्दीपनविभावमाविर्भावयन्ति येनौत्सुक्य नाम सञ्चारीभावो पुष्टिमुपैति । ग्रावखण्डस्य सर्वाण्यपि विशेषणानि साकूतानि । सुरभित्वान्मनोमोहकतया रत्युपस्कारकता, निबिडरन्ध्राभावेन शय्येव

---

स्वय श्रीकृष्ण अपनी अनेक प्रियतमाओं के साथ प्रणयलीला करते हैं ॥२३॥

ललिता ( राधा की ओर देखती हुई संस्कृत में — )

अरी गोरी ( राधा ) ! गोवर्धन गिरि के अत्यन्त सुगन्धी, परम सुहावने उस भारी पत्थर की चट्टान की ओर ज़रा नज़र तो डालो जहाँ, अरी सहेली ! शान्ति से बैठ कर रसिकशिरोमणि श्रीकृष्ण ने कस्तूरी के लेप से तेरे वक्ष स्थल पर नाना प्रकार के मण्डल माँडे थे ॥२४॥

amorous sport with his beloveds at its ( mountain's ) foot, in its valleys and on its top and every where

LALITĀ ( *Looking at Rādhā* )

24 Fair friend, Cast your eyes on that densely lustrous, fragrant piece of the huge rock on the Govardhana mountain, seated on which (rock) (Lord Kṛṣṇa)

**चम्पा** — ( जनान्तिकम् – संस्कृतेन ) सखि, समाकर्ण्यताम् –

**अयमुपरि परिस्फुरद्-बलाका-ततिरनुसञ्चल-चञ्चला-विलासः ।**
**अचलशिरसि नीलमण्डपस्य द्विगुणयति द्युतिमम्बुदः स्वधाम्ना ॥२५॥**

समतलता, गरिष्ठत्वात् तत्राधःपातशङ्कानिरासद्वारा विविधै रतिबन्धैरासज्यमानत्वे तद्भारसहिष्णुता गण्डप्रावेत्यनेन आयामवत्ताऽभिव्यज्यते येनास्य स्थलस्य रतिक्रीडोपयोगिता सूच्यते । पुरा यत्र पत्रवल्लीमण्डनान्यकार्षीत् कृष्णस्तत्रैव विश्रम्भेण पूर्वपरिचितत्वात्स्थानस्यास्य पुनरपि सम्भोगस्य सम्भावनमभिव्यज्यते । अत्रैव त्वं पुनरपि निर्वेशसुखपरम्परामाशु लब्धासे इत्यतः स्निग्धां स्वीयां दृष्टिं पूर्वोपभोगं स्मारं स्मारं किर सर्वत्र निक्षिपेति भावः । पूर्वरागविप्रलम्भपरिपोषकत्वात् पद्यस्यास्य वैशिष्ट्यम् । प्रसादो गुणः, वैदर्भी रीतिः । वृत्तञ्च मालिनी ॥२४॥

**चम्पा** — जनान्तिकम् अन्यैरश्रूयमाणं बोद्धव्यमात्रावगाहि नियतश्राव्यं वचनम् । संस्कृतमाश्रित्य समीपस्थां ललितामुद्दिश्याह **समाकर्ण्यतामिति** । किन्तदित्याह **अयमुपरीति** — अयं पुरो दृश्यमानः उपरि गिरिशिरसि ( आदौ ) परिस्फुरन्तीनां उदयमानानां बलाकानां ततिः । बकजातीया श्वेतवर्णा लघीयसी पक्षिजातिः बलाका याः अम्बुदागमे खे पंक्तिबद्धाः सञ्चरन्ति तदनु सञ्चलानामस्थिराणां चञ्चलानां विद्युतां विलासः दीप्तिः, ततः अचलस्य गिरेः शिरसि शिखरे नीलमण्डपस्य श्यामलमण्डपस्य द्युतिं शोभाम् अम्बुदः मेघः स्वेन धाम्ना नीलतेजसा द्विगुणयति । दृश्यमिदं रमणीयं यथा–खस्य नीलत्वं तत्र सिता बलाकाः ततः विद्युतां पीताभा तत्समवायेऽम्बुदस्य श्यामता तेजस्विनी परिसरस्य शोभां संवर्धयतीति भावः ।

अत्र स्वभावोक्तिरलङ्कारः । चञ्चलापदेन लोला गोप्यः, अम्बुदेन च कृष्णः अध्यवस्यते । अतोऽत्र साध्यवसानाति- शयोक्तिः प्रतीयमाना चमत्कारिणी । अत्र 'भ्रान्तिनाशो विरोधः स्यात्'– एवं परिभाषितो विरोधो नाम भाणिकायास्तृतीयमङ्गमुपस्थाप्यते । सानुप्रासो बन्धः, गुणरीती पूर्ववत् । वृत्तञ्च पुष्पिताग्रा ॥२५॥

---

**चम्पा** — (एकान्त में – संस्कृत के माध्यम से ) सखि ! सुनो । यहाँ इस पर्वत पर फुरफुराती बलाकाओं की कतार और उस पर चमचमाती चञ्चल विजलियों की दमक और यहीं पर नील मेघ श्यामलमण्डप की शोभा को अपनी आभा से दुगुनी कर रहा है ॥२५॥

---

the foremost among the master artists drew beautiful figures on your bosom with solution of musk.

CAMPĀ : (*Speaking aside [ to Lalitā ]* Friend ! listen,

25. This cloud above with its innate Lustre, with a row of herons flying about and with flashes of lightning glittering along side doubles the brightness of the Blue Arbour (situated) on the top of this mountain.

राधा — ( वृन्दामवेक्ष्य सकम्प सस्कृतेन )

उरीकुर्वन् गौरीं गिरिशिखरभागम्बररुचिं
जगद्वंशे युञ्जन् मदनघनघूर्णाघुणघटाम् ।
धृतिध्वान्तं भिन्दन्नमृतनिधिरिन्दीवरदृशां
दृशां बन्धुः कोऽयं विधुरिव पुरस्तादुदयते ॥२६॥

राधा — वृन्दां वीक्ष्य सकम्प भावोद्रेकवशाद्वेपथुमनुभवन्ती सस्कृतगिरा प्राह उरीकुर्वन्निति — कोऽय विलक्षणोऽज्ञातस्वरूप गिरिशिखरभाक् पर्वतोपरि वर्त्तमानः, अम्बरस्य रुचि कान्ति गौरीं शुभ्राम् उरीकुर्वन्, जगद्वंशे ब्रह्माण्डभाण्डरूपे वंशदण्डे मदनस्य कामस्य घना सन्तता तीव्रा घूर्णा भ्रमि सा एव घुणाना वंशोत्कीर्णनपराणां कीटाना घटा समूहस्तां युञ्जन् नियोजयन् जगत् मन्मथविकारजन्यभ्रमितातिना घूर्णयन्नित्यर्थ, परञ्च इन्दीवरदृशा कमलाक्षीणां सुन्दरीणा धृति धैर्यमेव ध्वान्तस्तिमिर भिन्दन्, तासाञ्च दृशा बन्धु· नयनप्रिय अमृतनिधि विधुश्चन्द्रमा इव पुरस्तादुदयते । इति चन्द्रपक्षे ।

विशेषणाना भिन्नार्थबोधकत्वात् विधुवाच्यचन्द्रपदस्य "कृष्णचन्द्रेति" नाम्न· एकदेशव्यपदेशात्समग्रग्रहणन्यायेन पद्येऽस्मिन् शब्दशक्त्युत्थध्वनिवशात् श्रीकृष्णपरकोऽर्थोऽप्यवबुध्यते—यथा—गिरिशिखरभाक् गोवर्धनसानुवर्त्ती, गौरीं पीतवर्णाम् अम्बरस्य परिधानस्य रुचिम् आभामुरीकुर्वन् धारयन्, वंशे स्वीयवंशीदण्डे जगदखिलमिदं मदनस्य मन्मथस्य घना सन्तता निरवकाशा या घूर्णा भ्रमि सा एव घुण सारलोपी कीटविशेषस्तस्य घटा ( घट्यते इति घटा ) युञ्जन् प्रापयन् ( जनाना ) धृति स्थैर्यम्मनोजविकारविरोधि अत एव दीप्तिमदुल्लासराहित्यवशाज्जडतापादकत्वाद् ध्वान्त तिमिर भिन्दन्नपाकुर्वन् सपमजाड्यापहारपूर्वक नमविलासमुल्लासयन् अमृतस्य ( न मृतमिव भवति यस्मिन् तस्य ) चैतन्योद्बोधनस्य निधि कोप, परञ्च इन्दीवरे नीलकमले इव दृशौ नयने यासा तादृशीना ललनाना दृशा बन्धु· उपकारको हितकर कोऽय पुरस्तात् विधुरव चन्द्र एव भवेदीदृश उदयते समुल्लसतितराम् — श्रीकृष्ण एव भवेदिति सम्भाव्यते ।

---

राधा — ( वृन्दा की ओर देखती हुई, पुलकित हो, सस्कृत में कहती है )

अरी ! गिरि के शिखर पर चढ़ा हुआ, यहाँ सामने आकाश ( >वस्त्र ) की कान्ति को शुभ्र ( >पीत ) बनाता हुआ जगत्समूह ( >वेणु ) को मन्मथ के सघन घूर्णन रूपी घुन की पङ्क्ति से योजित करता हुआ, कमलनयनियों के धैर्यरूपी तिमिर को ध्वस्त करता हुआ तथा उनके

---

RĀDHĀ (*Looking at Vrndā, with a thrill*)

26 Who is this, the delight of eyes, that is rising in front of us like the Moon, the treasure of nectar, who resorting to the top of the mountain, is brightening the lustre of the sky, and employing the entire gamut of love-into-

वृन्दा — सखि राधे ! समाकर्ण्यताम् ।

समस्तजगतीभुवां मृगदृशामभीष्टाशिषः
समर्थमपि पूरणे किमपि दोलयन् दोर्युगम् ।
असौ कुलजवल्लवीमदनवेदनोन्माद-
व्रतप्रणयिनोरसा रसिकमौलिरुद्भासते ॥२७॥

अत्र अम्बर-गौरीतिपदगतः श्लेषः, चन्द्रपक्षे कोऽयमित्युपमेयत्वे सति विधुरिवेत्यौपम्यादत्र श्लिष्टोपमा; कोऽयमित्यत्र सम्भाविते नायकपक्षे विधुरित्यत्रासौ चन्द्र एव भवेत् इति सम्भावनायामिवपदप्रयोगे वस्तूत्प्रेक्षालङ्कारः। कोऽयमित्यत्र शुद्धः ससन्देहश्च। जगद्वंश-घूर्णघुण- धृतिध्वान्तपदेषु समस्तं निरङ्गं रूपकम्। दृशां बन्धुरित्यत्र व्यस्तरूपकम्। दृशां दृशामित्यत्र यमकम्, द्वितीयचरणान्ते वृत्त्यनुप्रासः प्रथमे पादे च, शेषभागे छेकश्रुत्यनुप्रासौ। अपि च घूर्णया मदः, धृतिविरहाद् विबोधपूर्वकश्चपलभावः, दृशां बन्धुत्वेन ललनानां चेतसि औत्सुक्यं, पुरस्तादुदये तु हर्षः — एवं बहूनामभिव्यज्यमानानां सञ्चारिणां भावानां शबलता रतेः स्थायिभावस्य परिपोषिकेति दिक्।

अत्र प्रसादसौकुमार्यकान्तयो गुणा, वैदर्भी रीतिः, रसालेव शिखरिणी वृत्तम् ॥२६॥

एवं सन्दिहानां प्रियसखीं राधां निश्चयोक्त्या वृन्दा समुद्बोधयति समाकर्ण्यतां श्रूयतामित्युपक्रम्य **समस्तेति** — असौ समस्तानां सर्वासां, जगती पृथ्वी भूरुत्पत्तिस्थानं यासां ताः जगतीभुवस्तासां, मृगस्य दृशाविव दृशौ यासां ताः मृगदृशः हरिणनयनाः स्त्रियस्तासाम् अभीष्टा अभिप्रेता या आशीः आशंसा तस्या आशिषः अपि पूरणे समग्रपृथ्वीवलयजातानां कामिनीनां मनोरथानां पूर्त्तये समर्थं दोर्युगं भुजद्वयं दोलयन् आस्फालयन् रसिकमौलिः सहृदयाग्रगण्यः श्रीकृष्णचन्द्रः कुलजानाम् अभिजातानां बल्लवीनां गोपाङ्गनानां मदनवेदनया मन्मथपीडया उन्मादनं व्याकुलीकरणमेव व्रतं तस्मिन् प्रणयिना बद्धादरेण उरसा वक्षः-स्थलेन उद्भासते देदीप्यते शोभत इत्यर्थः। सकलललनावृन्दस्य मनोरथान् पूरयितुं क्षमं

---

नयनों को विकसित करता हुआ, सुधानिधि चन्द्रमा जैसा यह कौन उदित हो रहा है ? ॥२६॥

वृन्दा — अरी राधा ! सुनो —
समस्त भूमण्डल की मृगनयनियों के भी मनोरथ को पूर्ण करने में समर्थ अपने भुजयुगल को डुलाता हुआ, कुलीन गोपाङ्गनाओं की

---

-xicating notes[1] in the World-flute is destroying the darkness of the lotus-eyed belles' firmness of mind.

VṚNDĀ : Friend Rādhā ! listen

27. It is Lord Kṛṣṇa, the foremost among the connoisseurs who, raising a little upwards both of his arms that are capable of fulfilling the desires of the fawn-eyed damsels of the whole world, is shining with his

---

1. i. e. playing the flute so melodiously as to make the entire world mad with love.

**राधा** — ( सविस्मय सस्कृतेन )

> प्रपन्नः पन्थानं हरिरसकृदस्मन्नयनयो-
> रपूर्वोऽयं पूर्वं क्वचिदपि न दृष्टो मधुरिमा ।
> प्रतीकेऽप्येकस्य स्फुरति मुहुरङ्गस्य सखि या,
> श्रियस्तस्याः पातुं लवमपि समर्था न दृगियम् ॥२८॥

---

निज बाहुयुगलमुद्यम्य किञ्चित् लोलयन् असौ कृष्ण कुलीनाना गोपिकाना मन्मथवेदनाया उद्बोधने गृहीतव्रतेन निजेनोरसा उपलक्षित अत्र विराजत इत्याकूतम् ।

दोर्युगस्य दोलन सकलाशापूरणसूचक भवति । अपि च यस्य वक्षो वीक्ष्य समालिङ्ग-नौत्सुक्य कुलजानामपि चेतसि प्रादुर्भवतीति सौन्दर्यविशेषगमकम् । प्रणय स्नेहोऽभिर-चिर्यस्यास्तीति प्रणयी तेन प्रणयिना अथवा प्रणेतु शीलमस्येति प्रणयी तादृशेनेति उरोविशे षणम् । किमपि इति विलक्षणत्व गमयति ।

पद्येऽस्मिन् विशेषणाडम्बरो नायकस्य नातिप्रकर्षं गमयन् अपुष्टार्थतामात्रसाधक सहृदयहृदयावर्जने श्लथ । अत्र मृगपदेन मृगीग्रहणमभीष्टम् — सामान्यवाचित्व पुसिप्रयुक्तस्य पदस्यानाभिप्रेतत्वात् कवे , मृगपदग्रहणे न कोऽपि विशेषार्थविगम छन्दोभङ्गनिवारणमात्र प्रयोजनम् । पाञ्चाली रीति । पृथ्वी वृत्तम् ॥२७॥

अहो कीदृक्सुषमाशाली मधुरिमाऽस्य हरेरेति विस्मय वह ती सस्कृतेनाह राधा — **प्रपन्न इति** — हरतीति हरिर्धैर्यहरोऽय कृष्ण अस्मन्नयनयो पन्थान वर्त्तनीम् असकृत् नैकवार प्रपन्न प्राप्त बहुवारमस्माभिर्दृष्टपूर्व इत्यर्थ , तथापि तस्य अपूर्वो विलक्षण अय मधुरिमा मधुरभाव क्वचिदपि एकवारमपि न दृष्ट ।

हे सखि वृन्दे ! (वस्तुतस्तु) एकस्यापि हरेरङ्गस्य प्रतीके एकदेशे या श्री शोभा स्फुरति दीव्यति (चमचमायते) तस्या श्रिय लव लेशमात्रमपि पातु सोत्कतया विषयीकर्तुम् इय मे दृक् समर्था न कुतस्तावत्समग्रस्याङ्गविशेषस्य समस्तस्य वपुषो वा ।

---

*मन्मथ पीडा को उन्मादित करने का व्रत लिये रसिकशिरोमणि श्रीकृष्ण अपने वक्ष स्थल की कान्ति से विराजमान हैं ॥२७॥*

**राधा** — ( विस्मयपूर्वक - सस्कृत में )

*श्रीकृष्ण कई बार हमारी आँखों के सामने उपस्थित हुए हैं, परन्तु उनकी ऐसी अपूर्व मधुरिमा की छटा तो कभी भी नहीं देखी। अरी सखि ! उनके किसी भी अँग के एक अवयव में भी*

bosom, cherishing a vow to intoxicate the lovely cowherd women of noble descent by pangs of love

RĀDHĀ *(In amazement)*

28 Several times have we seen Hari but never before was seen such extraordinary sweetness in him Friend ! this eye is incapable of drinking in even a drop of the

वृन्दा — यदा यदा पश्यसि माधवं पुरः
तदा तदैवास्य वदस्यपूर्वताम् ।
नवः सदा स्यात् किमयं तवाथवा
रागोन्मदे विस्मरतः किमक्षिणी ॥२९॥

अत्र नायकस्य प्रतिवेलं नवनवत्वमेव प्रतिभातीति बहुधानुभूतस्य विषयस्यानुभूतत्वभानमेवानुरागस्वरूपम् ।

"सदानुभूतमपि यः कुर्वन्नवं नवं प्रियम् ।
रागो भवन्नवनवः सोऽनुराग इतीर्यते ॥" इति उज्ज्वलनीलमणिः ।

अत्र कान्त्या प्रतिवारमेधमानः असौ माञ्जिष्ठो रागः मधुसमस्नेहप्रसूतः । स्नेहस्य स्वरूपं यथा 'हृदयं द्रावयन्नेष स्नेह इत्यभिधीयते । अत्रोदिते भवेज्जातु न तृप्तिर्दर्शनादिषु' ॥ इति । कविसमये पातुमित्यत्र पाधातोः तत्तदिन्द्रियद्वाराग्राह्यस्य वस्तुनः स्पृहणीयतया विषयीकरणे तात्पर्यमिति वामनभट्टः, अतः नायं लक्षणाविषयः — यथा 'निपीय यस्य क्षितिरक्षिणः कथामिति' नैषधीयचरिते श्रीहर्षः । "प्रतीकोऽवयवेऽपि स्यात्प्रतिकूलविलोमयोः" ।

अत्र प्रसादमाधुर्ये गुणौ, वैदर्भी रीतिः, वृत्तञ्च शिखरिणी ॥२८॥

राधायाः स्निग्धवचनमाक्षिपन्ती वृन्दा तां पृच्छति **यदा यदेति** — त्वं पुरः समक्षं माधवं श्रीपतिं कृष्णचन्द्रं यदा यदा पश्यसि तदा तदा एव तस्य अपूर्वतामद्भुततां वदसि कथयसि — तत्र किं कारणम्भवेदिति सन्देहद्विधा पक्षद्वयं स्थापयति — किमयं श्रीकृष्णः सदा नवः एव स्यात् अदृष्टपूर्वः, अथवा तव अक्षिणी नयने रागेण उन्मदे पूर्वसंस्कारशून्ये सती विस्मरतः न दृष्टपूर्वः क्वचिदित्येव मन्वाते । अत्र शुद्धः ससन्देहालङ्कारः ।

पद्येऽस्मिन् समस्तः पदसमूहोऽसमस्तः, अतः सुगमो बन्धः, प्रसादो गुणः, वैदर्भी च रीतिः । पद्यस्यास्य आद्यास्त्रयः पादाः वंशस्थेन घटिताश्चरमश्च चरणः इन्द्रवंशयोपनिबद्धः, अतो वंशस्थेन्द्रवंशयोरेवं मेलनादत्र शीलातुरा नाम करम्बजातिः (उपजातिविशेषः) वृत्तम् ॥२९॥

---

जो शोभा विद्यमान है, उस शोभा के अंशमात्र को भी निहारने में मेरी यह दृष्टि तो असमर्थ ही जान पड़ती है ॥२८॥

वृन्दा — अरी ! जब जब तू माधव को सामने देखती है तब तब तू सदा उसकी अपूर्वता ही बखानती है । न जाने क्या यह सदा नये नये रहते हैं अथवा अनुराग के मद से मत्त ये तेरे नयन पूर्वरूप को भूल जाते हैं ! ॥२९॥

beauty that is constantly scintillating in any part of his limbs.

VṚNDĀ : 29. Every time you see Mādhava before you, you find something new in him. Is it because he is really always new or because your eyes, infatuated with love, become forgetful ?

[ततः प्रविशति मधुमङ्गलसुबलादिभिरुपास्यमानो नान्दीमुखीमभिपृच्छन् कृष्णः]

कृष्णः — (सौत्सुक्यम्)

गोवर्द्धनं गिरिमुपेत्य कटाक्षबाणान्
कर्णस्फुरन्मणिशिलोपरि संक्षुवाना ।

[ततः एतदन्तराले मधुमङ्गलनामा सखा, अपरः सुबलः, आदिपदेन अर्जुनस्य बोधः, एवं सखिभिः उपास्यमानः अन्वीयमानः कृष्णः नान्दीमुखीमभिपृच्छन् तया सह सवदन् प्रविशति । अत्र पृच्छतेः पूर्वमभीत्युपसर्गस्य सम्मुखीभूय पृच्छन्निति अभिनार्थविशेषोऽस्ति ।]

कृष्णः उत्सुकः सन् वस्तुविशेषस्य जिज्ञासायां व्यग्रतयाऽऽह गोवर्धनमिति— गोवर्द्धनं तदाख्यं गिरिमुपेत्य कर्णयोः स्फुरन्ती या कुण्डलजटिता मणिशिला तदुपरि कटाक्षाः अपाङ्गवीक्षणानि एव बाणास्तान् संक्षुवाना (क्षुणोतेः कानच्) तेजयन्ती तीक्ष्णतामापादयन्ती का खलु इयं लग्ना भ्रूरेव धनु. तस्य धवनं कम्पनं (धुनोतेर्ल्युट्) तेन सूचिता प्रकटीकृता छद्मना मद्धैर्यविलोपनव्यापारः यया सा, माम् अपि धीरप्रवरमन्येषां धैर्यस्तुतिकरं मादृशं जनमपि सम्भ्रमेण व्याकुलीकरणेन व्यग्रीकरोति अव्यग्रं सुसमाहितमपि व्यग्रं यथा स्यात्तथा विह्वलं करोतीति । अहह इति आश्चर्ये । विस्मयावहोऽयं विषयो यदत्र विरलजनसम्पाते पर्वते वर्तमाना काचित् कर्णोपान्तवर्तित्वात् तद्गतकुण्डलखचितमणिशिलायां सघर्षणद्वारा निजान् कटाक्षबाणान् तेजयन्ती भ्रुकुटिकम्पमात्रेण मदीयं धैर्यं च्यावयन्ती 'कोऽयं धैर्यलोपी प्रसङ्ग' इति विचिकित्साजनिताकुलीभावेन मादृशमपि जनं विह्वलयतीति ।

शिलोपरि बाणाः सङ्घर्षेण तीक्ष्णतां नीयन्ते इति साधारणः प्रयोगः । अत्र कटाक्षा एव बाणा कर्णन्यस्तकुण्डलगतमणिशिलात. सङ्घर्षेण निशिता इति साहजिको व्यापारः परपक्षक्षपणतत्परतावबोधकत्वेनात्रोत्प्रेक्ष्यते । कटाक्षबाण–भ्रूधनुरित्यत्र निरङ्गरूपकम् ।

---

[इतने में ही मधुमङ्गल, सुबल आदि सखाओं से सेवित,
नान्दीमुखी से सम्मुख हो चर्चा करते हुए श्रीकृष्ण का प्रवेश]

कृष्ण — (बड़ी उत्सुकता के साथ)

अहह ! बड़े आश्चर्य की बात है ! यह कौन है जो गिरिराज गोवर्धन पर आकर अपने कटाक्षरूपी बाणों को कर्णभूषण में विद्यमान मणि की सिलपट्टी पर रगड़ कर तेज़ करती हुई अपनी भ्रुकुटी के हिलाने

---

*[Attended by Madhumangala, Subala & others Enter Kṛṣṇa talking with Nāndīmukhī]*

KRSNA *(Inquisitively)*

30. Who could she be, the one, having arrived at the Govardhana mountain, is edging the arrows of her sidelong looks on the hone of the sparkling gem of her ear-ornament and robbing me of my courage just

का भ्रूधनुर्धवनसूचितलुञ्चनेयं
व्यग्रीकरोत्यहह मामपि सम्भ्रमेण ॥३०॥

(पुनर्निरूप्य) हन्त ! कथं सैव मदीयहृद्विटङ्कालङ्कारपारावतीयं प्रिया।
(इति नान्दीमुखीमभिनन्दन्। सानन्दम्)

---

नयनान्तभागस्य मुहुर्मुहुः कुण्डलपर्यन्तं यातायातेन राधायाः कृष्णोवलोकनविषयिणी स्पृहा तद्विषयिणीं मधुरां रतिं पुष्णाति। भ्रूधनुःकम्पमात्रेणैव व्यग्रीभावप्रसङ्गे, शरैर्विध्यमाने सति कीदृशी मे स्थितिर्भविष्यतीति कल्पनैव सम्भ्रमकारिणी ततः कृष्णगतराधाविषयिणी गाढा रतिर्व्यज्यते। अयं रतिपोषकः अभियोगक्रमः भावभिव्यक्तिरूपः-"अभियोगो भवेद्भाव-व्यक्तिः स्वेन परेण चेति" लक्षणात् [उज्ज्वलनीलमणौ]।

नान्दीमुखीमभिपृच्छतः कृष्णस्य प्रवेशदर्शनात् कृष्णवचनोत्तरं तस्या एव वचन-विन्यासादयं 'का माम् व्यग्रीकरोतीति' प्रश्नो नान्दीमुखीं प्रत्येव घटते; प्रश्नोऽयं 'मधुमङ्गलं प्रति' इति जीवगोस्वामिपादानामभिप्रायः प्रकरणाननुकारी ऊह एव।

अत्र रूपकोत्प्रेक्षार्थालङ्कारौ, छेकानुप्रासः शब्दालङ्कारः भावध्वनिश्च। तृतीयचरणे प्रहारोद्यतत्वबोधनाय बन्धस्य समासघटितगाढत्वमर्थानुबन्धी हृदयमावर्जयति। सामान्यतो वैदर्भी रीतिः, प्रसादो गुणः। वसन्ततिलका वृत्तम् ॥३०॥

पुनः निरूप्य सूक्ष्मं विलोक्येति नायकस्य धैर्यं गमयति। हन्तेति-हन्तेति सविस्मय-प्रहर्षे। कथमिति इष्टस्य सहसोपलम्भादतर्कितानन्दावाप्तिरूपो हर्षाख्यो भावोऽभिव्यज्यते। सा एव बुद्धिस्था मदीयं हृदयमेव विटङ्कः कपोतपालिका तस्य अलङ्कारभूता शोभाधायिका पारावती कपोती तद्रूपाऽयं प्रिया राधा आस्ते। अत्र परम्परितरूपकमलङ्कारः।

---

मात्र से मेरे धैर्य को लूटने की सूचना देती हुई मुझे भी सम्भ्रान्त कर विह्वल कर रही है ? ॥३०॥

(और अधिक ध्यानपूर्वक देखकर) यह तो वही मेरे हृदयरूपी कपोतपालिका को विभूषित करनेवाली कपोती मेरी प्रियतमा ही है।

(यों नान्दीमुखी का अभिनन्दन करते हुए आनन्द विभोर हो)।

---

with a twitch of the bow of her eye-brow and distracts even me with excitement?

*(looking closely again)*

Ah! this is my beloved, the dove, adorning the aviary of my heart.

*(applauding Nāndīmukhī, with joy)*

तारश्रिया मूर्च्छितवल्गुरागा विस्तारयन्ती श्रुतिपालिभूषाम् ।
कलान्विता हन्त मयोपलब्धा स्वराधिकेयं परिवादिनीव ॥३१॥

---

**इतीति** — इति एव निश्चित्य नान्दीमुखीमभिनन्दन् सवर्धयन् सानन्दमाह कृष्ण
**तारश्रियेति** – अत्र 'स्वराधिका परिवादिनीव मयोपलब्धा' – इति प्रधानवाक्यम् । श्रियाया राधिकाया परिवादिन्या सप्ततन्त्रीवीणया सह साम्यमुपस्थापयति, तत्र श्लेषेण विशिनष्टि-राधिकापक्षे–तारश्रिया नयनकर्नीनिकाया शोभया अथवा तारो मौक्तिकहारस्तस्य शोभया मूर्च्छित (मूर्च्छ् गतौ) प्रापित वल्गु मनोहरो राग अभिलाष वर्णो वा यस्या सा । उपमानपक्षे – तार उच्चारध्वनि, तस्य श्रिया सम्पदया मूर्च्छित वर्धित एकविंशति-मूर्च्छना प्रापिता वीणेति तात्पर्यम् । पुनश्च श्रुतिद्वयस्य कर्णयुगलस्य पालिप्रभाग तावत् भूषां शोभां विस्तारयन्तीति उपमेयपक्षे, — सगीतशास्त्रे प्रथितानां द्वाविंशतिश्रुतीनां स्वरावयवध्वनीनां भूषां शोभां प्रस्तारयन्तीत्यर्थ उपमानपक्षे । कलाभिचतु षष्टिभि नृत्यवाद्यादिभिरन्विता सम्पन्ना इति उपमेयपक्षे, कलेन मधुरेण (स्वरेण श्रुत्यारब्धानुरणनात्मकेन) अन्विता अनुगतेत्युपमानपक्षे, अपि च स्वस्य स्वत्वविपरीभूता इव राधिकेति स्वराधिका, पक्षे स्वरै अधिका सुसम्पन्नेति विच्छिद्य वीणाविशेषणम् ।

सामान्येन भावार्थस्तु तारस्य शोभया सवलितरम्यरागवती, श्रुतिसमूहस्य रमणीयतां प्रसारयन्ती कलध्वनिना योजिता स्वरप्रचुरा सप्ततन्त्री वीणेव स्वीया मुक्ताहारस्य शोभया लोचनकनीनिकाया श्रिया व्यक्तीकृतस्ववर्णा प्रकटीकृतरम्यानुरागा कर्णलताग्र यावच्चयनयो शोभा विस्तारयन्ती नैककलाभि सुसम्पन्ना राधिका मयोपलब्धेति हन्त परमप्रमोदस्य विषय ।

तन्त्रशास्त्रे तारशब्द तत्वाभिधायक । सङ्गीतशास्त्रे श्रुतिलक्षणम् —
"प्रथमश्रवणाच्छब्द श्रूयते ह्रस्वमात्रक ।
सा श्रुति सम्परिज्ञेया स्वरावयवलक्षणा ॥" इति ।
तत्रैव श्रुतिभ्य स्यु स्वरा सप्त — "श्रुत्यनन्तरभावी य स्निग्धोऽनुरणनात्मक ।
स्वनो रञ्जयति श्रोतुश्चित्त स स्वर उच्यते ॥ इति ।

---

अहो ! तार की शोभा से मनोहर राग को छेड़नेवाली, स्वरावयव श्रुतियों की रमणीयता को बढ़ानेवाली, मधुर ध्वनियों से युक्त, अनेक स्वरों को निकालने वाली सप्ततन्त्री वीणा जसी अपनी राधा को मैंने प्राप्तकर लिया ह जो अपनी नयनकनीनिका की शोभा से

31 I found my Rādhā who with her sweet passion intensified by the lustre of her sidelong looks and who, extending the beauty of her ear ornaments, is all adept in diverse arts, as it were, a lute of seven strings full of tones which, having sweet melody

**नान्दीमुखी**—गोउलाणन्द, तुह्म पासे चिट्ठन्तीं मा जाव इमाओ ण पेक्खन्ति, क्खणं ताव पच्छण्णा होम्मि। ( गोकुलानन्द ! युष्मत्पार्श्वे तिष्ठन्तीं मां यावदिमाः न प्रेक्षन्ते, क्षणं तावत्प्रच्छन्ना भवामि [ इति तथा स्थिता ]

मूर्च्छनालक्षणन्तु—"क्रमात्स्वराणां सप्तानामारोहश्चावरोहणम्। सा मूर्छा" ॥ इति। रागास्तु गानप्रकारविशेषा विभिन्नश्रुतिस्वरमूर्च्छनाक्रमविकल्परूपाः।

> योऽयं ध्वनिविशेषस्तु स्वरवर्णविभूषितः।
> रञ्जको जन चित्तानां स रागः कथ्यते बुधैः॥
> औडवः पञ्चभिः प्रोक्तः स्वरैः षड्भिश्च षाडवः।
> सम्पूर्णः सप्तभिर्ज्ञेय एवं रागस्त्रिधा मतः॥

इति संगीतदर्पणे मुक्ताशुद्धौ च तारः स्यादित्यमरः। पालिः कर्णलताग्रे च—इति मेदिनी। सा ( वीणा ) तु तन्त्रीभिः सप्तभिः परिवादिनी ( सितार इति भाषायाम् )—इत्यमरः।

अत्र श्लिष्टोपमालङ्कारः, पाञ्चाली रीतिः, माधुर्यं गुणः, पूर्वार्धं पद्यस्येन्द्रवज्रया परार्धश्चोपेन्द्रवज्रया घटितं तन्मेलनादुपजातिः प्रेमा नाम वृत्तम् सर्वथा भावानुरूपम्। वाग्वल्लभमतेनास्योपजातिभेदस्य "रामा"—इति नामधेयम् ॥३१॥

श्रीकृष्णस्य पार्श्ववर्तिनीं नान्दीमुखीं मां विलोक्य मखमण्डपपरिसरे अत्र समायास्यन्तीं मामियमेव मुकुन्दे निवेद्य तमिहानीतवतीति मा तावत्सखी राधा चिन्तयत्वेवमुद्दिश्यात्मानं गोपायितुकामा नान्दीमुखी श्रीकृष्णमाह—**गोकुलानन्देति**—हे समस्तस्य गोकुलस्य व्रजस्य आनन्द आह्लादक ! युष्मत्पार्श्वे भवदन्तिकं तिष्ठन्तीं वर्तमानां मां यावदिमाः राधा तत्सहचर्यश्च न प्रेक्षन्ते तावत् क्षणं यावत्स्वं प्रकटयितुं समुचितमवसरं लभेय तावत्कालपर्यन्तं प्रच्छन्नाऽन्तर्हिता भवामि—इत्युक्त्वा राधाया दृष्टिपथादात्मानं दूरे स्थापयति।

---

अपने मनोरम अनुराग को प्रकट कर रही है, कर्ण के अग्रभाग तक कुण्डल की आभा को फैला रही है और अनेक कलाओं से विभूषित है ॥३१॥

**नान्दीमुखी**—हे गोकुलानन्द ! तुम्हारे पास खड़ी हुई मुझे कहीं ये देख न लें अत एव क्षण भर में छुपकर खड़ी हो जाती हूँ।

intensified by a wealth of high-pitched notes expanding the beauty of finer sounds, called *Śrutis* is full of artistic excellence.

NĀNDĪMUKHĪ : Dear Kṛṣṇa, the Delight of Gokula ! I shall conceal myself for a while lest they should see me standing by your side.

कृष्ण — हन्त सखायस्तूर्णमाध्मायता भवद्भिर्महाघट्टाधिकाराभिव्यञ्जक शृङ्गादिवादित्रम् । मयापि बिम्बाधरे वंशी निधेया ।

(इति सर्वे तथा कुर्वन्ति)

वृन्दा — (स्वगतम्) कथमेता केलिमुरलीरवाकर्षणेन विघूर्णितमूर्धानस्तरून्मुहुर्धारयन्ति ।

---

अनन्तराऽवसरप्राप्त समादिशति सहचरान् कृष्ण — **हन्तेति** — हन्तेति वक्तरि समुल्लास सूचयति । भो सखाय ! तूर्णं त्वरित भवद्भि वयमेवामुष्य महाघट्टस्य शुल्कादानचत्वरस्याधिकारिण इत्येतादृशाऽधिकारस्य व्यञ्जक द्योतक शृङ्गादिवादित्रम् आध्मायतां सारस्वरेण निनाद्यताम् । अहमपि बिम्बाधरे वंशीं वादयितु धरामि — इति । मामान्यत बिम्ब पक्वतुन्डीफलमिव अधर इति बिम्बाधर इत्युपमितसमास , ओष्ठस्यारक्तत्व, मृदुत्व, रस्यत्वञ्च ख्यापयति । आत्मनो मुखेन स्वगात्रस्य श्लाघ्यतया परामर्श "मम चरणकमल, मम नयनारविन्दमितिवत् अनतिद्वय प्रतिभाति शिष्टव्यवहारानुगतत्वहपानौचित्यात् । अत बिम्बानि तदध्यवासतानि कामिनीवदनानि अधरयति असौ अधर , अथवा बिम्बफलवदाधरति असौ बिम्बाधर "सद्य प्रज्ञाहरा तुन्डी इति वचनात् तत्फलस्य सेवन प्रज्ञाहर सत् तादृगौपम्यवति अधराग्रे वंशी मया निधेया, येन तत्प्रसूतरवेण श्रोतृवृन्दस्य सद्य शिरोघूर्णन सम्भाव्यतति विशेषाभिप्रायव्यञ्जकतया साधायान् भवितुमर्हति बिम्बाधरेतिप्रयोग ।

वंशीनिनादश्रवणमात्रेणैव गोपाङ्गनानां विवशतां वीक्ष्यात्मगतमाह वृन्दा **कथमेता** इति — कथमित्याश्चर्य । एता राधाप्रमुखा गोपिका केलिमुरल्या लील्या वादितवंश्या रवस्य कलनिनादस्य आकर्षणेन विघूर्णितमूर्धान मुहुर्मुहु स्वावलम्बाय तरून् धारयन्ति आश्रयन्ते भूमावपातादात्मान रक्षयितु पार्श्वस्थद्रुम भूयो भूय आलम्बन्ते । अनेन श्रातृणा कर्णरसिकत्व मुरलीस्वनस्य लोकोत्तरमोहकत्व व्यज्यते ।

---

[वैसा ही करती है]

कृष्ण — अरे मित्रो ! बड़ी चौकी के अधिकार को घोषित करने वाले शृङ्ग (च्युगल) आदि वाद्यों को शीघ्र बजाओ, मैं भी अपने अधराग्र पर बंसी रखता हूँ।

[सब ऐसा ही करते है]

वृन्दा — (मन ही मन) अहो ! कृष्ण की लीला मुरली की ध्वनि के आकर्षण से अपने सिर को डुलाती हुई ये सब बार बार वृक्ष का सहारा ले रही है !

---

*(Thus she stands)*

KRSNA Friends ! up with blowing horn and other instruments heralding our toll gate authority I shall also put my flute to my lips

*(all do so)*

VRNDĀ (*to herself*) How indeed these cowherd women, with their heads reeling under the spell of Krsna's playful flute are reclining against the trees again and again

(इति समन्तादवलोकयन्ती)

**वेणोरेष कलस्वनस्तरुलता-व्याजृम्भणे दोहदं,**
**सन्ध्यागर्जभवः[1] पिकद्विजकुहूस्वाध्यायपारायणे ।**
**आभीरेन्दुमुखीस्मरानलशिरोत्सेके सलीलानिलो,**
**राधाधैर्यधराधरेन्द्रदमने दम्भोलिरुन्मीलति ॥३२॥**

[अन्येषां जनानां परिसरवर्त्तिनां जीवानां वा का गतिरिति परीक्षितुं समन्तात् अवलोकयन्ती] यथादृष्टं विशदयति वृन्दा **वेणोरेष** इति—

वेणोः एषः कलः मधुरश्चासौ स्वनः निनादः तरूणां लतानाञ्च अथवा तरुवर्तिनां लतानां व्याजृम्भणे कुसुमविकासे दोहदं सन्तर्पकम्, अपि च पिकाः कोकिला एव द्विजाः विप्राः तेषां कुहूः एव स्वाध्यायस्य वेदराशेः पारायणं पाठः तस्मिन् कर्मणि सन्ध्याकालीनो गर्जभवः (गर्जतेः भावे घञि गर्जः, गर्जे भवः – "समुद्राभ्राद्घः" – पा.४-४-११८ इति घः।) मेघनिर्घोषः। मेघगर्जने स्वाध्यायस्यानध्यायः इति स्मृतिवचनात् मुरलीस्वरारम्भे पिकानां कुहूस्वाध्यायस्य विराम एव, पिकानामपि स्वीय-स्वर-माधुरी-श्लाघाभिसन्धेः श्लथत्वात् मुरलीरवाकर्णनजन्योन्मादवशात्कुहूविस्मरणाचेति भावः। अपि च आभीरकुलजानाम् इन्दुवत् मुखं यासां ता इन्दुमुख्यः सुन्दर्यस्तासां स्मरानलो मदनाग्निः तस्य शिरं ज्वाला शिखा तस्य उत्सेके प्रवर्धने सलीलः मन्दं मन्दं वहन् अनिलः पवन एव मदनोद्दीपनः अथवा गोपसुन्दरीणां स्मरानलेन शिरासु रक्तवाहिनीषु धमनीषु उत्सेके उद्वेजने मन्दानिलरूपः असौ वेणुस्वन इति; पुनश्च राधायास्तु धैर्यं संयमः स एव धराधरेन्द्रः महागिरिस्तस्य दमने दलने दम्भोलिः अशनिपात एव एतादृशः मुरलीरवः उन्मीलति आविर्भवति प्रसरतीति भावः।

केषुचित्तरूणां कुसुमोद्गमाय कविसमये कानिचन दोहदानि निर्दिष्टानि "पादाघातादशोकः" – इत्यादीनि। तेषु नव्योऽयं भव्यः प्रकारोऽत्र कविना समुद्भावितो मुरलीरवरूपः। अमुष्य वंशीनादस्यालौकिकत्वाद्दोहदत्वं सम्भाव्यते – सामान्यतः केवलं सचेतसामेव "रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्" चेतोविकृतिर्मनोविज्ञानकोविदैरङ्गीकृता,

---

[चारों ओर देखती हुई]

बंसी का यह मधुर स्वर वृक्षों पर लिपटी हुई लताओं को विकसित करने वाला दोहद ही होरहा है, कोयल पक्षी (ब्राह्मण) के निनाद (वेदपाठ) को समाप्त करने वाली सन्ध्याकालीन गर्जना ही है, आभीर सुन्दरियों के मदनानल की ज्वाला को भड़काने वाला लहराता हुआ पवन ही है तथा राधा के धैर्यरूपी पर्वत को दलित करने वाला वज्र ही है ॥३२॥

*(looking on all sides)*

32. This sweet sound of the flute unfolds itself, as it were a budding agent for the plants and creepers, a roar of an evening cloud drowning the full-throated warbling of the *Kōel* ( > Vedic recitation of the Brāhmaṇas ), a playful breeze fanning the amorous flames in the hearts of the moon-faced cow-herd women and a thunderbolt to shatter the mountain of Śrī Rādhā's reserve.

---

1. "गर्जभरः" – इति पाठान्तरम्।

कृष्णः — ( राधायामपाङ्ग निक्षिप्य, सानन्दम् )

वक्त्राम्भोजमुदात्तनर्मवचसा सख्यं विनिर्मित्सते
मैत्रीं भङ्गुरवीक्षितेन नयनद्वन्द्वं क्रमादीप्सति ।
लीलामन्दगतेन पादयुगमप्यारिप्सते सङ्गमं
राधायाः स्मरबान्धवेन वयसा देहेऽद्य सन्धित्सति ॥३३॥

तत्र स्थावराणां द्रुमाणामपि वशीस्वनरूपेण दोहदन समुल्लासोऽत्र विशेषः । एवमेव पिकादि-तिर्यचामपि चेतोमादकत्व कुहूविस्मरणेनानुभावितमित्यपि विशेषः । पिकद्विजेत्यत्र द्विजाः पक्षिण एव द्विजाः विप्रा इति श्लिष्ट रूपकम् । एतस्यैव कलस्वनस्य विविधविषयतापन्नस्य दोहद स्तनित-पवन-दम्भोलिभिस्तादात्म्यस्थापनादत्र मालारूपकमुल्लेखालङ्कारता भजते । सर्वत्र श्रुति वृत्त्यनुप्रासमण्डितो बन्धः ।

अत्रेदमवधेयं यत् मुखव्यादानार्थक व्याजृम्भणं चेतनधर्मः तरुलतासु तद्धर्मित्वापादने चेतनत्वारोपक हर्षविषादादिधर्मितागमकम् । यद्यपि स्वाध्यायानध्याये मेघगर्जितस्य हेतुत्वम् जाघटीति, तथापि मुरलीकलस्वने गर्जभवत्वारोपणमुग्रत्वादिधर्मसहचारित्वादनुपपन्न-मेवमेव । दम्भोलिना धराधरेन्द्रस्य दमन तथा नोपपद्यते यथोपपन्नं दलन शकलीकरणं वा, अपि च दम्भोलेरुन्मालनव्यापारकर्तृत्वमसमीचीनं, मील्नो मीलनस्य मदनकन्दोटे कुसुमचये चोपपन्नता, दम्भोलिरुज्जृम्भते, उद्यम्बेत्यादिक्रियापदानां सयोगो युज्यते, एवो व्यस्तेऽपि रूपके विषयिण एव प्राधान्यात्क्रियान्वयित्वमङ्गीक्रियते सहृदयैः, एतास्वनुपपत्तिषु सतीषु कल्पनामञ्जुलमपीदं पद्यं श्रीखण्डद्रवस्य सिकतासम्पृक्तत्वमिव विरस्यते । सत्यपि कोमले वर्णोपचये बहुलवृत्तित्वात् पाञ्चाली रीतिः, शार्दूलविक्रीडितश्च वृत्तम् ॥३२॥

स्वप्रेयसीं राधां प्रति कटाक्षविक्षेप विधाय तस्या उपभोगक्षमं नवतारुण्यं वीक्ष्य हर्षेण परिप्लुतः श्रीकृष्णचन्द्रस्तस्या वयःसन्धिं श्लाघते वर्णयति **वक्त्राम्भोजेति**-राधाया देहे अद्य अधुना स्मरस्य बान्धवेन सखिना वयसा यौवनेन सन्धित्सति सन्धातुं सद्भावं

---

कृष्ण — (राधा की ओर कटाक्ष निक्षेप करते हुए आनन्दित हो)
आज मदन के मित्र यौवन के द्वारा देह से संयोग करने की इच्छा करते ही उसका मुखकमल माधुर्यादि गुणों से उदात्त-ललित वचनक्रम के साथ मैत्री करने को उत्सुक होरहा है धीरे धीरे उसके नयनयुगल चपल चितवन के साथ मैत्री चाहने लगे हैं और चरणयुगल भी नखराली मन्दमन्द चाल को अपनाने लगे हैं ॥३३॥

---

KRṢṆA ( *looking obliquely at Rādhā, with joy* )

33 Now that the person of Rādhā desires to court alliance with the age of Cupid (youth) her lotus-like mouth wants to form friendship with dignified pleasantry, her eyes long to have an intimate association with fleeting glances and her feet also yearn to commerce with an easy slow gait

---

1. 'रिरंसो°-' इति पाठान्तरम् ।

**राधा** — ( प्रयत्नादाकारगुप्तिमभिनयन्ती साचिकन्धरमपवार्य। संस्कृतेन )

**कुवलययुवतीनां लेहयन्नक्षिभृङ्गैः**
**कुवलयदल-लक्ष्मी-भङ्गिमाः स्वाङ्गभासः[1]।**

इच्छति सति (सम्+धा+सन्) तस्याः वक्त्रमाननम् अम्भोजं कमलमिव सुन्दरम् (उपमानोत्तरपदकर्मधारयः) उदात्तेन शोभनेन नर्ममयेन वचसा स्मितादिसहकृता विनोदपूर्णेन वचसा सख्यं सहयोगं विनिर्मातुम् इच्छतीति विनिर्मित्सते (वि+निर्+मा+सन्)–इदानीं शैशवोचितं प्रहसितजल्पितं विहाय सस्मितमधुरालापेन सख्यं करोतीति भावः। एवमेव नयनद्वन्द्वं क्रमात् शनैः शनैः भङ्गुरेण चपलेन कटाक्षपातादिना वीक्षितेन विलोकितेन मैत्रीं ईप्सति कामयते। चकितापाङ्गविलोकितान्युपादत्ते – इत्यर्थः। पुनश्च पादयुगमपि (बाल्योचितमुत्प्लवनादिकं परित्यज्य) लीला विलासः तत्प्रचुरेण मन्देन गतेन सङ्गमं आरब्धुमिच्छतीति आरिप्सते (आ+रम्+सन्) तस्याः गतिरिदानीं धीरा सलीला चेति भावः। नवयौवनोद्गमसहजानि शोभाविलासमाधुर्यादीनि योषिदलङ्करणानि तद्वपुषि सम्प्रति विलसन्तीति तात्पर्यम् तस्याः सविशेषमाकर्षकत्वमुपभोगयोग्यतां व्यनक्ति, ततश्च रूपस्योद्दीपनतया नायकस्य रतिभावः परिपोष्यते।

पद्येऽस्मिन् वक्त्राम्भोजेत्यत्र लुप्तोपमा, स्वभावोक्तिश्चालङ्कारौ। सर्वत्रोपात्तक्रममनुरुद्धय सन्नन्तानां क्रियापदानां प्रयोगात्समता नामार्थगुणः, सुकुमारतार्थव्यक्ती शब्दगुणौ, सख्यादिधर्मोपादानस्य चेतनाश्रितत्वादत्र भाक्तः प्रयोगो वैचित्र्यस्योपस्कारकः। तृतीयचरणे 'पादयुगमप्या' – इत्यत्र यतेरेकवर्णविच्छिन्नत्वाद् यतिभङ्गदोषः "पादयुगलञ्चारिप्सते" इति पाठेन सुसमाधेयः। अस्मिन्नहनीत्यर्थेऽभिहितस्याद्यपदस्य प्रक्रान्तकालरूपार्थग्रहणे प्रयोगः "अद्यत्वे" – इत्यर्थग्रहणेनोपेक्ष्यः। वैदर्भी रीतिः। वृत्तञ्च शार्दूलविक्रीडितम् ॥३३॥

प्रयत्नात् कृतकत्वेन आकारस्य गुप्तिं गोपनं सहसा प्रियं नायकं पुरस्तादुपस्थितं विलोक्य वेपथुपुलकादीनां सात्त्विकानां भावानामुन्मेषवशात्सहजस्य स्वरूपविपरिणामस्य प्रसह्य गोपनमभिनयन्ती नाटयन्ती राधा साचिकन्धरं तिर्यग्ग्रीवं यथा स्यात्तथा भूत्वा अपवार्यान्यासां परावृत्य रहस्यं संस्कृतमाश्रित्य वक्ति **कुवलये**ति–कुः पृथिवी तस्या वलयं मण्डलं भूतलं तत्रत्यानां युवतीनां युवतीः (कर्मणि षष्ठी लेहयन्नित्यस्य कर्मत्वेनान्वयः) कुवलयदलस्य

---

**राधा** — (प्रयत्नपूर्वक अपने मनोविकार को छुपाती, गर्दन तिरछी करती, एक ओर मुँह कर संस्कृत में कहती है) —

**भूवलय की सुन्दरियों को उनके नयनरूपी भ्रमरों द्वारा कमलपत्र की शोभा को धारण करने वाले अपने शरीर की कान्ति का आस्वादन**

RĀDHĀ : (*Gesticulating dissimulation with effort & speaking aside with her neck turned awry*)

34. Allowing the belles of the whole Earth to enjoy with the bees of their eyes the sheen of his body which

---

1. "स्वात्मभासः" – इति पाठभेदः।

  

मदकलकलभेन्द्रोल्लङ्घिलीलातरङ्गः
कवलयति धृतिं मे क्ष्माधरारण्यधूर्तः ॥३४॥

कृष्णः — ( शृङ्गादवरोहण नाटयन् राधामुखमवलोक्य सानन्दम् )

---

नीलोत्पलपनस्य लक्ष्मी शोभा इव भङ्गिमा मनोज्ञता यासा ता स्वाङ्गभास आत्मन स्वरूपस्य कान्तिरश्मीन् अक्षीणि नेत्राणि एव भृङ्गा भ्रमरास्तै नयनमधुपरूपै करणै लेहयन् (लिह्यते णिचि शत्-त कर्तरि रूपम्) आस्वादयन् भूतलवर्तिसमस्तयुवतिमण्डल तदीयनेत्र-भ्रमरैर्द्वारीकृत्य निजस्वरूपकान्ति पाययन् असौ मदेन कल रमणीय कलभेन्द्र करिशावक-वर तस्य लीलातरङ्गान् उत्लङ्घयन् अतिक्राम्यन् लीलातरङ्ग. शोभाविलास यस्य स = गजशावकापेक्षयाऽधिकेन विलासेन उपलक्षित क्ष्माधरस्य पर्वतस्य अरण्ये वनभूम्या वर्तमान धूर्तश्चतुर श्रीकृष्ण मे मम धृतिं सयम कवलयति निगलति अवसाययतीत्यर्थ ।

पद्येऽस्मिन् लिह्यते भाक्त प्रयोग अनायासेनास्वाद्यता नयतीत्यर्थविशेषप्रतिबोधक, अत एव 'गतिबुद्धिप्रत्यवसानेति'–नियमात्प्राप्ता द्वितीयामपोह्य युवतीनां कर्मणि षष्ठी। लिह्यते प्रयोजककर्त्ता धूर्त, अक्षिभृङ्गा करण, स्वाङ्गभास विषयतया कर्म, विषयितया युवतय द्वितीयं कर्म । कृष्णस्य शरीरशोभा युवतय नयनै. स्वदन्ते, कृष्णश्च ता आस्वादयतीति सरलार्थ । अक्षिभृङ्गेत्यत्र रूपकम् , कुवलयदललक्ष्मीभङ्गिमेत्यत्र समासगा लुप्तोपमा कर्त्तरि धूर्त्ते गजत्वारोप व्यञ्जयन्ती कवलयते प्रयोगस्य महिम्ना तद्विषयीभूतायां धृतौ कदलीखण्डेन तादात्म्य परम्परयाऽऽरोपयतीति रूपकम् परम्परितम् । कुवलयेत्यत्र पादाद्ययमकं, कलकलभेत्यत्र पदाशयमक, सर्वत्र वृत्त्यनुप्रास , प्रसादमाधुर्ये गुणौ, वैदर्भी रीति , मालिनी च वृत्तम् ॥३४॥

गोवर्धनस्य शृङ्गात् शिखरात् अवरोहण नाटयन् राधाया मुखमवलोक्य सानन्दम् प्रियोपलम्भजनितेन हर्षेण प्रसन्न सन् कृष्ण तस्या प्रसाधनविशेषं वर्णयन्नाह

---

कराता हुआ, मदोन्मत्त गजशावक की लीला को भी कहीं मात करनेवाली अपनी लीला की लहरों से गिरिराज की वनस्थली में विहार करने वाला यह धूर्त मेरे धैर्य को निगला जा रहा है ॥३४॥

कृष्ण — ( गिरिशिखर से उतरते हुए राधा के मुख को देखते हुए प्रसन्नतापूर्वक ) —

---

resembles the beauty of the petals of the blue lilies, the rogue of this woodland, surpassing even a highly intoxicated elephant cub with his sportive undulations, unnerves me

KRṢNA *(Acting as though climbing down the mountain top & looking at Rādhā's face, with joy)*

स्थूले राधिकया पयोधरयुगे हारः प्रसादीकृतः
ख्याते बालतया कचे च कुटिले मौलिर्वितीर्णोऽनया ।
विन्यस्तं श्रुतिसेविनोरपि मसीमालिन्यमेवानयो-
रित्यक्ष्णोर्द्वयमीर्ष्यया[1] मृगदृशः शङ्के मुमोचार्जवम् ॥३५॥

**स्थूल इति** — राधया ( नवयौवनोद्गमे जाते सति ) स्थूले पीनतां प्राप्ते पयोधरयुगे कुचयोः हारः मुक्तासरः प्रसादीकृतः अभिनन्दनाय उपहारीकृतः, एवमेव बालतया ख्याते बालेत्यपरपर्यायेणाभिधीयमाने अतः कुटिले कचे केशपाशे मौलिश्चूडामणिः वितीर्णः समारोपितः विन्यस्त इत्यर्थः, अनयोरङ्गयोः नयनापेक्षयाऽवरत्वं गमितं क्रमात् स्थूलेति जडताबोधकेन विशेषणेन कुचयोः, बालकुटिलपदाभ्याञ्च कचस्य । उभया-पेक्षया अक्ष्णोः योग्यतरयोः श्रुतिसेवित्वात् कर्णान्तगामित्वात् श्लेषेण वेदाध्ययनशालित्वात्—तथा प्रगुणयोर्नयनयोः मसीमालिन्यं कज्जलकालिमा एव विन्यस्तम् तत्र नयनयोः कज्जल-सन्निवेशात् । अनेन गुणव्यतिरेकिणाऽपमानसूचकेन व्यवहारेण ईर्ष्यया परोत्कर्षासहिष्णु-तयैव मृगस्य दृशाविव दृशौ यस्याः सा तस्याः, मृगनयनवत् सौन्दर्यशालिनोः अक्ष्णोः द्वयं नेत्रयुग्मं आर्जवं ऋजुतां सरलवीक्षणप्रकारं मुमोच परितत्याज, आर्जवं परित्यज्य वक्रतां बभार इति शङ्के सम्भावयामि ।

कुचयोर्मौक्तिकमाला, केशपाशे चूडामणिः, नयनयोश्च कज्जलाङ्कतयाऽध्रियतेति यौवनोचितप्रसाधनं नाम सामान्यं वस्तु उक्तिगतवैचित्र्येण प्रत्यपादि कविनेति वक्रोक्ति-रलङ्कारः, स्थूलकुटिल-श्रुतिपदेषु द्व्यर्थित्वात् श्लेषालङ्कारः, मृगदृशेत्यत्रोपमा, ईर्ष्ययाऽऽर्जवं

---

( यौवनारम्भ होने के उपलक्ष्य में ) इस राधा ने अपने पीवर पयोधरों को मुक्ता की माला भेट की, 'बाल' शब्द से कहे जानेवाले परन्तु कुटिल अपने केशपाश को बिन्दी अर्पण की, परन्तु कान तक पहुँचनेवाले ( >वेदपाठी होने पर भी ) अपने नयनयुगल को कज्जल ही अर्पण किया — मानों इसी कारण ईर्ष्या से अभिभूत हो उन्होंने अपनी ऋजुता त्याग दी है ॥३५॥

---

35. ( In honour of her budding youth ) a necklace was presented by Rādhā to her buxom breasts ( though inert = *sthūla* ) and a crest-jewel to her curly hair, known as *Bāla* ( though they are childish and crooked = *Bāla* & *kuṭila* ). But to her eyes though extending upto ears ( though devoted to the study of Vedas ( = *Śruti-sevins* ) was given only black collyrium which made them ( eyes ) jealous of the other two companions ( breasts and hair ). That is why, methinks, the eyes of this fawn-eyed Rādhā have shed their straightforwardness ( — a fact, responsible for her looking obliquely at me ).

---

1. "-°मीर्षया" – इति पाठभेदः ।

**ललिता** — (अपवार्य) हला राहे ! ओदरदि एसो हठिल्लदारहट्टी-वणिज्जामहासत्त्थवाहणाहो। ता अप्पेक्खन्तीआ विअ सवीसभ चलेम्ह। [हला राधे ! अवतरत्येष हठिल्लतारभटीवणिज्यामहासार्थवाहनाथ । तस्मादप्रेक्षमाणा इव सविस्रम्भ चलाम ।]

**राधा** — सहि लहु लहु जाहि। ज एसा फुडिदोवलमंडलीवंधुरा वसुदराहरतडी। [सखि लघु लघु याहि। यदेषा स्फुटितोपलमण्डलीबन्धुरा वसुन्धराधरतटी ]। (इति सदृष्टिक्षेप परिक्रामति)

सुमोचेत्यन कारणस्य सम्भावनया, 'शङ्के' पदेनाभिधीयमाना वाच्या हेतूत्प्रेक्षालंकृतिश्च। दानार्थकेऽपि प्रसादीकृत वितीर्णाति क्रियापदयुगले कुचयो कचस्य च सम्प्रदानत्वाभावे चतुर्थीं विहाय आधारेऽधिकरणमात्रस्य विवक्षयाऽत्र सप्तम्या प्रयोग। गुणिनि मसीमालिन्य, स्थूले कुचयुगे हार, कुटिले च कचे मणि वितीर्ण इति गुणतारतम्यानवगाहिनी धृत्ति राधाया नवयौवनोन्मादजन्येति वस्तु व्यनक्ति। श्रुतिसेविनोरपीत्यत्र अपिना, मालिन्यमवेत्यत्र एवकारेण कर्तुरविवेकिता स्फुटमवधार्यते।

अत्र प्रसादो गुण, वैदर्भी रीति, वृत्तञ्च शार्दूलविक्रीडितम् ॥३५॥

अत्रान्तराले गिरिशिखरादवतरन्त कृष्णं वीक्ष्य रहसि अन्या अपवार्य राधामेवोद्दिश्य ललिता भणति **हलेति** — हला अयि राधे। एष पुरो दृश्यमान कृष्ण हठिल्ता आग्रहग्रहिलता च आरभटी (आरभटस्य भाव) धृष्टता च ताभ्यां युक्त वणिज्यानां (वणिक्शब्दात् यत् = वणिज्यम्) वैश्यजातीयानां महासार्थवाहस्य समूहस्य नाथ नेता अवतरति गिरिशिखरादध आयाति अतस्तमप्रेक्षमाणा अनवलोकयन्त्य एव सविस्रम्भम् आश्वस्ततया चलाम। असौ धृष्टो जन दृष्टोऽपि अदृष्ट एवास्माभिरिति तदुपस्थितिमवगणय्य यथापूर्वं विश्वस्तभावेन वयमग्र सराम इति भाव।

नायकस्य दृष्टिपथाद् दूरे भवितुमनीहमाना राधा वृन्दामाह — **सखीति** - वयस्ये वृन्दे! राधा लघु लघु शनै शनै याहि। तत्र हेतुमाह - एषा वसुन्धरा पृथ्वी तां धरतीति वसुन्धराधर (पर्वत) पर्वतस्तस्य तटी आसन्ना भूमि स्फुटितानां स्फारितानामुपलानां

---

**ललिता** — (एक तरफ मुड़ कर) अरी राधा ! हठी, उग्र स्वभाववाले बनयारों की टोली का यह मुखिया पहाड़ से नीचे इधर ही उतर रहा है, अत हमें इसकी नज़र बचाकर इत्मिनान से चल देना चाहिए।

**राधा** — सखि ! धीमे धीमे चलो। बड़े बड़े पत्थरों के कारण ऊँची-नीची यह पर्वत भूमि है।

[यों कहती हुई सावधानी से देखती हुई आगे बढ़ती है।]

---

LALITĀ (*aside*) Dear Rādhā ! here comes down the leader of the traffic troop consisting of stubborn men of enterprising nature. We should, therefore, walk nonchalant as though we have not seen him.

RĀDHĀ Friend ! rather slowly, for this mountain foot has ups and downs strewn with broken stones

(*So saying walks Rādhā, casting a glance on Kṛṣṇa*)

**कृष्णः** — सखे सुबल ! कथमस्मानयमत्य चलितुं प्रवृत्ता एव सलील-मसूरमूकमञ्जीरा मञ्जुभाषिण्यः । ततस्तूर्णमर्जुनेन सार्धममूपां घटस्व व्याघोटनाय ।

**सुबलः** — ( सत्वरं सार्जुनं परिक्रम्य ) हन्त ! सगव्वाओ गव्व-विक्कइणीओ कहं घट्टचत्तरणाहं अणादरंतीओ सच्छन्दं गच्छंति भोदीओ ता बाहुडिअणो पवोहेंतु । [हन्त ! सगर्वाः गव्यविक्रयिण्यः कथं घट्टचत्वरनाथमनाद्रियमाणाः स्वच्छन्दं गच्छन्ति भवन्त्यस्तस्माद् व्यावृत्य सुष्ठु नः प्रबोधयन्तु । ]

पाषाणखण्डानां मण्डली समूहः तेन बन्धुरा निम्नोन्नता वर्त्तते । अतः स्खलनभयात्स्वैरं गच्छेति भावः । शनैर्गमनाय नायिकाया व्यपदेशोऽयम् ॥

ताः स्वैरं गच्छन्तीरवलोक्य समुत्सुकः कृष्णः सुबलं प्रणोदयति **सख इति** — हे मित्र सुबल ! कथं मञ्जुभाषिण्यः मधुरालापिन्यः अमूः एताः अस्मान् अवमत्य अनादृत्य सलीलं निर्भयत्वात् लीलया अमूकाः निनादिनो मञ्जीराः पादभूषणानि यासां तादृश्यः क्वणन्नूपुराः चलितुं प्रवृत्ताः अग्रे यान्त्य एव दृश्यन्ते । ततः तस्माद्धेतोः तूर्णं त्वरितं अर्जुनेन सार्धं सह गत्वा अमूषां व्याघोटनाय परावर्त्तनाय घटस्व यतस्व । अत्र सर्वत्र वृत्त्यनुप्रासालङ्कारः ।

कृष्णस्यादेशमुरीकृत्य सत्वरम् अर्जुनेन सह परिक्रम्य गोपाङ्गनानां मार्गमनुसृत्य सुबल आह **हन्तेति** – हन्त सम्बोधने । सगर्वाः गर्वेण स्वामिमानेन सह इति सगर्वाः ( बहुव्रीहिः ) गव्यस्य गोप्रसूतस्य नवनीतस्य विक्रयिण्यः शुल्कमादाय परस्मै दात्र्यः कथं भवत्यः घट्टचत्वरस्य शुल्कादानस्थानकस्य नाथं अध्यक्षमनाद्रियमाणाः तिरस्कुर्वत्यः स्वच्छन्दं स्वेच्छानुसारं गच्छन्ति इतो यान्ति, तस्मात्स्वैरगमनाद् व्यावृत्य परावृत्य नः घट्टाधिकृतान् सुष्ठु सम्यक् प्रबोधयन्तु स्वकृतावमाननिष्कृतिं कुर्वन्तु ।

---

कृष्ण — सखे सुबल ! हमारी अवहेलना कर ये मधुरभाषिणी गोपबालाएँ नुपूर का झणत्कार करती हुई, नख़रे के साथ कैसी चली जा रही हैं ; तो तुम अर्जुन के साथ इन्हें इधर लाने की कोशीश करो ।

सुबल — ( शीघ्र ही अर्जुन के साथ उनके पास पहुँचकर ) अरी गर्वीली माखन बेचनेवाली बालाओ ! चौकी के अध्यक्ष का अनादर करती हुई तुम स्वच्छन्द चली जा रही हो — चलो लौट आओ, हमारे सामने उपस्थित हो इसका स्पष्टीकरण करो ।

KRṢṆA : Friend Subala ! What's it ! these sweet-tongued women with their anklets tinkling, are easily bypassing us ! Hence with Arjuna and see that they return.

SUBALA : (*running after, with Arjuna*) Oh ! you, arrogant milkmaids ! how dare you go so freely, despising the Chief of the toll-gate ! Quick ; return and explain yourselves fully.

[ सर्वा प्रकाममश्रुतिमभिनीय सावहेलं चलन्ति ]

सुबल —(धावन्नुच्चैः) हहो अप्पणो माहप्प मा हरेध। तुण्णं परावट्ठेध। [हहो आत्मनो माहात्म्य मा हरत, तूर्णं परावर्तध्वम्।]

सर्वा —( सनिर्वेदमिव परावृत्य ) भो पुट्ठमासाद ! कध तुए परावट्टिदह्म ?
(भो पृष्ठमासाद ! कथ त्वया परावर्तिता स्म ।)

सुबल — पढम दाव क्खोणी-विलग्ग-मत्थआओ वन्ददु महाघट्टदाणींद हो (भो) दीओ।
[प्रथम तावत् क्षोणीविलग्नमस्तका वन्दन्तां महाघट्टदानीन्द्र भवत्य ।]

[इति कथयित्वा सुबलस्य वच श्रुतमप्यश्रुतमिव कृत्वा सावहेलं तस्य अवहेलनाम् अवमानना कृत्वा सहेलं ता सर्वा महिला चलन्ति अग्रे यन्ति ।]

एतासा धृष्टता विलोक्य अग्र धावन्नुच्चैः तारस्वरेण ता सम्बोधयन् सुबल प्राह **हहो इति** – हहो इति साक्षेप सम्बोधनम् । आत्मनो माहात्म्य गौरव प्रतिष्ठां वा मा हरत गमयत। अस्मद्वचोऽश्रवणेन बलात्कीयमानत्वजन्या प्रतिष्ठाहानि मा उद्भावयत । आत्मगौरव परिरक्षन्त्य स्वयमेव परावर्तध्वम् प्रतिनिवृत्ता भवत।

धृष्टमिद वचो निशम्य निर्वेदेन सहिता सनिर्वेदा खिन्ना स्वच्छन्दविहारनिरोधा दाहता इव परावृत्य सर्वा राधाप्रधाना सख्य सुबल फूत्कुर्वन्ति – **भो पृष्ठेति** – अरे पृष्ठे मांसमत्तीति पृष्ठमासाद क्रूराभिधायिन् पिशुन। "वाच्याभिधायी पुरुष पृष्ठमासाद उच्यते" – इति त्रिकाण्डा । कथ किमिति कृत्वा त्वया वय स्वमार्गानुयायिन्य परावर्तिता स्म ।

परावृत्तास्ता दृष्ट्वा सुबलो नोदयति **प्रथममिति** — आदौ महाघट्टदानीन्द्र घट्टचत्वराध्यक्ष क्षोण्या भूमौ विलग्न स्पृष्ट मस्तक यासा तादृश्यो दण्डवद् भूत्वा वन्दन्ताम् – इति ।

---

[ सुनी-अनसुनी कर सब ही उपेक्षा के साथ चल देती हैं । ]

सुबल — (दौड़ता हुआ ज़ोर की आवाज से) देखो ! अपनी प्रतिष्ठा मत खोओ तुम चटपट लौट चलो ।

सब — (खेद के साथ लौटती हुई) अरे क्रूरभाषी ! तू हमें लौटाने वाला होता कौन है ।

सुबल — पहिले चौकी के प्रधान अधिकारी के समक्ष दण्डवत् हो प्रणाम करो ।

(*pretending not to have heard all get along disdainfully*)

SUBALA (*chasing them, loudly shouting*) Don't compromise your own honour, return at once

ALL (*returning as though discomfitted*) You, slanderer, where fore are we made to return by you ?

SUBALA First of all pay respects to the Chief of the Toll-gate with your heads touching the ground

विशाखा — (सस्मितम्) सुबल, किं वंदणारिहो ण होदि वल्लइंद-कुमारो किंतु लोओत्तरस्स जण्णस्स हेअंगवीणोवहरणं आरद्धव्वदाणां अह्माणं बह्मणेदरवंदणं भअवदीए णिसिद्धं। [सुबल ! किं वन्दनार्हो न भवति बल्लवेन्द्रकुमारः, किन्तु लोकोत्तरस्य यज्ञस्य हैयङ्गवीनोपहरणे आरब्धव्रतानामस्माकं ब्राह्मणेतरवन्दनं भगवत्या निषिद्धम्।]

अर्जुनः — (विहस्य) विसाहे ! अह्म महादाणीन्दो वि एण्हि आरद्धव्वदो

---

सुबलस्य धृष्टतां वीक्ष्य स्मितेनोपहासेनाह विशाखा **सुबलेति** – किं बल्लवेन्द्रस्य गोपराजस्य कुमारस्तनयः वन्दनार्हः अस्माभिर्बल्लवीभिः अभिवादनयोग्यः न भवति अपि तु बाढं भवतीति भावः। अत्र वन्दनीयार्थेऽभिधेये श्रीकृष्णस्योद्देश्यस्य बल्लवेन्द्रकुमारत्वेन साभिप्रायतया परामर्शात्परिकराङ्कुरोऽलङ्कारः, किन्न भवतीति निषेधमुखाद्बलपूर्वकविध्यर्थ-प्रतिपादनात्काकुः ततश्चार्थापत्तिरपि। किन्तु वन्दनीयत्वे सत्यपि लोकोत्तरस्य सविशेष-महिम्नो यज्ञस्य कृते हैयङ्गवीनोपहरणे नवनीतप्रापणे आरब्धव्रतानां नियम-वतीनामस्माकं (कर्त्तरि षष्ठी) ब्राह्मणेभ्यः इतरेषां वन्दनं भगवत्या पौर्णमास्या निषिद्धम्। अत्र गुरुपदं दधानायाः पौर्णमास्या नाम्ना परामर्शस्य "आत्मनाम गुरोर्नामेति" वचनात्प्रतिषेधादत्र भगवतीति-बहुमानसूचकेनाभिधानेनोल्लेखः नाटकीयां प्रवृत्तिमनुसन्दधानः एवेति बोद्धव्यम्। अत्र विशाखया स्वीयस्वैरगमनमुपपादयितुं मिथ्याख्यानं समाहृतम्। तेनात्र भाणिकायाश्चतुर्थं साध्वसं नामाङ्गं सन्निवेशितं भवति – "मिथ्याख्यानन्तु साध्वसम्"-इति लक्षणात्।

विशाखाकृतमपदेशं प्रत्यादेष्टुं तथैव विहसन्नाहार्जुनो **विशाख इति** — अयि ! अस्मन्महादानीन्द्रोऽपि इदानीम् आरब्धव्रतः गृहीतनियमो वर्त्तते, अतः व्रतिनीभिः भवतीभिः

---

**विशाखा** — (हँसती हुई) सुबल ! क्या नन्दराजकुमार वन्दनीय नहीं है ? परन्तु इस लोकोत्तर यज्ञानुष्ठान में नवनीत पहुँचाने का व्रत लिये हम लोगों के लिए भगवती ने ब्राह्मणों को छोड़ इतर किसी भी व्यक्ति को प्रणाम करने से मना किया है।

**अर्जुन** — (खिलखिलाकर) अरी विशाखा ! हमारे अधिकारी ने भी आजकल व्रत ग्रहण कर रखा है, अत एव व्रतियों के द्वारा व्रती को प्रणाम करने में कोई दोष नहीं है।

---

VIŚĀKHĀ : (*smiling*) Aren't we aware of the fact that the Prince of the Braja is well worthy of respect ! All the same, since we have taken the vow of carrying fresh butter for this extra-ordinary sacrifice, we are forbidden by Reverend Paurṇamāsī to bow down before anyone other than a *brāhmaṇa*.

ARJUNA : (*laughing*) Viśākhā ! nowadays our Toll-gate Chief has also taken a vow. So there is nothing

चट्टदि। ता व्वदिणीहिं वदिणो वंदणे दूसणं णत्थि। [विशाखे ' असन्महादानीन्द्रोऽपीदानीमारब्धव्रतो वर्तते। तद्व्रतिनीभिर्व्रतिनो वन्दने दूषणं नास्ति।]

ललिता — कीदिसं त व्वद।[1] (कीदृश तद्व्रतम्?)

कृष्णः — (सस्मितम्) नित्यमबलार्बुदद्विजवसनदानं नाम व्रतम्।

ललिता — तत्तो जुत्ता एसा घट्टाहिआरिदा, जई इदीसिए महापअवीए समारोहणं विणा णिअ-महाव्वदस्स रक्खणं दुक्कर। [ततो युक्ता एषा घट्टाधिकारिता यदीदृश्या महापदव्या समारोहणं विना निजमहाव्रतस्य रक्षण दुष्करम्।]

---

व्रतिनो वन्दने अपरस्य तादृक् नियमशीलस्य वन्दने दूषणं नास्ति। अपरवन्दनं प्रतिषिद्धमित्यस्य युक्तियुक्तप्रतिषेधादत्र युक्तिर्नाम सन्ध्यङ्गमुक्तम्भवति।

*जिज्ञासाप्रवणा ललिता पृच्छति* **कीदृशमिति** – भवदीयाधिकारिणा तत् कीदृश किन्नामक किम्प्रकारक व्रत गृहीतमस्तीति पृच्छा।

एतदन्तरालेऽर्जुनाय प्रत्युत्तरावकाशमददत् कृष्ण स्वयमेवाह स्मितपूर्व श्लेषेणाह **नित्यमिति** – नित्य प्रतिदिनमबलानामशक्तानां निर्धनाना अर्बुदेभ्यो दशकोटिसङ्ख्याभ्यो द्विजेभ्यो वसनानां दान वस्त्रप्रदानं नाम तद्व्रतम्। श्लेषेण अबलाना ललनाना अर्बुदसङ्ख्याकाना द्विजा दन्ता तेषां वसनमाच्छादन अधरोष्ठ तस्य दानम् (दो खण्डने इति धातोर्ल्युट्) खण्डन परिचुम्बन नाम व्रतम्। अत्र उभयपक्षेऽपि अर्बुदेतिपदाद्भूयस्त्वमात्रावबोध न तु सङ्ख्याविशेषस्येत्यवधेयम्। आश्लेष्वप्येवमेवागण्यत्वबोधनाय महती सङ्ख्या प्रयुज्यते Cf "Ten Thousand I saw at a glance" – Daffodils – Wordsworth

उपहासगर्भं समर्थयन्ती ललिताह–**तत इति**–तत एव महासाध्यमाधनाय गृहीतव्रते एषा घट्टाधिकारिता शुल्कादानाध्यक्षता युक्ता योग्या एव यत ईदृश्या महापदव्या समारोहण महाधिकारं विना निजस्यामुष्य महाव्रतस्य रक्षण दुष्करमेव।

---

ललिता — आपके अधिकारी ने कौनसा व्रत लिया है?

कृष्ण — (मुसकराते हुए) नित्य दस करोड़ निर्धन ब्राह्मणों को वस्त्रदान (> अबलाओं के अधरोष्ठ चुम्बन) करने का।

ललिता — तब तो चौकी के मुखिया पद पर होना योग्य है, इतने बड़े पद पर हुए बिना ऐसा महाव्रत का निबाहना कठिन ही है।

---

wrong in paying respects to an observer of a vow by those who are likewise observing some vow.

LALITĀ What vow?

KṚṢṆA (*smiling*) Of the gift of clothes daily to ten crores of helpless *Brāhmaṇas* (= kissing daily the lips of the like number of members of the weaker sex).

LALITĀ It is only proper, then, that you occupy a high position of authority as a Toll-gate Chief For, without such an authority it would be difficult to keep up the vow as important as that of yours

---

1. कीदृश त व्वदण (कीदृश तद्वन्दनम्) इति पाठान्तरम्।

कृष्णः — ( विहस्य पुरः पश्यन् ) सखे मधुमङ्गल ! श्रूयताम् ।

अभ्युक्ष्य निष्कं पतयालुना मुहुः
स्वेदेन निष्कम्पतया व्यवस्थिता ।
पञ्चालिकाकुञ्चितलोचना कथं
पञ्चालिकाधर्ममवाप राधिका ॥३६॥

---

पुरः मधुमङ्गलं प्रति पश्यन् विहसन्नाह श्रीकृष्णः **सख इति** – हे मधुमङ्गल श्रूयताम् – वक्ष्यमाणस्य पद्यस्य शृणोतेः कर्मत्वम् अभ्युक्ष्येति राधिकायाः स्तम्भवैवर्ण्य-स्वेदादीन् साध्वसजन्यान् सात्त्विकभावान् रतिपरिपोषकान् व्यावर्णयति नायकः ।

निष्कं ग्रैवेयके लम्बमानं सुवर्णपदकम् मुहुः वारंवारम् अभ्युक्ष्यार्द्रं कृत्वा पतयालुना ( पततेरालुच् ) पतनशीलेन स्वेदेन व्याप्ता अथवा मुहुः पतयालुना स्वेदेन निष्कमभ्युक्ष्य निष्कम्पतया निश्चलभावेन व्यवस्थिता विशेषेण अवस्थिता, पञ्च वृन्दां सङ्कलय्य चतस्रोऽन्याः अत एव पञ्च आलयो यस्याः सा पञ्चालिका सत्यपि, कुञ्चिते भयाद् दरमीलिते लोचने यस्यास्तादृशी राधिका कथं कीदृशी पञ्चालिकायाः पुत्तलिकाया धर्मं भावं स्वरूपं वा अवाप प्राप्तवती ।

अत्र निष्कमभ्युक्ष्येत्यनेन प्रस्वेदस्य सातत्यं भयमूलकं नायकस्य सान्निध्यवशादन्तः प्रमोदजन्यत्वञ्च गम्यते; अतः साध्वससंवलिता रतिः; कुञ्चितलोचनतया प्रियस्य विलोकने समुत्सुकता तयाऽभिव्यज्यमाना स्निग्धा रतिः, एवं रतिद्वयस्य योगादत्र सञ्चारिभावस्य सात्त्विकभावेन संवलितत्वाद्भावानां दिग्धत्वं प्रशस्यते – "रतिद्वयविना-भूतैर्भावैर्मनस आक्रमात् । जने जातरतौ दिग्धास्ते चेद्रत्यनुगामिनः ॥"– इति वचनात् । पञ्चालिकेति वर्णसङ्घातस्य भिन्नार्थे आवर्त्तनात्पद्येऽस्मिन्नुत्तरार्धे पादाद्यमकमलङ्कारः । कण्ठतः प्रोक्तस्य स्वेदस्तम्भरूपस्य सात्त्विकभावस्य औत्सुक्यसाध्वससञ्चारिणोः प्रतीय-मानयोः सद्भावादत्र नायिकागता रतिः, विहस्य सानन्दं वीक्षमाणत्वाद्धर्षविस्मयरूपेण सञ्चारिणा नायकगता स्थायिनी रतिरपि पोष्यते । प्रसादो गुणः, वैदर्भी रीतिः, वसन्ततिलका च वृत्तम् ॥३६॥

---

कृष्ण — ( हँसते हुए सामने देखकर ) मित्र मधुमङ्गल ! सुनो — लगातार टपकते हुए स्वेदबिन्दुओं से ( गले में पहनी हुई ) सोने की पुतली को भिगोती हुई, एकदम स्तब्ध सी यह राधा किस तरह अपनी पाँच सहेलियों के साथ गुड़िया की तरह खड़ी है ॥३६॥

---

KRṢṆA : (*gently laughing and seeing in front*)
Friend Madhumangala ! listen !

36. With her pendant being frequently sprinkled with her dripping sweat Rādhā has stood motionless, and see how, despite the company of her five friends, she has her eyes almost closed and has become just a puppet. .

मधुमङ्गल — (कृष्णस्य कर्णे निभृतोक्तिमुद्रामभिनयन् उच्चैः)
भो पिअवअस्स । दिट्ठिआ वड्ढसे । पेक्ख, गव्विद-सही-सहिदा सज्झसेण थम्भिदा राही । [भो प्रियवयस्य ! दिष्ट्या वर्धसे । पश्य गर्वित-सखी-सहिता साध्वसेन स्तब्धा राधा ।]

वृन्दा — (सस्मितम्)

मृगाधिपतिमध्यमः कठिनपीवरक्रोडभाक्
भुजङ्गमभुजद्वयस्त्वमसि पुण्डरीकेक्षणः ।
अतः कथय साध्वसं न भवतः कथं विन्दताम्
असौ पुरुष-कुञ्जर प्रकृतिभीरुरेणेक्षणा ॥३७॥

एवं निशम्य प्रेयसीप्रातिरूपसौभाग्य दिशमभिनन्दैव सखाय कृष्ण कर्णे तस्य किमपि निभृत गोप्य वच श्रावयन्निव मुद्रामाकारमभिनयन् नाटयन् उच्चैः सर्वश्राव्यत्वेन वक्ति मधुमङ्गल भो इति — हे प्रियवयस्य कृष्ण ! दिष्ट्या सौभाग्येन वर्धसे । तत्र हेतुमाह — पश्य गर्विताभि सखीभि सहितेय राधा साध्वसेन शुल्कस्यानपाकरणा-पराधवशात् भयेनाधुना देयम्भवेच्छुल्कमिति सङ्कोचेन स्तब्धा अत एव ते सुलभा भवेद्राधेति ।

अत्रान्तराले कथ न स्यात्स्तब्धा राधा, ईदृशि व्यतिकरे सम्प्राप्ते सतीति युक्तियुक्तमुपपादयन्ती वृन्दा राधाया युक्त नाम भीतत्वमिति स्मितपूर्वमाह **मृगाधिपेति**— हे कृष्ण ! त्व मृगाधिपति सिंह तस्य मध्यम कटिभाग यस्य तादृशः असि, पुनश्च कठिन कठोर पीवर पुष्ट क्रोड वराहस्तस्य क्रोड उर त भजतीति कठोरक्रोडभाक् असि, अपि च भुजङ्गम सर्पस्तद्वल्लम्बमान भुजद्वय यस्य तादृश असि, परञ्च पुण्डरीक व्याघ्र तस्य ईक्षणे नयने इव ईक्षणे यस्य तादृशोऽसि — एकैकस्यापि सत्त्वे भयावहत्व किमुत सिंहवराहसर्पव्याघ्राणां त्वदीयगात्रेषु समवाये विद्यमाने त्वमेव कथय कथ नाम असौ राधा एणेक्षणा मृगनयना स्वभावत पुरुषेषु कुञ्जर गजस्तस्मादपि भीरु भयशीला सती

---

मधुमङ्गल — (कृष्ण के कान में कुछ गुप्त बात कहने का अभिनय करता हुआ ऊँचे स्वर से) प्रिय मित्र ! सौभाग्य की बात है — देखो ! अपनी गर्वीली सखियों समेत यह राधा विह्वल हो कैसी निश्चल खड़ी है ।

वृन्दा — (मुसकराती हुई) नर-कुञ्जर को देखकर स्वभाव से ही भयभीत होने वाली यह मृगनयनी तुम्हें देखकर क्यों कर व्याकुल न होगी, कारण तुम तो कटिप्रदेश में सिंहरूप हो, तुम्हारा उत्सङ्ग कठोर, मासल वराह रूप है, बाहुयुगल भुजङ्गरूप हैं और नयन हैं व्याघ्ररूप ! ॥३७॥

---

MADHUMANGALA (*acting as though whispering something confidential in the ears of Kṛṣṇa, loudly*)
Oh ! dear friend thank God, see Rādhā has stood terror-stricken with her proud friends

VṚNDĀ (*smiling*) Oh excellent one ! you have a lion's waist, a hog's stout chest, snake like shoulders (arms) and the eyes of a tiger How can then, the fawn-eyed Rādhā, timid by nature, be but scared of you ?

**ललिता** — ललिदा-पालिदाणं गोआलिआणं कहिं पि भअसद्दो वि कण्णकुहरं ण गदो। तत्थवि इमस्स गोउल-रक्खण-व्वदस्स अह्म राअकुमारस्स पुरदो कीदिसं भअं णाम ? [ललितापालितानां गोपालिकानां कुतोऽपि भयशब्दोऽपि कर्णकुहरं न गतः। तत्राप्यस्य गोकुलरक्षणव्रतस्य अस्मद्राजकुमारस्य पुरतः कीदृशं भयं नाम ?]

---

भवतः साध्वसं न विन्दती, नूनं भयमाप्नुयादेव सा इत्यर्थः। हरिणी गजाद्बिभेति, गजोऽपि सिंहात्। या हरिणीधर्मिणी स्वभावतः पुरुषकुञ्जरादपि भयं वहन्ती सा कटिभागे सिंहरूपाद् उरःप्रदेशे वराहरूपाद् भुजयोः भुजगरूपाद् वीक्षणे च व्याघ्ररूपात्त्वत्तः कथं न भीता भवेत् – नूनम्भवेदेवेति तात्पर्यम्। अथवा पुरुषकुञ्जर नरश्रेष्ठेति-सम्बोधने पृथक्पदत्वेनापि ग्रहणं युक्तं; तथा सति प्रकृत्या भीरुः निसर्गपेशला प्रकृतिभीरुरिति प्रथमान्तमसाविलस्य विशेषणम् भवितुमर्हति।

अत्र पूर्वार्धे प्रतिपदमुपमा, क्रोडेत्यत्र श्लिष्टता च, पुनरपि पुरुषकुञ्जरेति एणेक्षणेत्यत्र लुप्तोपमा। अपि च साध्वसकारणतासाधनायैकस्यापि भीषणस्य वस्तुनः उपन्यासेऽलम्भूनेऽपि नैककारणोपन्यासादत्र समुच्चयालङ्कारः। भीषणत्वप्रतिपादनरूप-निन्दया कृष्णस्य स्वरूपगतं रम्यत्वं श्लेषेण प्रतिपादितं भवति, तद् यथा — मध्यमभागस्य सिंहवत्कृशत्वादुल्लाघता, कठिनपीवरक्रोडतया दृढत्वं सुखासनत्वञ्चाङ्गस्य, भुजङ्गम-सदृशभुजयोः मार्दवं स्निग्धत्वं समाश्लेषसुखत्वं, पुण्डरीकेक्षणेत्यत्र श्लेषेण कमलनयनत्वं द्योतयित्वा रम्यत्वमेव प्रतिपादितमतः निन्दामुखेन स्तुतिपर्यवसायित्वादिह व्याज-स्तुतिरलङ्कारः। पूर्वार्धे त्वमिति, परार्धे भवतः इति कथनाद्भग्नप्रक्रमता। माधुर्यं गुणः, पाञ्चाली च रीतिः। अत्र पृथ्वी वृत्तम् ॥३७॥

आत्मनो गौरवं ख्यापयन्ती कृष्णस्य महिमानं वर्णयन्ती सगर्वचाटूक्तिमुपन्यस्यति ललिता **ललितेति** – ललितया पालितानां संरक्षितानां गोपालिकानां कुतोऽपि कस्मादपि हेतोः (तत्त्वतो भयं तावद्दूरे आस्ताम्) 'भय'शब्दः भकारोत्तराकारोत्तरयकारोत्तराकारात्मको ध्वनिरपि कर्णयोः कुहरं विवरं न गतः। ललितायाः संरक्षणे वर्त्तमानानां बह्वीनां कर्णशष्कुलीमपि न कश्चिद्भयशब्दः प्रविष्टः, तत्रापि पुनश्च गोकुलस्य रक्षणमेव व्रतं यस्य सः तस्य

---

**ललिता** — ललिता के संरक्षण में रहने वाली गोपिकाओं के कानों में भयनामक शब्द को कहीं प्रवेश मिला ही नहीं और फिर सम्पूर्ण गोकुल की रक्षा का नियम ग्रहण किये हुए हमारे राजकुमार के सामने तो भय किस बात का ?

---

LALITĀ : From no source whatsoever even in name fear has ever touched the ears of the cowherd belles under the guardianship of Lalitā. And then, what fear could there be in the presence of our prince who has taken upon himself the avowed duty of protecting Gokula !

कृष्ण — ललामाङ्गि ललिते ! ललितं ब्रवीपि। तदिमां सखीमण्डलेन सार्धं पाण्डुरशिलामध्यास्य समुदाचारमवधारय।

ललिता — गोउलजुअराअ ! पेक्ख। आरोहेदि भअवंतो चडमऊओ गअणमडलं। ता आपुच्छम्ह तुमं तुरिअं जण्णमडवोवलम्हणस्स।
[ गोकुलयुवराज ! पश्य। आरोहति भगवान् चण्डमयूखो गगनमण्डलम्। तस्मादापृच्छे महि त्वा त्वरित यज्ञमण्डपोपलम्भनस्य। ]

---

अस्मद्राजकुमारस्य पुरत समक्षं कीदृश नु भय नाम। आदौ भयवारणे ललितैव पर्याप्ता, पुनश्च राजकुमारस्य सान्निध्य ततोऽप्यधिकमभयकारणमिति आत्मनो गौरव कृष्णम्प्रति चाटूक्त्या ततो मृदुव्यवहारापेक्षित्व गमितम्। अत्रौदार्यं गुण ।

तथैव चाटुभावेन प्रतिवक्तुमना श्रीकृष्णोऽपि स्वार्थघटनाय युक्त्या ललितां सम्बोधयति **ललामेति** – अयि ललाम पताका तद्वदङ्गानि यस्या सा तत्सम्बुद्धौ हे ललामाङ्गि सकलसुन्दरीवृन्दस्य वैजयन्तीरूपे ललित ! ललित सुमनोहर ब्रवीपि। अत्र ललितभाषित्वात्त्व सत्य ललितेति निर्वचनात् निरुक्त नामालङ्कार। **तदिमामिति** – तत् अत, हे ललिते ! सखीमण्डलेन सार्धं सर्वाभिर्वयस्याभि सह इमा पाण्डुरशिला श्वेतपापाणपट्टिकामध्यास्य तदुपरि उपविश्य समुदाचारम् औपचारिक व्यवहारम् अवधारय निर्वर्त्तस्व। शिलामित्यत्राधिपूर्वकास्धातोर्योगे "अधिशीङ्स्थासा कर्म" त्यनुशासनाद् द्वितीया। समुदाचारस्तु शिष्टाचरणम्।

मध्याह्नवेला सूचयन्ती ललिता प्रतिवक्ति **गोकुलेति** – गोकुलस्य युवराज राजकुमार ! प्रेक्षस्व यद्भगवान् चण्डमयूख सविता गगनमण्डलमारोहति मध्येव्योम राजते, अतिवेला जाता तस्माद् हेतो यज्ञमण्डपोपलम्भनस्य यज्ञमण्डप शीघ्रमात्मान नेतु त्वामापृच्छेमहि त्वदीयामनुज्ञां याचेमहि – अनुजानीहि त्वरितमस्मान् गन्तु यज्ञवाट, मा माऽस्मानुपरुन्द्धि। उपलम्भनस्येत्यत्र षष्ठी शेषे।

---

कृष्ण — अरी ललिताङ्गी ललिता ! तुम्हारी भाषा कितनी ललित है ! तो चलो इस शुभ्रशिला पर अपनी सखियों सहित बैठकर शिष्टाचार का निर्वाह (निरूपण) करलो।

ललिता — गोकुलयुवराज ! देखो, भगवान् सूर्य मध्य आकाश पहुँच रहे हैं, अत हम आपसे शीघ्र यज्ञमण्डप पहुँचने की अनुमति चाहती हैं।

---

KRṢNA Handsome Lalitā ! handsome you speak. Please, therefore, be seated on this white slab with your friends and ascertain the proper practice.

LALITĀ Dear prince, the Sun god is ascending to the zenith. We, therefore, immediately take leave of you in order that we may reach the sacrificial booth on time.

( कृष्णः भ्रुवोराघूर्णनेन मधुमङ्गलं व्यापारयति )

**मधुमङ्गलः** — ललिदे ! अज्ज तुम्हाहिंतो सुलुक्कं गेण्हिदुं ण क्खु जुत्तं । जं संगवे हेअंगईण-भार-भंगुर-मज्झमाओ अप्पसिणिद्धाओ होदीओ घट्टे आअदिअ वट्टेन्ति । ता रित्तत्त-दूसण-णिआरणत्थं किं पि थोअं अणुमण्णिअ जहसोक्खं जांतु । [ ललिते ! अद्य युष्मत्तः शुल्कं गृहीतुं न खलु युक्तम् । यत् सङ्गवकाल एव हैयङ्गवीन-भारभङ्गुर-मध्यमाः आत्मस्निग्धाः भवत्यो घट्टे आगत्य वर्तन्ते । तस्माद्रिक्तत्वदूषणनिवारणार्थं किमप्यल्पमनुमन्य यथासुखं यान्तु । ]

[ समुचितोत्तरप्रदानाय सखायं मधुमङ्गलं भ्रुवोराघूर्णनेन नर्त्तनेन व्यापारयति कृष्णः प्रणोदयति । ]

तत्सङ्केतमवाप्यावसरोचितमाह मधुमङ्गलो ललित इति — अद्य युष्मत्तः ( अपादाने पञ्चम्यर्थस्तसिः ) सङ्गवकाले गोचारणवेलायां प्रातरेव भवत्यः हैयङ्गवीनस्य भारेण भङ्गुरो मध्यमः कटिप्रदेशो यासां तादृश्यः सत्यः, परञ्च आत्मनः स्निग्धाः सौहार्द्रप्रवणाः प्रकृतिपेलवा वा घट्टे आगत्य यदृच्छया घट्टस्य सान्निध्यमुपेत्य इह वर्त्तन्ते । यज्ञमण्डपस्य गमिकर्मितया ईप्सिततमत्वाद् घट्टस्य चाकस्मिकतया विषयत्वाच्चात्र कर्मत्वं न च द्वितीया अत एव घट्टेऽधिकरणे सप्तमी । तस्माद् रिक्तत्वं नाम किमपि शुल्कमप्रदाय निर्गमनरूपं दूषणं, तन्निवारयितुं किमप्यल्पमनुमन्य शुल्कदानं स्वीकृत्य यथासुखं निर्बाधं स्वच्छन्दं यान्तु इति ।

---

[ कृष्ण भ्रूसङ्केत से मधुमङ्गल को प्रेरित करते हैं ]

**मधुमङ्गल** — ललिता ! आज तुम से शुल्क लेना उचित न होगा ; कारण, बड़े सवेरे चल पड़ी, नवनीत से परिपूर्ण कलश के भार से परिश्रान्त तुम अत्यन्त स्निग्ध भाव रखनेवाली हमारी परिचित सखियाँ ही इस चौकी पर विद्यमान हो — तथापि विना शुल्क तुम्हें चले जाने के अपराध से हम बचाने के लिए तुम कुछ भी चुंगी अदा कर, सुख से जा सकती हो ।

---

*( Kṛṣṇa incites Madhumaṅgala to action with a significant whirl of his brows )*

MADHUMAṄGALA : Lalitā, it is not proper to realise tax from you today inasmuch as you, delicate by nature, (or our good friends) have been at the toll-station right from the dawn, and your slender waists are almost broken with the load of fresh butter over your heads. You may, therefore, go with pleasure after making some token payment just to spare us from being accused of letting you without payment of tax.

**विशाखा** — अम्महे ! अदिट्ठपुव्व क्खु गोअड्ढणे घट्टदाण । [अहो अदृष्ट पूर्वं खलु गोवर्धने घट्टदानम् ।]

**कृष्ण** — विशाखे ! सत्य व्याहरसि । भवद्विधा खलु कथ द्रक्ष्यन्ति यद्यापि पश्यन्त्योऽपि न पश्यन्ति ।

**ललिता** — (जनान्तिकम्) हन्त सहीओ ! प्पढम सामघट्टना ज्जेव जुत्ता । [हन्त सख्य ! प्रथम सामघटनैव युक्ता ।]

---

विशाखा आश्चर्यं प्रकटयन्ती ललितायै प्रतिवचनायावसरमददाना मध्य एव ब्रूते **अम्मह इति** — अम्महे अहो इति प्राकृते विस्मयावबोधकमव्ययपदम् । गोवर्धनेऽस्मिन् गवा वर्धन यत्र तादृशाभिधेयवति पुण्यगिरौ घट्टदान शुल्कप्रदान न पूर्वं दृष्टमित्यदृष्टपूर्वं नवीनमेवति । "भूतपूर्वे चरट् —इति पाणिनिप्रयोगात्पूर्वनिपात ।

कृष्ण प्रतिवक्ति **विशाख इति** — विशाखे ! सत्य व्याहरसि ब्रूषे । भवद्विधा भवादृश्य खलु कथ द्रक्ष्यन्ति यद्यापि (शुल्कस्थानकं) पश्यन्त्योऽपि न पश्यन्ति ।

जनान्तरस्य श्रवण व्यतिरिच्य सखीमात्रावबोधनाय ललिता नियतश्राव्यमाह **हन्तेति** — हन्त सख्य ! प्रथम सामघटना साम्ना शान्त्युपायेन वर्तनमेव युक्ता समीचीन प्रतिभाति इति । सर्वा सख्यश्चानुमोदन्ते सुष्ठु भणसीति । "त्रिपताक करेणान्यानपवार्यान्तरा कथाम् । अन्योन्यामन्त्रणं यत्स्याज्जनान्ते जनान्तिकम्" ।

---

**विशाखा** — गोवर्धन गिरि पर तो चुंगी वसूली कभी नहीं देखी ।

**कृष्ण** — विशाखा ! सच कह रही हो । तुम जैसी सजनियाँ क्योंकर देखेंगी, कारण अभी तो देखती हुई भी तुम देख नहीं रही हो ।

**ललिता** — (एक ओर) अरी सखियो ! आरम्भ में शान्ति से ही काम लेना उपयुक्त होगा ।

---

VISĀKHĀ Oh, my Lord ! payment of toll-tax at the Mt Govardhana is certainly something never seen before

KRṢNA Visākhā, right you are ! In sooth, how can people like you see, in view of the fact that, even now, while seeing, they donot see [1]

LALITĀ : (*aside*) I say, friends, conciliation is the proper measure, to start with.

---

[1] Cf 'Eyes they have, but they donot see' —Proverb

सर्वाः — सुट्ठु भणेसि। [सुष्ठु भणसि।]

ललिता — (सप्रश्रयमभ्युपेत्य) गोउलाणन्द, एक्कग्गामवासिसु विसुद्ध-पइदिसु मादिसजणे ण जुत्तं किर सुसिलोअस्स सल्लोअमउलिणो तुह्मादिसस्स पडिउल्लाअरणं। ता अणुजाणीहि तुरिअ। [गोकुलानन्द! एकग्रामवासिषु विशुद्धप्रकृतिषु मादृशजनेषु न युक्तं किल सुश्लोकस्य सल्लोकमौलेर्युष्मादृशस्य प्रातिकूल्याचरणम्। तदनुजानीहि त्वरितम्।]

कृष्णः — (सकारुण्यमिव) हन्त सुकुमारि! सुष्ठु निर्बध्नता दुरन्त-

सर्वसम्मतिमवाप्याग्रे भूत्वा ललिता सप्रश्रयं विनयेन कृष्णान्तिकमभ्युपेत्य सम्बोधयति **गोकुलानन्देति** – हे गोकुलस्य आनन्दस्वरूप! एकस्मिन् ग्रामे वसन्तीति एकग्रामवासिनस्तेषु, विशुद्धा सरला प्रकृतिः स्वभावो येषां तेषु विशुद्धप्रकृतिषु अस्मादृशेषु स्निग्धेषु अबलाजनेषु (विषयसप्तमी) सुष्ठु शोभनः श्लोकः कीर्तिर्यस्य सुयशसः सल्लोकस्य सज्जनवृन्दस्य मौलिश्चूडामणिस्तद्रूपस्य युष्मादृशस्य (कर्तरि षष्ठी) प्रातिकूल्येन आचरणम् विप्रतीपव्यवहारः न युक्तमशोभनमेवेति। किलेति गर्हायाम्। अत एव अस्मान् त्वरितमनुजानीहि स्वगन्तव्यं स्थानं गन्तुम् अनुमन्यस्व। गोकुलानन्दात् त्रासो जनानामस्मादृशाम् मा भूदिति साभिप्रायं सम्बोधनमतः परिकराङ्कुरालङ्कारः॥

विनयप्रवणं युक्तियुक्तं ललितावचनं निशम्य द्रवितान्तः श्रीकृष्ण आत्मनो वैवश्यमिव प्रकटयन् कारुण्येन सहानुभूतिभावेन सहितमिवाह **हन्तेति** – सुकुमारि

---

सब — ठीक ही कह रही हो।

ललिता — (आदरपूर्वक निकट पहुँचती हुई) गोकुलानन्द! एक ही गाँव की रहने वाली विशुद्ध प्रकृति की हम जैसी सुजनियों से आप जैसे लोकोत्तर गुणों से सम्पन्न प्रशंसनीय महापुरुष द्वारा इस प्रकार का प्रतिकूल व्यवहार तो उचित नहीं लगता। हमें शीघ्र जाने की तुरन्त अनुमति दें।

कृष्ण — (मानो सहानुभूति दर्शाते हुए) अयि सुकुमारि! कठोर शासन करने वाले

---

ALL : Right you are.

LALITĀ : (*courteously approaching*) O Joy of Gokula! it does not behove a celebrity of your order who tops the noblest here, to behave so adversely towards persons like us who are straightforward by nature and are inhabitants of the same town. Please, therefore, let us go forthwith.

KṚṢṆA : (*with a show of sympathy*) Ah, fair youth! I am put to this relentless duty of exacting toll by the inexorable

शासनेन तेनाटवीचक्रवर्तिनाऽत्र घोरे घट्टकर्मणि नियुक्तोऽस्मि । किम् अस्वैरी करिष्ये ?

विशाखा — किं क्खु कसेण ? [किं खलु कसेन ?]

कृष्ण — नहि नहि ।

विशाखा — तदो केण ? [तत केन ?]

कृष्ण — क्रीडाकटाक्षच्छटानिर्द्धूतकंसादिना महामन्मथाभिधानेन[1] ।

प्रवृतिपेल्वे अयि सजनि । सुष्ठु सम्यक् निर्बन्धता अनुशासनकठोरेण हठिना दुरन्तमनतिक्रमणीय शासन यस्य तेन अटवीचक्रवर्तिना वनभूप्रभुणा अत्र अस्मिन् घोरे विषमे घट्टकर्मणि शुल्कादानाधिकारे नियुक्तोऽस्मि । अतोऽहमस्वैरी परतन्त्र किं करिष्ये किमपि स्वच्छन्द कर्तुं नैव पारयामीति भाव । अत शुल्कग्रहणं विना इत गमनमनुज्ञातु नाहं प्रभवामीति तात्पर्यम् ।

तत सोत्क पृच्छति विशाखा **किमिति** — असावटवीनाथ किं कस तेनैव नियुक्तोऽसीति पृच्छा ।

तत्र नहि नहीति प्रत्याख्याते कृष्णे "तत केनापरेण प्रभुणेति" पुन पृच्छति विशाखा, या प्रतिवक्ति कृष्ण **क्रीडेति** — क्रीडामयानां कटाक्षाणां छटया परम्परया लीलापाङ्गदृष्टमात्रेण निर्धूता कसादयो दुरशासना अपि येन तादृशेनातिप्रबलेन "महान् चासौ मन्मथ — मनो मथ्नातीति तादृश " महामन्मथ स एवाभिधान नाम यस्य स तेन कन्दर्पराजेनेत्यर्थ — नियुक्तोऽस्मीति शेष ।

---

| | |
|---|---|
| | इस वन के चक्रवर्ती ने यहाँ चुगी वसूली के कठोर काम पर मेरी नियुक्ति की है । इस तरह परतन्त्र होने के कारण मैं क्या कर सकता हूँ । |
| विशाखा — | कसराज ने तुम्हारी नियुक्ति की है ? |
| कृष्ण — | नहीं नहीं । |
| विशाखा — | तो किसने की है ? |
| कृष्ण — | अपनी क्रीडा के कटाक्ष की छटा से ही कस जैसे राजाओं को पराभूत कर देनेवाले महाराज महामन्मथ ने । |

| | |
|---|---|
| | lord of forests whose order brooks no breach A subordinate that I am, what can I do in the matter ? |
| VIŚĀKHĀ | By whom indeed ? Is it by Kamsa ? |
| KRṢNA | No, no |
| VIŚĀKHĀ · | Then, by whom ? |
| KRṢNA | By that god of love, the great Manmatha by the splendour of whose side-long looks Kamsa and others like him have been set at nought |

1. °- भिधेन - इति पाठान्तरम् ।

ललिता — अम्मो ! कहिं पि ण सुणिदो एसो महामम्महणामा चक्कवट्टी !
[अहो क्वापि न श्रुत एष महामन्मथनामा चक्रवर्ती । ]

मधुमङ्गलः — ( साट्टहासम् ) ही ही अच्चरिअं, अच्चरिअं । महामम्महो वि इमाहिं ण सुणिदो । महाकडए प्पमदमञ्जरी णाम जस्स राअधाणी, महुमुह-महाबल-विजअप्पमुहा जस्स अमच्चवरा, उत्तमा रामाअली जस्स विहारपअं ।
[ आश्चर्यम्, आश्चर्यम् । महामन्थोऽप्याभिर्न श्रुतः । महाकटके प्रमदमञ्जरी नाम यस्य राजधानी, मधुमुखमहाबलविजयप्रमुखा यस्यामात्यवराः, उत्तमारामावली यस्य विहारपदम् ।]

तत्र विस्मयं दर्शयन्ती ललिताऽऽह **अम्मो इति** – अम्मो अम्महे इत्याश्चर्यसूचने । क्वापि न श्रुतः एष महामन्मथनामा चक्रवर्त्ती सकललोकचक्रं वर्त्तयति अनुशास्तीति महाप्रभुः ।

सरलभावेनाश्रुतपूर्वत्वमस्य नव्यस्य महाप्रभोः ख्यापयन्तीं ललितामुपहसन् कृष्णं सम्बोधयन्निवाट्टहासेन उच्चैर्हासेन उपलक्षितो मधुमङ्गलो ब्रूते **आश्चर्यमिति** – परमाश्चर्यमिति बोधयितुं द्विरुक्तिः — अहो आभिस्तरुणीभिः महामन्मथः सर्वप्रभुः कामदेवोऽपि न श्रुतः यस्य महाकटके गोवर्धननितम्बे कृतसेनासन्निवेशे प्रमदमञ्जरी मायन्प्रमोद एव मञ्जरीरूपः यस्यां तादृशी केलिप्रधाना राजधानी, मधुपदं मुखे प्रारम्भे यस्य तादृशः मधुमङ्गलः, महाबलः सुबलः, विजयोऽर्जुनश्च प्रमुखाः अमात्याः, उत्तमा श्रेष्ठाऽऽरामावली उपवनश्रेणिः, पक्षे उत्तमा रम्यतमा रामाणां ललनानामावली मण्डली यस्य विहारपदं केलिविषयः । एवं श्लेषेण समासोक्त्या च महामन्मथपदेन श्रीकृष्ण एव तादृशः प्रभुः राजतुल्यव्यवहारसमारोपादिति दिश्यते ।

---

ललिता — ओह ! महामन्मथ नामका चक्रवर्ती तो कहीं सुना नहीं गया !

मधुमङ्गल — ( ज़ोर से खिलखिलाता हुआ ) बड़ा अचरज है-आप लोगों ने महामन्मथ का नाम भी नहीं सुना । महाकटक ( १. सेना शिविर, २. गोवर्धन की तलैटी ) में प्रमदमञ्जरी जिसकी राजधानी है, मधुमुख ( मधु से प्रारम्भ होनेवाला = मधुमङ्गल ), महाबल ( सुबल ), विजय ( = अर्जुन ) आदि जिसके प्रधान अमात्य हैं और श्रेष्ठ उद्यानपंक्ति ( < सुन्दरी वृन्द ) जिसकी विहारभूमि है ।

LALITĀ : My lord ! nowhere a lord like Manmatha, the great is ever heard of !

MADHUMAṄGALA : ( *laughing loudly* ) It is surprising you have not even heard of Mahāmanmatha ( = the great god of love ), the sovereign, whose capital, Pramada-mañjarī ( = a cluster of blooming blossoms or a bevy of infatuated belles) is situated in Mahākaṭaka ( = the vicinity of a great army or a flank of Mt. Govardhana ) whose cabinet of excellent ministers ( = pleasure companions ) consists of Madhumaṅgala, Subala, Vijaya and others, and whose pleasure resort consists of a series of gardens ( < choice beauties).

कृष्ण — किं बहुना । सन्ततममी कुरङ्गभृङ्गकोकिलादयोऽपि यस्य निदेशचारिणश्चारतामङ्गीकुर्वते ।

चम्पकलता — ( साच्छुरितम् ) ललिदे, अदो दाणं अपरिहरदो वि वद्दणदणो तुए णासूइदव्वो ज परिदो चोरचक्कवट्टिणो चरा चरेन्ति । ( ललिते, अतो दानमपरिहरन्नपि व्रजेन्द्रनन्दनस्त्वया नासूयितव्यः । यत. परितश्चोर-चक्रवर्तिनश्चराश्चरन्ति । ।

---

तमेवार्थं विशिनष्टि कृष्ण किम्बहुनेति — अतिविस्तरेण तस्य महामन्मथ-प्रभो परिचयार्थमुक्तेन बहुना किम् — समासेनोक्तमेतावदेवालमस्तु यत् तादृशोऽय महिमशाली प्रभुर्यस्य निदेशचारिण आज्ञावर्त्तिन कुरङ्गा हरिणा, भृङ्गा मधुपा, कोकिलाश्च आदिपदेन मन्दपवन सुमनस मदनोद्दीपना विवक्षिता — एते सव तिर्यञ्चोऽपि चारता गुप्तचरत्वं दौत्य वा अङ्गीकुर्वते स्वयमेव निवहन्ति । अस्य सार्वभौमाधिकार ख्याप्यते । अत्र विदग्धप्रियश्छेकालङ्कार ।

एतस्मिन् व्यतिकरे ललितामुद्दिश्य चम्पकलताऽवसरोचित व्याहरति ललितेति — दानमपरिहरन्नपि शुल्कग्रहणरूपे प्रातिकूल्याचरणे व्यवसितोऽपि व्रजेन्द्रनन्दनो न असूयितव्य पराङ्मुखीकरणीय, यत परित सवत्र चोरचक्रवर्त्तिनश्चराश्चरन्ति ततो वय रक्षणीया एव । अत्र रम्यो वृत्त्यनुप्रास । साच्छुरितमिति सोत्प्रासस्मितार्थ देशीप्रयोग ।

---

कृष्ण — अधिक क्या कहा जाय – ये कुरग, भृग, कोयल आदि सब ही उसके दूत का काम सन्तत करते रहते हैं ।

चम्पकलता — ( कटाक्ष के साथ हँसती हुई ) अरी ललिता, शुल्क से मुक्त न करने पर भी कृष्ण से नाराज़ नहीं होना चाहिए, कारण चारो ओर चोरों के चक्रवर्ती के गुप्तचर घूम रहे हैं ।

---

KRṢṆA In short, these fawns, bees, *kōels* and others are always at his beck and call, and willingly accept to work as his emissaries

CAMPAKALATĀ *( satirically smiling )* Lalitā ! you should not, therefore, grudge the prince of Braja even if he does not excuse payment of taxes, for, the spies of the Thug-king are stalking around.

कृष्णः — ललिते नीतिज्ञासि । तदत्र कुम्भानवरोप्य निरूपयन्तु भवत्यः शुल्ककृत्यम् ।

विशाखा — मोहण ! घट्टप्पंगणे कुलंगणाणं तिलं वि विलंबणं किर विडंबणं ज्जेव । [ मोहन ! घट्टप्राङ्गणे कुलाङ्गनानां तिलमपि विलम्बनं किल विडम्बनमेव । ]

चित्रा — ( सदाक्षिण्यम् ) गोउलाणंद, तत्तं सुणाहि । दिज्जन्तम्मि कअड्डिआमेत्ते वि घट्टदाणे जणिअं घिअं असुद्धं होदि त्ति सुणिज्जई । ण उण अम्हाणं पंचतांवि प्पदाणे कादरदा । [ गोकुलानन्द । तत्त्वं शृणु । दीयमाने

---

चम्पकलताया वचनं निरपेक्षमित्युपेक्ष्य कृष्णः ललितां सम्बोधयति ललित इति–त्वं नीतिज्ञा व्यवहारकुशला आचारक्रमं जानासि । नीतिं जानातीति नीतिज्ञा – 'इगुपधे' त्यनेन कप्रत्ययः ततष्टाप् । तदत्र कुम्भान् नवनीतपात्राणि अवरोप्य शिरस्तोऽवतार्य भवत्यः शुल्ककृत्यं निरूपयन्तु शुल्कदानक्रमं निर्वर्त्तन्ताम् ।

अत्रान्तराले विशाखा कृष्णं प्रसङ्गोपात्तमाह मोहनेति — मोहयतीति मोहनः ( कर्त्तरि ल्युट् ) कृष्णस्यापरं नामात्र साकूतम् रमणीयाकृतिर्मधुरवागित्यर्थः । घट्टस्य प्राङ्गणे शुल्कचत्वरस्य परिसरे कुलाङ्गनानां महिलानां तिलमपि क्षणपर्यन्तमपि विलम्बनमुपस्थितिः विडम्बनमशोभनमेव । डलयोः साम्याद् 'विलम्बन-विडम्बने'त्यत्र यमकालङ्कारः, तिल-बिल-किलादिषु रम्योऽनुप्रासश्च ।

विशाखोक्तिमनुमोदमाना चित्राऽपि सदाक्षिण्यं साम्ना कृष्णं सान्त्वयन्ती प्राह गोकुलेति — हे गोकुलस्य आनन्दस्वरूप ! तत्त्वं तथ्यं शृणु । कपर्दिका वराटिका मात्रा परिमाणं ( परिमाणार्थे मात्रच् ) तावत्यपि घट्टदाने शुल्के दीयमाने सति घृतियं

---

कृष्ण — ललिता ! सचमुच तुम नीतिकुशल हो । अत एव अपने सिर से नवनीत के घड़े उतार कर, चुंगी की अदायगी तुम्हें कर देनी चाहिए ।

विशाखा — मोहन ! चौकी के आंगन में कुलाङ्गनाओं का क्षण भर भी रुकना एक बड़ी विडम्बना है ।

चित्रा — ( विनयपूर्वक समझाती हुई ) हे गोकुलानन्द ! सत्य बात तो यह है कि बतौर चुंगी के एक कौड़ी भी दी जाने पर यह घृत अशुद्ध

---

KṚṢṆA : Lalitā, you are wise enough ; please, therefore, have these pots put down and settle this business of toll-tax.

VIŚĀKHĀ : Mohana ! even the slightest detention at the premises of the toll-station is highly unbecoming for the women of noble descent.

CITRĀ : (*complaisantly*) Oh Joy of Gokula ! the fact of the matter is : even if a cowrie be paid as toll-tax on

कपर्दिकामात्रेऽपि घट्टदाने यज्ञिय घृतमशुद्ध भवतीति श्रूयते । न पुनरस्माक पञ्चताम्रिकादाने कातरता । ]

ललिता — हला राहे ! इमिणा महाभारेण किलिट्ठासि । ता एत्थ घडिआं ओदारेहि घडिआ । [सखि राधे ! अनेन महाभारेण क्लिश्यसि । तदत्र घटिकामवतारय घटिकाम् । ]

( इति सर्वा घटिकावतारण नाटयन्ति )

कृष्ण — सखे सुबल ! घट्टस्याद्य प्रथमातिथिरसौ ससुहृज्जना ललिता । तदस्याः काममपूर्वमाधुर्येण फणिवल्लीपर्णवीटिकापञ्चकेन माननमौपयिकम् ।

---

यज्ञार्थमुपकल्पितं घृतमशुद्ध भवतीति श्रूयते महाजनमुखात् ज्ञायते – इति हेतोर्वय बिभीम , न पुनरस्माक पञ्चताम्रिकाणा ताम्रनाणकाना प्रदाने कातरता सङ्कोच । ताम्रस्य तन्नामकस्य नाणकस्य चतुर्थो भागस्ताम्रिका, ताम्रिकाणाम् अशीति ( = विंशतिस्ताम्राणि ) एका कपर्दिका भवतीत्यभिधानम् ।

एव विवादावसरे घटीभारेण श्राम्यन्तीं राधा विलोक्य निपुणा ललिता राधामाह **हलेति** – अयि राधे ! अनेन महाभारेण त्व क्लिष्टाऽसि खेदमनुभवसि । तदत्र घटिकां यावत् षष्टिपलात्मिका घटी तावत्कालपर्यन्तं कञ्चित्कालमित्यर्थ । घटी एव घटिका ( स्वार्थे कप्रत्यय ) — कालाध्वनोरत्यन्तसयोगे द्वितीया । घटिकां नवनीतभाण्डम् अवतारय अध स्थापय । घटिकां – घटिकामिति पृथगर्थाया वर्णसहतेरावर्त्तनात् यमकालङ्कार ।

[इति ललितादेशेन सर्वा गोप्यो घटिकानामवतारण नाटयन्ति अभिनयन्ति – कुर्वन्तीत्यर्थं ।]

मनोरथानुरूपमाचरन्तीं ललितां सभाजयितुमातिथेय कृष्ण सुबलमाह **सखइति** – अद्य घट्टस्यास्माक चत्वरस्य असौ सुहृज्जनेन सहिता ललिता प्रथमातिथि सर्वप्रथममागतो जन तत् अस्या गोपीमुख्याया ललिताया माननं सम्भावनां काममवश्यमेव अपूर्व माधुर्य

---

हो जाता है ऐसा शिष्ट लोग कहते हैं – अन्यथा हमें पाँच ताम्बे के टुकडे देने में किसी तरह सङ्कोच नहीं है ।

ललिता — अरी राधा ! इस भारी बोझ से तुझे कष्ट हो रहा है । अत घड़ी भर अपने घडे को उतार कर रख दो ।

( यों सबही अपने अपने घड उतार कर रखती हैं )

कृष्ण — मित्र सुबल ! आज अपनी चौकी पर पहिली मेहमान है यह सखी समेत आई हुई ललिता । अत एव अपूर्व माधुरी से ( सस्नेह ) पाँच ताम्बूल समर्पण कर इनका सम्मान करना उचित होगा ।

---

sacrificial butter, it is said to become impure (polluted) Otherwise we donot mind paying five coppers

LALITĀ — Friend Rādhā ! you are distressed with this great weight. Put down, therefore, the pot for a while.

*( all gesticulate putting down the pots )*

KṚṢṆA — Friend Subala ! this Lalitā with her friends is our first guest today It is, therefore, proper to honour her by offering her five betels in all sweetness

**सुबलः** — ( रत्नसम्पुटमुद्घाट्य ) ललिदे, गेण्ह पंचवीडिआओ । [ ललिते ! गृहाण पञ्चवीटिकाः । ] ( इत्यग्रतो विन्यस्यति )

**विशाखा** — सुबल, अलं तंबोलेण । ज कधिदं च्चेअ व्वदिणीओ अम्हेत्ति । [ सुबल ! अलं ताम्बूलेन यत् कथितमेव व्रतिन्यो वयमिति । ]

**ललिता** — सुबल, किं मे मुहं पेक्खसि । अवीसासिणी विसाहा मह कुप्पंदी एवं भणादि घट्टआलेहिं ठग्गवड्डिआ पउज्जिअदि त्ति प्पसिद्धी सुणोअदि । ता अलं इमाणं भुअंगलदापल्लवेण । [ सुबल ! किं मे मुखं पश्यसि ? अविश्वासिनी विशाखा मह्यं कुप्यन्ती एवं भणति । घट्टपालैः ठग्गवट्टिकाः प्रयुज्यन्ते इति प्रसिद्धिः श्रूयते । तदलमेतेषां भुजङ्गलतापल्लवेन ।]

रसास्वादो यस्य तादृशेन फणिवल्ली नागवल्ली तस्याः पर्णानि ताम्बूलदलानि तैः निर्मितानां वीटिकानां पञ्चकेन पञ्चताम्बूलदानेन सन्मानमौपयिकं समुचितम् । सखीनां पञ्चत्वात् । "अपूर्वमाधुर्येणेति" क्रियाविशेषणं वा माननव्यापारस्य भवतु ।

तथा कर्तुं सुबलः रत्नसम्पुटं मणिखचितां ताम्बूलकरण्डीमुद्घाट्य ललितामाह — **गृहाणेति** — अस्मात् ताम्बूलकरण्डात् पञ्च वीटिका उद्धृत्य गृहाण — एवं ब्रुवन्नत्नसम्पुटं ललिताया अग्रतः सम्मुखं विन्यस्यति स्थापयति ।

ईप्सितमपि प्रतिषेधन्ती विशाखाऽवहित्थया सुबलमाह **अलमिति** — ताम्बूलेन ( वारणार्थे तृतीया ) अलम् । अधुना ताम्बूलं नापेक्षितमिति भावः । तत्र हेतुमाह **यदिति** — यतः कथितमेव पूर्वमेवोक्तमस्माभिर्यद्वयं व्रतिन्यः गृहीतनियमाः स्मः इति ।

ललिता सोत्प्रासं सुबलमाह **किम्मे मुखमिति** — अहमेतास्ताम्बूलग्रहणायानुमोदयेयेति प्रतीक्षमाणः कथं त्वं मम मुखं प्रेक्षसे — कथमहमेताः ताम्बूलमादातुं कथयेयं ताः न ग्रहिष्यन्ति ; तत्र हेतुं वक्रिम्णाऽऽह **अविश्वासिनीति** — अविश्वासिनी कमप्यपायं विशङ्कमाना विशाखा अहमेताः सर्वा इहानीतवती चास्मिन् विचित्रे व्यतिकरे

---

**सुबल** — ( रत्नों से जटित डिबिया खोल कर ) अरी ललिता ! पाँच पान लेलो । ( डिबिया सामने रखता है । )

**विशाखा** — भाई सुबल ! धन्यवाद, ताम्बूल रहने दो । हम पहिले ही कह चुकी हैं कि हमें व्रत है ।

**ललिता** — सुबल ! मेरे मुँह की ओर क्या देख रहे हो ! विश्वास न करने वाली विशाखा मुझ पर गुस्सा करती यों जता रही है कि चौकी के लोग मोहनवटियाँ प्रयोग करते हैं — ऐसी अफ़वाह है । इसलिए पानपत्ते रहने दो ।

---

SUBALA : (*opening the jwelled betel-box*) please have five betels. (*lays the box before her*)

VIŚĀKHĀ : Subala ! No, thanks ; you know we are under a vow.

LALITĀ : Subala ! why do you stare at me ? Mistrustful Viśākhā, angry with me, says, "these toll-gatekeepers are notorious for using stupefying pills in the betels. So it's no use offering them their betels".

**मधुमङ्गल** — ललिदे, बिंबोट्ठीणं अलं वो तंबोलेण। ता कल्लाणी होहि। जं उव्वरिदं वीडिआपंचअ। [ललिते! बिम्बोष्ठीनाम् अलं वस्ताम्बूलेन। तत्कल्याणी भव यदुर्वरित वीटिकापञ्चकम्।]

**कृष्ण** — (ताम्बूलमुपभुज्य चर्वित दित्सन् सभ्रूविभ्रमम्) राधे! द्विज-सत्कृतमिदं ताम्बूलामृतमास्वाद्य निरातङ्का निकाममनास्वादितचरीर्गृहाण सम्पुटतस्ताम्बूलाना वीटिकाः।

---

पातितवतीति हेतो मद्य कुप्यन्ती एव भणति यदेतै घट्टपालैः चत्वररक्षिभि ठगवट्टिका वञ्चनाय सर्वस्वापहाराय प्रयुज्यमाना स्वाप-मोह कारिका ओषधिविशेषघटिता वट्टिका वटी ताम्बूलादिमिषेण प्रयुज्यन्ते इति प्रसिद्धि लोकचर्चा श्रूयते। अत एव बिम्ब्यतीनामेतेषां घट्टपालानां भुजङ्गलता नागवल्ली तस्या पल्लवेन ताम्बूलेन अलम् पर्याप्तमेव - मा तावदनुरुन्धि।

विनोदपरो मधुमङ्गलो मध्ये वक्ति **ललित इति**। भवतु मा तावद् गृह्णन्तु ताम्बूलम् — यत बिम्बफलमिवारक्तमोष्ठमधर वहन्तीनामेतासां बिम्बाधराणा ताम्बूलेनालमेवानावश्यकत्वात्। निसर्गत रक्ताधराणा ताम्बूलीरागस्यानपेक्षितत्वात्। अत्र गुणोत्कीर्त्तन नाम नाट्यालङ्कार। तत्कल्याणी स्वस्तिमती भव। यत ताम्बूलाग्रहणेन वीटिकापञ्चकमुर्वरितमवशिष्टमेव। अयमप्यास्माक लाभ एव यतो महर्घा इमा पञ्चवीटिका नो व्ययिता इति।

समुचितमवसरमवाप्य नर्मणि निबद्धभाव कृष्णो धृष्टतामवलम्ब्य साक्षाद् राधामुद्दिश्याऽऽक्षयाङ्गविलोकनेन ता सङ्केतयन् **राधे इति** — द्विजे विप्रवत्पूतै दन्तै सत्कृत परिनिष्ठितमिदं ताम्बूलामृतं सुधासदृश ताम्बूलरसमास्वाद्य मया चर्वित ताम्बूल मुखेन गृहीत्वा तद्रसमास्वाद्य निरातङ्का निर्भया भूत्वा निकाम यथेच्छ सम्पुटत

---

मधुमङ्गल — अरी ललिता! बिम्बफल जैसे अधर वाली तुम सखियों को पान की ज़रूरत भी क्या है? तुम्हारा भला हो, चलो हमारे पाँच पान ही बचे।

कृष्ण — (ताम्बूल खाकर चबाये हुए पान को देना चाहते हुए भृकुटी को नचाते हुए) राधा! द्विज जैसे पवित्र इन दातों (द्विज) से सुसंस्कृत इस ताम्बूल रूपी अमृत का आस्वादन कर पश्चात् निशङ्क होकर इस डिबिया से पान बीड़ी उठा लो जिसका स्वाद तुमने पहले कभी न चखा होगा।

---

MADHUMANGALA Lalitā, the betels are of no use to you, who have ruddy lips Blessed be you, for you have saved us five betels.

KRṢNA (*with a play of his eye-brows desiring to offer the betel chewed and relished by him*) Rādhā! take this nectar of the betels purified by the teeth (< brāhmana), and then, without any misgivings take to your heart's content these hitherto untasted betels from the box

ललिता — इमस्स कामुईलक्खोवभोएण सुट्ठु पावणस्स मुह-विसंसणस्स[1] जई उग्गारं ण गेह्णिस्सदि मे सही तदो कधं अप्पाणं पुणिस्सदि । [अस्य कामुकीलक्षोपभोगेन सुष्ठु पावनस्य मुखविसंसनस्य[1] यद्युद्गारं न ग्रहीष्यति मे सखी तदा कथमात्मानं पवित्रयिष्यति । ]

सुबलः — ललिदे ! विवरीदआरिणो अम्हे दिट्ठिआ तुम्हेहिं च्चेअ उवदिट्ठाओ ता । दाणिं दाणं च्चेअ अणुमण्णिज्जउ । [ललिते ! विपरीतकारिणो वयं दिष्ट्या युष्माभिरेवोपदिष्टाः । तदिदानीं दानमेवानुमन्यताम् । ]

पूर्वमास्वादिता आस्वादितचरी ( भूतपूर्वे चरट् ततो ङीप् ) तया न भवन्तीति अनास्वादितचरीः ( द्वितीयाबहुवचनम् ) अपूर्वरसाः ताम्बूलानां वीटिकाः गृहाण — इति स्वचर्वितं ताम्बूलं दित्सति दातुमिच्छति — ( दाधातोः सन् ) ।

निशम्यैतत्साग्रहं वचः कृष्णस्य तं ललिता सोल्लुण्ठमाह — अस्येति — द्विजसंस्कृतत्वं विपरीतलक्षणयाक्षिपति यथा – अस्य कामिनीनां लक्षस्य उपभोगेन सुष्ठु सुतरां पावनस्य पवित्रस्य कृष्णस्य मुखविसंसनस्य मुखात्पातितस्य ताम्बूलस्य ( > मुखबिम्बस्य बिम्बवन्मुखस्य ) यः उद्गारः तं न ग्रहीष्यति मे सखी राधा तदा कथमात्मानं पवित्रयिष्यति — इति ।

प्रकृतमनुसरन् सुबल आह ललित इति — विपरीतकारिणः अनुचितविधायिनः ताम्बूलदानरूपसम्मानस्य अयोग्याभ्यः वः ताम्बूलदानरूपसम्मानकारिणः वयं दिष्ट्या सौभाग्यवशात् युष्माभिरेवोपदिष्टाः प्रबोधिताः किमुचितमासीत् क्व चास्माभिः सम्भ्रान्तमिति ज्ञापिताः । ( अस्तु तत् ) — इदानीं दानमेव शुल्कनिर्यातनमेवानुमन्यतां स्वीक्रियताम् इति ।

---

ललिता — लाखों कामुकियों के उपभोग के कारण परम पवित्र इस मुखबिम्ब (>चर्वित ताम्बूल) के उद्गार को मेरी सहेली यदि ग्रहण न करे तो वह पावन कैसे होगी ?

सुबल — ललिता ! उलटा शिष्टाचार करने वाले हम लोगों को तुमने भली सीख दी है । तो अब दान ( शुल्क की अदायगी ) ही मंजूर कर लो ।

**LALITĀ :** Well, how can my friend Rādhā purify herself if she does not accept the efflux of his (Kṛṣṇa's) mouth rendered holy by his having enjoyed (the lips of) lakhs of lustful women !

**SUBALA :** Thank God. Lalitā ! we, doing something contrary to practice, have been well advised by you. Well then, better give the toll tax, please.

1. "मुहबिंबस्स (मुखबिम्बस्य )"–इति पाठभेदः ।

**चम्पकलता** — किं तुम्हे बम्हणाओ जं वो अम्हेहिं दाणं किर अणुमंदव्वं । [ किं यूय ब्राह्मणा यद्वोऽस्माभिर्दानं किलानुमन्तव्यम् । ]

**मधुमङ्गलः** — भोदि चंपअलदे । एसो कुलीणो अणुआणो ब्रह्मणो ह्मि ता उअरपूरं दिज्जउ समछंडीअं हेअंगवीणं । [ भवति चम्पकलते ! एष कुलीनोऽनूचानो ब्राह्मणोऽस्मि । तदुदरपूरं दीयतां समत्स्यण्डीकं हैयङ्गवीनम् । ]

**विशाखा** — सहि चंपअलदे ! घट्टीछलेण एदे उअरंभरिणो भिक्खंति । ता दिज्जउ एक्का कागिणी । [ सखि चम्पकलते ! घट्टीच्छलेन एते उदरम्भरिणो भिक्षन्ते । तद्दीयतामेका काकिणी । ]

---

साधिक्षेप चम्पकलता दानप्रसङ्ग प्रत्याख्यान्ती सर्वानुद्दिश्याह **किमिति** — किं यूय ब्राह्मणा सम्प्रदानार्हा यद् वः युष्मभ्य अस्माभिर्दानमनुमन्तव्यम् ।

ता प्रत्युत्तरयति मधुमङ्गल **भवतीति** — केनापि सम्बन्धविशेषेणासम्बद्धाया योषित भवतीति सम्बोधनम् शिष्टसम्मतम् — अयि चम्पकलते — अस्मि अहम् कुलीनोऽभिजात अनूचान गुरो सकाशादधीतसाङ्गवेद ब्राह्मण — "अनूचान प्रवचने साङ्गेऽधीतिर्गुरोस्तु य"—इत्यमर । तद् अत उदरं यथा पूर्येत तथा उदरपूरं (णमुल्) आनृप्ति दीयतां मह्य समत्स्यण्डीक फाणितेन गुडद्रवेण सहित हैयङ्गवीनमिति । "मत्स्यण्डी फाणितम्"— इत्यमर ।

एतेभ्य कथमप्युन्मोचनाय चम्पकलतामुद्दिश्य विशाखा सोल्लुण्ठमाह **सखीति** — घट्टीछलेन चत्वरस्य मिषेण एते उदरम्भरा उदरं भरन्ति बिभ्रति वा उदरम्भरा स्वकुक्षिपूरका लुण्ठाका इति वा भिक्षन्ते अत एभ्यो याचकेभ्य एका काकिणी विंशति-कपर्दिका दीयताम् ।

---

**चम्पकलता**—क्या तुम लोग ब्राह्मण हो सो तुम्हें दान दिया जाय ?

**मधुमङ्गल** — चम्पकलता ! यह तुम्हारे सामने कुलीन वेदपाठी ब्राह्मण उपस्थित है । अत पेटभर गुड़ माखन इसे खिलाओ ।

**विशाखा** — सखि चम्पकलता ! चौकी के बहाने ये पेटू भीख माँगते हैं तो इन्हें दे दो एक कौड़ी कोड़ियाँ ।

---

CAMPAKALATĀ What ? are you a *brāhamana* that we should agree to give away a gift ?

MADHUMANGALA Lady Campakalatā ! well, I am a *brāhamana* of a noble descent well-versed in the Vedas So let me have stomachful of fresh butter with molasses

VISĀKHĀ Dear Campakalatā ! these gluttons are begging in the name of toll-tax, give them a *Kākinī* ( = 20 cowries ).

कृष्णः — सखे परमायून ! महादानिनामस्माकं महापात्रमसि। तदद्य हैयङ्गवीनेन कुक्षिपूर्तावपि तव दरिद्रता ?

राधा — हला ललिदे ! एदे महादाणिणोत्ति अत्ताणं सलाहंति। ता फुडं परमुत्तमवण्णाणं वो सव्वुत्तमं पअत्थं दाइस्संति। [सखि ललिते! एते महादानिन इत्यात्मानं श्लाघन्ते। तत्स्फुटं वः परमोत्तमवर्णानां सर्वोत्तमं पदार्थं दास्यन्ति।]

कृष्णः — (स्मित्वा) वरवर्णिनि ! सत्यं ब्रवीषि। तदेतन्निजं महावैभवं दास्यामि।

---

नवनीतमात्रग्रहणलालसं स्वसखायमधिक्षिपति कृष्णः **सख इति** — हे परमायून उदरम्भर ! परमश्चासौ आयूनश्चेति परमायूनः — "आयूनः स्यादौदरिकः" इत्यमरः। त्वं महादानिनां परमदानशीलानां श्लेषेण महतो वस्तुनः आदानशीलानां महर्घवस्तुग्राहिणाम् अस्माकं महापात्रं मुख्यपुरुषः (दानीयो विप्रश्च) त्वमसि। तथापि हैयङ्गवीनेनैव कुक्षिपूर्तौ उदरपूरणमप्यधिकृत्य एतावती तव दरिद्रता ?

अत्रान्तरे महादानीति पदेनात्मगौरवं ख्यापयन्तं कृष्णं फूत्कर्तुं ललितामुद्दिश्य राधा प्राह **सखि ललित इति** — एते वयं महादानिनः दानशीलाः इति आत्मानं श्लाघन्ते प्रथयन्ति तत्स्फुटम् अतः स्पष्टमिदं यदेते वः युष्माकं परमोत्तमः वर्णः जातिः रूपञ्च यासां ताभ्यः सर्वोत्तमं कमपि पदार्थं दास्यन्ति। "वः परमोत्तमवर्णानाम्" इत्यत्र सम्प्रदानार्थे शेषसम्बन्धात्मकृते षष्ठीविधानम्।

कृष्णः सस्मितं राधां सम्बोधयति **वरवर्णिनीति** — वरः उत्कृष्टः वर्णः जातिः रूपञ्च यस्या अस्तीति तत्सम्बुद्धौ हे वरवर्णिनि उत्तमाङ्गि। त्वं सत्यं ब्रवीषि। तत् महादानित्वादेतत् निजं महावैभवं महाप्रसादं ते दास्यामीति आलिङ्गनमुद्रां विधाय कीदृक्

---

| | |
|---|---|
| कृष्ण — | अरे पेटू दोस्त ! हम जैसे महादानियों का तू बड़ा अधिकारी है तो भी मासन से पेट भरने में भी तुझे तंगी आ गई है। |
| राधा — | हला ललिता ! ये अपने आपको महादानी बताते हैं, निश्चय ही ये परम उत्तम वर्ण की तुम सखियों को कोई सर्वश्रेष्ठ पदार्थ देंगे। |
| कृष्ण — | (मुसकराते हुए) सुन्दरि ! सच कह रही हो। तो आओ, मैं अपना सबसे बड़ा वैभव तुम्हें प्रदान करता हूं। |

| | |
|---|---|
| KRṢṆA : | Friend, you great glutton ! you are a senior officer among us ( < worthiest recipient of gifts ) ; then too you could not fill your belly even with fresh butter — what a poverty ! |
| RĀDHĀ : | Dear Lalitā ! these people boast of themselves as great donors. Obviously, they mean to give something very valuable to you who belong to the highest class ( < are fairest in complexion ). |
| KRṢṆA : | Fair lady ! you speak the truth; here is the highest of my grandeur that I am offering to you. |

( इति आलिङ्गनमुद्रामभिनीय सुबलमालिङ्गति )

राधा — ( सरोमाञ्चमात्मगतम् संस्कृतेन । )

अपि गुरुपुरस्त्वामुत्सङ्गे निधाय विशङ्कटे
विपुलपुलकोल्लासं स्वैरी परिष्वजते हरिः ।
प्रणयति तव स्कन्धे चासौ भुजं भुजगोपमं
क्व सुबल ! पुरा सिद्धक्षेत्रे चकर्थ कियत्तपः ॥३८॥

तदालिङ्गनमिति दर्शयितुं सुबलमालिङ्गति । "वर्णाद् ब्रह्मचारिणिनि."–इति पाणिनेरनुशासनात् ब्रह्मचारिण्यर्थे प्रयुज्यमानस्य प्रत्ययस्य बलादत्र राधां प्रति कृष्णस्य सोल्लुण्ठा वक्रोक्तिः सहृदयगम्या ।

प्रेयसः परत्रालिङ्गनव्यापारं वीक्ष्य समुद्रिक्तभावा सरोमाञ्चं पुलकिता सती आत्मगतं संस्कृतेनाह राधा अपि गुरु इति — हे सुबल ! गुरुपुरः गुरूणां प्रतिष्ठितानां वृन्दादीनां पुरः समक्षमपि स्वैरी स्वच्छन्दानुचारी हरिः विशङ्कटे पृथुले स्वीये उत्सङ्गे अङ्के निधाय, विपुलं पुलकस्य उल्लासो रोमहर्षः यस्मिन्कर्मणि यथा भवेत्तथा परिष्वजते समालिङ्गति, अपि च भुजगोपमं मसृणं प्रलम्बञ्च भुजं तव स्कन्धे प्रणयति समारोपयति – महद्भाग्यमिदं, तदवासौ पुरा कस्मिन्नपि सिद्धक्षेत्रे पुण्ये तीर्थस्थले कियत्तपः त्वं चकर्थ कृतवान् इति न ज्ञायते ( परोक्षे कृधातोः मध्यमपुरुषैकवचनं लिटि रूपम् ) ।

अत्र भुजगोपममित्यार्थी लुप्तोपमा, सौभाग्यहेतुद्वयस्य पूर्वार्धे प्रदानात्समुच्चय, कियत्तपश्चकर्थेत्यत्रानुमानालङ्कारश्च । अस्यामुक्तौ रत्युपस्कारिणोऽसूयामर्षस्वेदरूपाः सञ्चारिणो भावा व्यज्यन्ते । परेण सह नायकस्य सङ्गतत्वं वीक्ष्योद्दीपनविभावश्च नायिकागतं भावं पुष्णाति ।

[ यों कहकर आलिङ्गन मुद्रा का अभिनय करता हुआ सुबल से लिपट जाता है । ]

राधा — ( पुलकित हो मन ही मन संस्कृत में ) अरे सुबल ! सब वरिष्ठ जनों के समक्ष अपने विशाल उत्सङ्ग में बिठाकर प्रभूत पुलकों के उल्लास के साथ यह मनचला कृष्ण तुमसे आलिङ्गन कर रहा है और साँप जैसे लम्बे और कोमल अपनी भुजा को तुम्हारे कन्धे से लपेट रहा है ' ओह, न जाने किस सिद्ध पुण्यक्षेत्र में तुमने कितना तप पूर्व जन्म में किया है ( जिसके फलस्वरूप ऐसा सौभाग्य तुम्हें मिला है ) ।

*( gesticulates the posture of embrace, and embraces Subala )*

RĀDHĀ *( thrilled, aside )*

38 Regardless of the presence of venerable elders this libertine Hari places you on his spacious lap and embraces you giving you an abundant thrill of joy and lays his snake-like arms on your shoulder. O Subala ! where, in which holy place and how much of penance did you perform in your former life ( to have the good luck of enjoying such a delightful embrace ) ?

( इत्थममर्षमिवाभिनयन्ती भ्रुवौ विभुज्य । प्रकाशम् )

ललिदे ! दिट्ठा पदिव्वदासु मादिसीसु विदूसअदा तुह णिउंजराअस्स ।

[ ललिते ! दृष्टा पतिव्रतासु मादृशीषु विदूषकता तव निकुञ्जराजस्य । ]

ललिता — ( सापदेशं संस्कृतेन )

तव मुकुलितां दृष्ट्वाभ्यर्णे रसाललतामितः
कथमिव मुधा धृष्टः कूटं भजन्नभिधावसि ।

नायिकामेव हृदि निधाय कृतकतया सुबलमालिङ्गितो हरेः पुलकाविर्भावात्सात्त्विकभावोन्मेषः । पुल-पुल-भुज-भुजेत्यत्र वृत्त्यनुप्रासः शब्दालङ्कारः । पुरा चकर्थेत्यत्र "यावत्पुरानिपातयोर्लट्"-इत्यनुशासनात्प्राप्तेऽपि लटि, परोक्षत्वविवक्षाविशेषवशाद्वैकल्पिकस्य लिटः साधुत्वम् । अत्र प्रसादो गुणः, वैदर्भी च रीतिः । हरिणी वृत्तम् ॥३८॥

इति मनसि कृत्वा हरेरनौचित्यवशादमर्षं नाटयन्ती, भ्रुवौ विभुज्य त्रोटयित्वा "क्वानीतवती त्वमस्मान्, तव सखाऽसौ कीदृशोऽविमृश्यकारीति" ललितामधिक्षेप्तुं राधा प्रकाशं सर्वश्राव्यतयाऽऽह ललितेति — अहो ललिते ! पतिव्रतासु पतिपरायणासु मादृशीषु महिलासु तव ते सख्युः निकुञ्जराजस्य विदूषकता "विदूषको नर्मसचिवः" अनौचित्यावधि मदनकेलिपरायणता दृष्टा प्रत्यक्षीकृता त्वया" त्वमस्मान् ईदृशस्य विदूषकस्य सन्निधौ हठादनैषीरित्युपालम्भः । विशेषेण दूषकताऽसद्व्यवहारशीलतेति अर्थाविबोधकत्वादत्र श्लेषालङ्कारः । पूर्वं कृष्णेन ब्रह्मचारिणीत्यर्थविगमकं यद्राधासम्बोधनं "वरवर्णिनीति" सोत्प्रासं रचितं तदुद्दिश्यात्र "पतिव्रतासु" मादृशीविशेषणम् ; तथा चाधिक्षेपस्योचितत्वप्रदर्शनाय निकुञ्जराजस्य विशेष्यस्य च साभिप्रायत्वात्क्रमेण परिकर-परिकराङ्कुरावर्थालङ्कारौ । तवेति पदे पठितौ बलप्रदानात्काकुद्वारा पठितिगतवक्रतया उपालम्भस्य दार्ढ्यं गम्यतेऽमर्षस्य तीव्रता च ।

स्वीकृत्य राधायाः स्थाने उपालम्भमेतस्मादसाम्प्रतव्यवहारादात्मानं निवारयितुं दिशन्ती सापदेशमन्योक्तिद्वारा कृष्णमुद्बोधयति ललिता तवेति — इतः अस्मात्स्थानात्तव अभ्यर्णे समीपं मुकुलितां कोरकितां नवविकासोन्मुखीं रसाललतामाम्रलतामिव तन्वीं

---

[ यों असूया भरे क्रोध से अपनी भृकुटी तानती हुई ज़ोर से ] ललिता ! देखा तूने । हम जैसी पतिव्रताओं के समक्ष तुम्हारे निकुञ्जराज की विदूषकता ।

ललिता — ( अन्योक्ति के रूप में संस्कृत के माध्यम से ) अरे कोकिल ! तुम्हारे निकट आम्रलता को मुकुलित देखकर बड़ी धृष्टता के साथ तू स्वयं ही विविध कूट चालों से इसके आसपास मँडरा रहा है । यह मुस्कानी सौरभ-

---

*( pretending to be indignant and twisting her eye-brows, aloud )* Lalitā ! look, what a lecherous behaviour of your king of bowers towards chaste persons like me !

LALITĀ : *( as though addressing some one else, but in fact addressing Kṛṣṇa )*

39. O Kōel ! having seen a mango tree blossoming in your vicinity, how, indeed, do you, a profligate, run

परिमलवती स्निग्धा चासौ द्विरेफपतिं श्रिता
परिहर कुहूकण्ठोत्कण्ठामियं सुलभा न ते ॥२९॥

---

दृष्ट्वा कथमिव केन मनोरथेन हेतुना धृष्ट साहसी कूटं भजन् कपटमाचरन् मुधा व्यर्थमेव अभिधावसि साम्प्रति प्रवणो भवसि। व्यर्थत्व प्रयासस्य साधयति — च पुन असौ परिमलवती सौरभयुता स्निग्धा श्लक्ष्णा मसृणा चाऽऽम्रलता द्विरेफपतिं भ्रमरवरमाश्रिता श्लिष्यन्ती वर्त्तते अतस्त्वदर्थं नास्त्यवकाशः अत हे कुहू मधुरा वाक् कण्ठे यस्य स तत्सम्बुद्धौ हे कुहूकण्ठ पुंस्कोकिल! त्व तद्विषयिणीम् उत्कण्ठामभिलाष परिहर यत इय ते सुलभा सुखलभ्या नास्ति।

अत्र कुहूकण्ठति सम्बोधनात्कृष्णे पुंस्कोकिलत्वारोप, तदपदेशेनान *ललिताकृत कृष्णम्प्रति उद्बोधनम्। अत अत्र अप्रस्तुतप्रशंसालङ्कार। अत्र विपरीतलक्षणया तथा च* 'सुलभा न' इत्यत्र नकारे काकुस्वरेणोच्चार्यमाणे भिन्नार्थावबोधो भवति तथा — इदानीमिय लता तवाभ्यर्णे एव विकासोन्मुखी भाति, त्व धृष्ट आधर्षणकुशल साहसी वर्त्तसे अत मुधा कूट भजन् व्यर्थमेव शुल्कादानप्रपञ्चं रचयन् कथमिव अभिधावसि समन्तात् तत्पृष्ठे भ्राम्यसि — सा तु सर्वथा त्वदनुरूपा परिमलवती पद्मिनीत्वात्सौगन्ध्य युता परिपक्वा स्निग्धा त्वयि बद्धभावा, दैववशात् द्विरेफ पतित्वात् आश्रिता, त्व तावत् कुहूकण्ठो मधुरवागसि, वाङ्मात्रेणैव वशयितु शक्त अतस्त्वदीयां कलां वाच निशम्यैव त्वद्वशवदा भवितुमर्हति अत इय ते सुलभा न अपि तु सुलभा एव, एव सति तद्विषयिणीं "केनोपायेन तामह लभेय"—इत्युत्कण्ठा त्यज। राधिकापक्षे कुहूकण्ठस्य तव मुरलीरवश्रवण-मात्रेणैवाभ्रवेय नवतरुणी त्वयि स्निग्धा, केवल पतिरूपेण द्विरेफ कलहीमरतिक बर्वरं श्रिता, न तु काम्यतया, त्वमेव तस्या कान्त। अतो मा साहसमाचर, मा कपट कृथा, आश्वस्तो भवेति सान्त्वयति।

"द्विरेफो बर्बरेऽपि" — इत्यमरवचनादत्र द्विरेफपदे श्लेष। उभयार्थे पूर्वार्धवस्तुन तृतीयचरणार्थस्य हेतुत्वात् उत्कण्ठापरित्यागाय 'इय सुलभा न ते' - इति वाक्यार्थस्य पुनर्हेतुत्वादत्र काव्यलिङ्गमलङ्कार। परिमलवतीत्वेन लतायां परिपक्वता भोगयोग्यता, नायिकापक्षे च पद्मिनीयमुत्तमप्रकृतिरिति वस्तु व्यज्यते। रसालस्याम्रस्य लतारूपत्व नैव भवति विशालानोकहरूपत्वात् तथापि पादपस्य लतारूपेणो-द्भावन स्त्रीत्व-नवीत्व साधनाय कविकल्पितत्व नियतिनियमराहित्यमेवाश्रयणीय यथा कालिदासोऽपि "शमीलतां च्छेत्तुमृषिर्व्यवस्यतीलन" शाकुन्तले शमीतरु लतारूपेणाऽऽह।

---

स्निग्धा लता किसी भ्रमर को आश्रय देकर बैठी है - अत अपनी लालसा को छोड़, कारण, यह तेरे लिए सुलभ नहीं है ॥२९॥

---

towards it in vain under an illusion! Give up your yearning for that, for, that, being fragrant and smooth (lovely), has already a drone settled upon it, and is not, therefore, easily accessible for you.

विशाखा — ( संस्कृतेन )

ऋजुवृत्तिः किल कुटिले वैगुण्यायैव कल्पते त्वरितम् ।
इति दर्शयन् धनुःस्थो गुणच्युतिं स्फुटमिपुर्याति ॥४०॥

कविकल्पनाया निरवधिकत्वेऽपि निसर्गविरुद्धत्वात्प्रवृत्तिविरुद्धत्वं दोषोऽनपनेय एव । अत्र कुहूकण्ठेति पदस्य साभिप्रायत्वात्परिकरालङ्कारः । सर्वत्र सानुप्रासो बन्धः, प्रसादमाधुर्ये गुणौ, उपनागरिका वृत्तिः, वैदर्भी रीतिः, हरिणी च वृत्तम् ॥३९॥

इयं बाला ऋजुवृत्तिरतोऽस्यां कुटिलतां मा भज, इति कूटाचरणस्य वैयर्थ्यं ललिताप्रतिपादितं समर्थयन्ती कृष्णमुद्दिश्य विशाखा निदर्शनमुखेन दृढीकृतं सामान्यं वस्तूपन्यस्यति **ऋजुवृत्तिरिति** – ऋज्वी वृत्तिः व्यवहारो यस्य सः सरलप्रकृतिको जनः कुटिले वक्रस्वभावे जने ( विषयसप्तमी ) त्वरितं किल शीघ्रमेव वैगुण्याय विगता गुणा यस्मात्स विगुणः तस्य भावः वैगुण्यं गुणहीनत्वं तस्मै वैगुण्याय कल्पते वैगुण्यमापादयति । वैगुण्यायेत्यत्र "क्लृपि सम्पद्यमाने" इत्यनुशासनाच्चतुर्थी । इमं निसर्गनियमं दर्शयन् इव इपुः सरलो बाणः धनुःस्थः धनुषि आरोपितः सन् स्फुटं झटित्येव गुणात् मौर्वीतः च्युतिं स्खलनं याति । कुटिलेन धनुषा सक्तः ऋजुबाणः गुणवियोगमाप्नोतीति सरलार्थः ।

अत्र गुणपदे श्लेषः, दर्शयन्निवेत्यर्थविबोधात् क्रियोत्प्रेक्षालङ्कारः । अपि च पूर्वस्मिन् पद्ये प्रतिपादितस्य "कूटं भजन् सरलया प्रेयस्या सङ्गमं धृष्टतया साधयन्नपि चिराय न स्यात्" इति, परञ्च द्विरेफेण बर्बरेण कुटिलेन सङ्गतेयं चिरयोगं तेन सह नैव धास्री – अतः कुहूकण्ठं त्वामनुगता द्रागेव भविष्यतीति" वस्तुद्वयस्य विशेषस्य समर्थनाय ऋजुवृत्तिः किलेति सामान्यं वचः समर्थनायोपात्तम् । सामान्येन विशेषस्य समर्थ्यमानत्वात् अर्थान्तरन्यासालङ्कारः, पुनश्च समर्थकवाक्यस्यापि पुष्टये धनुःस्थस्येषोः स्थितिरुदाहृता, अतः पोष्यपोषकभावमापन्नयोः वस्तुनोरुपन्यासादत्र विकस्वरालङ्कारः कुवलयानन्दे । "सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणमिति" लक्षणात् रसगङ्गाधरमतेनायमुदाहरणालङ्कार इति व्यपदिष्टः । अत्र प्रसादो गुणः, वैदर्भी रीतिः । छन्दश्च आर्या जातिः ॥४०॥

---

विशाखा — (संस्कृत में) सरल प्रकृति का कुटिल के साथ संयोग होने पर गुणच्युति होकर रहती है – मानों इसी अर्थ को स्पष्ट रूप से बताने के लिए ही सरल बाण कुटिल धनुष के साथ संयुक्त होते ही गुण (प्रत्यञ्चा) से च्युत हो जाता है ॥ ४० ॥

---

VIŚĀKHĀ : ( *In Sanskrit* )

40. The straightforward in the company of the crooked soon loses his quality (*guṇa*); to illustrate this, as it were, the (straight) arrow associated with the (crooked) bow soon flies off the string (*guṇa*) and gets rid of it.

चित्रा — हन्त घट्टज्झण, घट्टाहिआरो जइ तुम्हाणं अहिट्ठो तदो बहुजणसघट्टे जमुनाघट्टे ज्जेअ चत्तर जुत्त। [हन्त घट्टाध्यक्ष ! घट्टाधिकारो यदि युष्माकमभीष्टस्तदा बहुजनसघट्टे यमुनाघट्ट एव चत्वर युक्तम्।]

चम्पकलता — अइ विसुद्धचित्ते सहि चित्ते ! एदे सुलुक्कलक्खेण लुंठिदु ज्जेव एत्थ दुग्गवणे चिट्ठन्ति। ता विरमेहि। [अयि विशुद्धचित्ते सखि चित्रे ! एते शुल्कलक्षेण लुण्ठितुमेवात्र दुर्गवने तिष्ठन्ति, तद्विरम।]

---

प्राप्तावसरा चित्रा अभिलषितसाधनाय च तावद्घट्टस्थापनमौपयिक भवेदित्युपदिशन्ती आह हन्तेति — हन्त भो घट्टाध्यक्ष ! घट्टाधिकार शुल्कादान यदि युष्माकमभीष्टोऽभिप्रेतस्तदा बहुजनसङ्घट्टे यत्र बहवो जना समायान्ति तादृशे जनसङ्कुले यमुनाघट्टे यमुनातटे एव चत्वरं शुल्कादानस्थानक युक्तम् न तु अस्मिन् विरलजनसम्पात वनान्तदेशे — इत्यर्थ। अनेन कालिन्दीपुलिनेषु रम्येषु त्वदभिप्रेतपूर्त्ति सुलभेति व्यञ्जयन्ती चित्रा सङ्केतस्थली निर्दर्शयतात्स्याकूतम् बोद्धव्यम्।

चित्रां सम्बोधयन्तीव चम्पकलता सोपहास चत्वरस्य वनमध्ये स्थापने उपपत्ति प्रदर्शयति अयीति — अयि विशुद्धचित्ते सरलप्रकृतिके सखि चित्रे ! एते शुल्कलक्षेण शुल्कादानस्य व्याजेन लुण्ठितुमेव जनान् अत्र दुर्गवन विषमे वनभागे तिष्ठन्ति। बहुजनसङ्कुले स्थाने बहुजनाद्भयेन शुल्कावाप्ति सामान्या, इह तु विकटे वने लुण्ठनायावसरो लभ्यते अत एते वस्तुता लुण्ठाका अत्र वर्तन्त। अत एव सत्परामर्शाद् विरम त्वम् — भिन्नमेवैतेषां लक्ष्यमिति भाव।

---

चित्रा — चौकी के अध्यक्ष महोदय ! चौकी के अधिकार से चुगी वसूली में ही यदि आप लोगों को दिलचस्पी है तो तुम्हें जनता के भीड़ से सटे हुए यमुनाजी के घाट पर ही अपनी चौकी जमानी चाहिए।

चम्पकलता — अरी भोली चित्रा ! ये लोग चुंगी के बहाने लोगों को लूटने के लिए ही यहाँ घोर जंगल में जमे हुए हैं। रहने दो इन सब बातो को।

CITRĀ O ! chief of the toll gate, if you are so particular of your charge of collecting toll tax, then better have your booth set up on the bank of the Yamunā, where many people meet

CAMPAKALATĀ Oh, my simple Citrā ! these fellows have posted themselves in this dense forest to loot people under the pretext of collecting toll So, better refrain yourself ( from advising them )

कृष्णः — सखे सुबल ! मित्रायितं चित्रया तदद्य गोष्ठस्य गोपुरे घट्टचत्वरमुपस्क्रियताम् । यदत्र वनमध्ये पलायन्ते परितश्चपलायतलोचनाः ।

सुबलः — पिअवअस्स ! सच्चं भणसि । पेक्ख, सहीणं सहस्सं राहिअं अणुसप्पदि । एण्हि क्खु चउट्ठअ ज्जेव । [ प्रिय वयस्य ! सत्यं भणसि । पश्य सखीनां सहस्रं राधिकामनुसर्पति । इदानीं खलु चतुष्टयमेव । ]

राधा — ( स्वगतम् ) पहादे च्चे अ कुंदलदाए सद्धं जण्णे पेसिदं मए सहीउलं । [ प्रभात एव कुन्दलतया सार्धं यज्ञे प्रेषितं मया सखीकुलम् । ]

---

चम्पकलतोक्तमुपेक्ष्य, चित्रायाः सङ्केतितमर्थमनुसन्धाय कृष्णः चित्रायाः परामर्शमुदारं मन्वान इव सुबलमाह **सख इति** — चित्रया मित्रायितं मित्रवदाचरितम् हितोपदेशेन । मित्रायितमित्यत्र मित्रशब्दात् आचारार्थे क्यङ् तेन ह्यत्र क्यङ्गता लुप्तोपमा । मित्रस्योपदेशो नूनमनुसर्त्तव्यः — "हिताञ्च यः संशृणुते स किम्प्रभुः" इति नीतिवचनाद् अद्य गोष्ठस्य गोशालायाः पुरस्ताद्वर्त्तमाने गोपुर एव घट्टचत्वरमुपस्क्रियतामारच्यताम् । तत्रोपपत्तिमाह यदत्र वनमध्ये चपले आयते दीर्घे च लोचने यासां ताश्चपलायतलोचना गोपाङ्गनाः परितः इतस्ततः पलायन्ते,घट्टमपमार्य निर्व्रजन्तीत्यर्थः ।

समर्थयन् कृष्णोक्तिं सुबल आह **प्रियवयस्येति** — सत्यं भणसि वदसि । तत्र हेतुमुपपादयति — पश्य ( सर्वदा ) सखीनां सहस्रं भूयस्यः सख्यः राधिकामनुसर्पति सह चरतीत्यर्थः, अद्य तावत् केवलं चतुष्टयमेव, चतस्र एवं सहचर्यः सन्ति ।

कुतोऽद्य विरलः सखीजनः तद्धेतुं प्रेक्षकवर्गस्य बोधाय राधा स्वगतमाह **प्रभात इति** — प्रभाते सूर्योदयवेलायामेव कुन्दलतया सार्द्धं कुन्दलतानाम्नीं सखीं पुरस्कृत्य मया

---

कृष्ण — मित्र सुबल ! चित्रा ने तो मित्र जैसी बात कही है, तो आज गोशाला के सम्मुख आँगन में ही अपनी चौकी जमाओ। यहाँ तो जंगल में सुदीर्घ चपल नयनवाली सुन्दरियाँ इधर उधर भाग जाती हैं।

सुबल — प्रिय मित्र ! सच कहते हो ! देखो न, राधा के साथ एक हज़ार सहेलियाँ चलती हैं । आज तो केवल चार ही हैं ।

राधा — [ मन ही मन ] बड़े सबेरे ही मैंने अपनी सहेलियों को आज कुन्दलता के साथ यज्ञशाला भेज दिया था ।

KRṢNA : Dear Subala ! Citrā has done us a good turn. So set up the toll-station at the maingate in front of the cowstall inasmuch as these belles with broad and unsteady eyes bolt this way and that in the forest.

SUBALA : Friend ! correct; see thousands of friends follow Rādhā, but now, they are only four here.

RĀDHĀ : (*to herself*) In the morning itself, the whole company of my friends was sent by me along with Kundalatā to the place of sacrifice.

मधुमङ्गल — सुबल ! णिच्चिदं आअदाओ विद्धि सहीओ । णहि वसंतलच्छीए ओदारे संवुत्ते कलकंठीणं अणुवलंभो संभाविज्जइ । [ सुबल ! *निश्चितमागता विद्धि सखी । नहि वसन्तलक्ष्म्या अवतारे संवृत्ते कलकण्ठीनामनुपलम्भ सम्भाव्यते ।* ]

विसाखा — ( सस्मितम् ) तदो ताणं सहींणं चलणलच्छीहिं तुम्हाण घट्टो असोअत्तणं लद्धूण उप्फुल्लिम्मदि । [ततस्तासां सखीनां चरण (चलन) लक्ष्मीभि युष्माकं घट्टोऽशोकत्वं लब्ध्वा उत्फुल्लिष्यति ।]

---

सखीनां कुल समूहः यत्रे प्रेषितम् — येन समये नवनीतायात्रया यत्समये मा भवत्प्रतीत, तेन च पथि मयि क्वचिदवरुद्धायामपि न काचिरक्षतिरिति तत्र प्रसक्ते माधवकेलिप्रसङ्गे आत्मन आश्वस्तत्वं द्योत्यते ।

अस्या सत्योऽपि राधावियोगमसहमाना अचिरेणैव तत्पार्श्ववर्ति य स्युरित्यनुमाय मधुमङ्गल. समाश्वासयति सुवलेति — निश्चितम् आगता सपदि आगमिष्यमाणा इव सखी विद्धि जानीहि ( *विद्धातो लोटि मध्यमपुरुषैकवचनान्त रूपम्* )। *तत्रानुमाने* हेतु निदर्शनमुखेनोपस्थापयति नहीति — *वसन्तस्य लक्ष्म्या अवतारे प्रादुर्भावे सवृत्त* सञ्जाते सति कलकण्ठीना कोकिलानामनुपलम्भ अप्राप्तिरनुपस्थिति न सम्भाव्यते = वसन्त प्रवर्त्तते कोकिलाश्च न दृश्येरन्निति निसर्गविरोधादसम्भावित यथा, तथैव राधाया इहोपस्थितौ तत्सहचर्या नात्र भवेयुरित्यपि पारेसम्भावनम् — ता नून शीघ्रमेवोपयास्यन्तीति विश्वास । अत्र *वसन्तशोभास्थानीया* राधा, मधुरालापिन्यस्तत्सहचर्य इतिसाधर्म्या नुबन्धी दृष्टान्तालङ्कारो वाच्य, प्रतीयमाना चातिशयोक्ति उपमानेनोपमेयस्य निगीर्याध्यवसानात् ।

नर्मशीला विशाखा सस्मितमाह तत इति — *यथा त्व मन्यसे तथा सति* सहचरीसङ्गमेऽत्र तासां चलनलक्ष्मीभि सञ्चरणशोभया पादविन्यासमहिम्ना युष्माकं घट्ट

---

मधुमङ्गल — सुबल, शेष सखियों को भी यहाँ निश्चित आई ही समझो, कारण, वसन्त की शोभा के फैलने पर कोकिलाओ का आगमन सदा सम्भावित है ।

विशाखा — [ मधुर मुसकान के साथ ] तब तो उन सखियो की चरण शोभा से तुम्हारी यह चौकी अशोक वृक्ष की भाँति खिल उठेगी ।

MADHUMANGALA Subala ! rest assured all her friends will follow for, when the glorious spring sets in, the absence of the sweet-throated *kōels* is impossible

VISĀKHĀ ( *smiling* ) Well then, with the rich foot-strokes of her friends your Toll station will assume the character of an Asoka tree and blossom luxuriantly

कृष्णः — ( सव्यतो विलोक्य । सानन्दम् ) कथं काञ्चनमरीचिरोचिषां सहचरीणां सध्रयेन ब्रह्मकुण्डस्य पुरोभूमिरलंक्रियते ?

ललिता — ( स्मित्वा ) "जगद्धनमयं लुब्धाः कामुकाः कामिनीमयम्" त्ति पोराणवअणस्स अत्थो पचक्खीकिदो। [ "जगद्धनमयं लुब्धाः कामुकाः कामिनीमय"मिति पौराणवचनस्यार्थः प्रत्यक्षीकृतः । ]

---

चत्वरस्थानमिदमशोकत्वं अशोकपादपत्वं शोकराहित्यञ्च लब्ध्वा उत्फुल्लिष्यति विकसिष्यतीति भावः । " पादाघातादशोकः " इति कविसमये रमणीनां चरणसंयोगोऽशोकस्योत्फुल्लतापादक इति नियममनुरुद्ध्य सहचरीणां घट्टपरिसरे चलनमात्रेण घट्टोऽयमशोकतां व्रजन्नुत्फुल्लो भवेदिति तात्पर्यम् । अत्र चलनाशोकपदयोः श्लेषः तद्गर्भितः सम्भावनगतचमत्कृतेरुत्प्रेक्षालङ्कारो गम्यः । अत्रोक्तिवैचित्र्याद्वक्रोक्तिः, घट्टद्वाराऽशोकधर्मापादानात्तद्गुणालङ्कारश्च । आत्ममहिमाख्यानाद्गर्वोक्तिः । यूयमपि तदा धन्या भवेतेति वस्तुध्वनिः ।

अमुष्मिन्नर्मप्रसङ्गे प्रवर्तमाने सव्यतो वामभागे विलोक्य सहर्षमाह कृष्णः **कथमिति** — विस्मये । काञ्चनमरीचिरोचिषां सुवर्णरश्मिद्युतीनां सहचरीणां राधावयस्यानां सध्रयेन समूहेन ब्रह्मकुण्डस्य पुरोभूमिः पुरस्ताद्वर्तमाना स्थली अलंक्रियते इत्यायान्तीः सखीः विभावयति ।

प्रतिक्षणं तासामनुध्यानं विदधतः कृष्णस्योपहासं कुर्वती ललिता स्मितपूर्वं बभाषे **जगदिति** — "लुब्धाः लोभोपहता जनाः सर्वं जगत् धनमयं, कामुका लम्पटाः कामिनीमयं " पश्यन्ति इति पुराणे कथितं पौराणं वचनं तस्य अर्थः प्रत्यक्षीकृतः यथार्थेत्य-

---

कृष्ण — [ बाँई ओर झाँकते हुए प्रसन्नतापूर्वक ] किस तरह ब्रह्मकुण्ड के सामने का आँगन सुवर्ण की सी आभा से देदीप्यमान सहेलियों के समुदाय से सुशोभित हो रहा है !

ललिता — [ मुस्कराती हुई ] "लोभी को सारा जगत् धनमय और कामुक को कामिनीमय ही दीख पड़ता है" — यह पौराणिक उक्ति यहाँ सटीक बैठ रही है ।

---

KṚṢṆA : *( looking towards left, with joy )* How beautifully the platform in front of the Brahma-kuṇḍa is being embellished with the gathering of her companions shining with brightness of golden rays !

LALITĀ : *( smiling )* The import of the Paurāṇika statement, "the greedy see the world full of money, and the infatuated see it filled with lustful women" is well demonstrated.

मधुमङ्गल — भो वअस्स ! असच्चं ण हसिज्जसि[१] । जं कमलकिंजक्क-रेणुपिंजरिदाओ हंसीओ तुए सहीओ किज्जंति । [ भो वयस्य ! असत्य न हस्यसे[१] । यत्कमलकिञ्जल्करेणुपिञ्जरिता हंस्यस्त्वया सख्य क्रियन्ते । ]

कृष्णः — ( सस्मितम् ) वयस्य किमस्माकमनागतचिन्तया । सम्प्रति घट्टशुल्कस्य पुण्याहः प्रवर्तताम् ।

---

तुभूतम् — यत्र व सर्वत्र कामिनी एव पश्यसि । "जगद्वनमयमिति" भागवतोक्ति यस्यापरार्धस्तावत् "नारायणमय धीरा पश्यन्ति परमार्थिन" इति पठ्यते । अत्र मर्मापघातित्वात्प्रत्यक्षवचस वज्र नामाङ्गमुपन्यस्तम्भवति "वज्र प्रत्यक्षनिष्ठुरम्" इति लक्षणात् । कामिन्याकाराकारिता क्लिामिकाना चेतोवृत्तिरिति सामान्येन विशेषोक्तिरूपात्र वक्रोक्ति ।

नाथ ललिताकृतो मिथ्योपहास यत सम्भाव्यत एव तादृश सौभाग्यमिति मत्वा कृष्णमुद्दिश्य प्राह मधुमङ्गल **भो वयस्येति** — सखे कृष्ण ! असत्य न हस्यसे ललितयेति शेष, अपि तु कमलकिञ्जल्कानां रेणुमि (>रेणूनां पुञ्जेन राशिना) पिञ्जरिता पीतिमान भजन्त्य हंस्य एव कामिन्यः त्वया सख्य क्रियन्ते । हंसगामिन्य अचिरेण त्वया सह सखिभाव व्रजिष्यन्ति – इत्याकूतम् । अत्र भ्रान्तिमानालङ्कार । क्रियन्ते इति वर्तमानसामीप्ये भविष्यदर्थे लट् – 'वर्तमानसामीप्ये वर्तमानवद्वा' इत्यनुशासनात् ।

कृष्ण स्वीयमौत्सुक्य गूहमान उपेक्षाभाव प्रदर्शयन्निव चेतोऽन्यतो व्याक्षेप्तु प्रकृतमनुसर्तुं च मधुमङ्गल दिशति सस्मितं **वयस्येति** — हे सखे ! अनागतस्य क्षणेऽस्मिन्नविद्यमानस्य सम्भाव्यमानमात्रस्य चिन्तयाऽनुध्यानेन अस्माक किं प्रयोजनम् कोऽर्थ, काकुना न कोऽपीत्यर्थो गम्यते । (ततो व्याकुल) सम्प्रति (प्रसक्त)

---

मधुमङ्गल — प्रिय मित्र ! ललिता यो ही नहीं हँस रही है । कारण, कमल के पराग से पीत बनी हुई हंसियों को ही तो तुम सहेलियाँ बता रहे हो ।

कृष्ण — प्रिय मित्र ! आनेवाली सजनियों से हमें क्या । इस समय तो चुंगी वसूली के ही शुभ कार्य का प्रारम्भ होने दे ।

MADHUMANGALA Friend ! it is not for nothing that Lalitā is smiling at you, for, you are mistaking the geese, yellow with the pollen of the lotus filaments for Rādhā's friends

KRSNA (*smiling*) Friend ! why bother about those that have not yet arrived ! Let this lucky day commence with collecting toll tax

---

१ "ललिदाए (ललिन्या) इति क्वचिदधिक पाठ ।

राधा—( भ्रुवं विक्षिप्य ) तिल्लोके को क्खु सो महासाहसिआणं सिहामणी चिट्ठदि जो क्खु गोउलवालिआणं दाणं गेण्हिदुं वाआमेत्तेण वि वाहरिस्सदि। तत्थवि सूरोवासिआणं इमाणं। [ त्रैलोक्ये कः खलु स महासाहसिकानां शिखामणिस्तिष्ठति यः खलु गोकुलबालिकानां दानं गृहीतुं वाङ्मात्रेणापि व्याहरिष्यति। तत्रापि सूर्योपासिकानामासाम्। ]

कृष्णः—( स्मितं कृत्वा ) लक्ष्मीमुखि ! दाक्षिण्यमतः शिक्षयामि। निरवद्य-

---

घट्टशुल्कस्य आदानस्य पुण्यमहः दिनं प्रवर्त्तताम्। पुण्यमह इति पुण्याहः—'राजाहःसखिभ्यष्टच्'—इति समासान्तः टच् प्रत्ययः। वयं शुल्कादायिनः तावत्तवाऽस्माकं प्रयोजनं किं तदन्यया वार्त्तयेति इष्टेऽप्यर्थे तात्पर्यगतिपेधादनावहित्थं नाम नाट्यलक्षणम्।

शुल्कदानं प्रस्तुवते कृष्णाय कुप्यन्तीव राधा भ्रुवं विक्षिप्य सगर्वमाह **त्रैलोक्य इति**—त्रयाणां लोकानां समाहारस्त्रैलोक्यं तत्र स्वर्भूपातालेषु त्रिषु लोकेषु कः खलु महासाहसिकानामुग्रकर्मणां शिखामणिरग्रगण्यः तिष्ठति यः खलु निश्चयेन गोकुले वसन्तीनां बालिकानां तत्कृतानां दानं गृहीतुं ताभ्यः शुल्कमादातुं वाङ्मात्रेण केवलं वाचापि व्याहरिष्यति कथयिष्यति—वस्तुतो ग्रहणन्तु दूर आस्ताम्, वाचिकमपि तादृशं गर्ह्यमेवासम्भाव्यञ्च, तत्रापि तासु गोकुलबालिकास्वपि सूर्योपासिकानामासाम् तु नितान्तमशक्यमेव। आसामित्यत्र गर्हणीयत्वार्थद्योतनाय पञ्चम्यर्थे षष्ठीप्रयोगः।

एवं सगर्वं व्याहरन्तीं राधां साम्ना सान्त्वयन् कृष्णः सस्मितमाह—**लक्ष्मीमुखीति**—लक्ष्मीः शोभा मुखे यस्यास्तादृशि हे भद्रवदने, त्वां दाक्षिण्यं साम्ना व्यवहारे परच्छन्दानुवर्त्तित्वं शिक्षयामि उपदिशामि कस्मै कस्मिन् विषये वा विनयेन व्यवहर्त्तव्यमिति। निरवद्यं निरपायमुद्योतमाने ज्वलत्प्रतापे तस्मिन् पूर्वमुद्दिष्टे

---

राधा — [ भृकुटी चढ़ाती हुई ] तीनों लोक में ऐसा कौन बड़ा साहसियों का मुखिया है जो वचनमात्र से भी गोकुल की बालिकाओं से चुंगी वसूली की बात कर सकता है — और उनमें भी फिर सूर्योपासिकाओं से।

कृष्ण — [ मुसकराते हुए ] अरी सुवदना ! मैं तुम्हें शिष्टता सिखाता हूं। इस

---

RĀDHĀ : (*frowning*) Which chief of the daring folk exists in all the three worlds who dares command even verbally for collecting toll-tax from the young women of Gokula, especially from those who are Sun-worshippers ?

KṚṢṆA : (*smiling*) Ah, graceful one ! let me advise you manners. When the Lord of groves is reigning supreme it is

मुद्योतमाने तस्मिन्नुद्यानचक्रवर्तिनि साम्प्रतमसाम्प्रतमीदृशं मृगीदृशां गिरामौर्जित्यम् ।

राधा — सहि ललिदे ! धिट्ठघट्टीआलघट्टणे पडितासि । ता ण जुत्तं एत्थ कुठत्तणम् । [सखि ललिते ! धृष्टघट्टीपालघट्टने पतितासि । तत्र युक्तमत्र कुण्ठत्वम् । ]

कृष्ण — सखे सुबल, श्रुतमस्याः कठोरारभटीगरिष्ठं गिरां स्फूर्जितम् । (इत्यर्द्धनिम्सृतां रसनां सन्दश्य) कष्टं भोः कष्टम् । दीव्यदर्वाचीनयौवनगर्व

---

उद्यानचक्रवर्त्तिनि अस्य वनोद्देशस्याधिपे तद्विषये साम्प्रतमधुना ईदृश मृगीदृशामबलानां गिरामौर्जित्यम् उद्धतत्वमसाम्प्रतमसमीचीनमेव ।

अत्र स्थाने खलु प्रसन्नो बन्ध सानुप्रास । साम्प्रतेति वर्णसहते पृथगर्थत्वेन पुनरावृत्तेश्च यमकालङ्कार । माधुर्यं गुण , कोमला वृत्ति , लाटी रीति ।

ललितामुद्दिश्य सरोषमिवाह राधा **धृष्टघट्टेति** — धृष्टस्य उद्दण्डस्य घट्टीपालस्य चत्वराध्यक्षस्य घट्टने कुटिले प्रपञ्चे पतिता त्वमस्मान् सहानीय आगताऽकस्मादसि, शठम्प्रति शाठ्यमेवोचितमिति नीत्या अनास्मिन् जने प्रसङ्गे वा कुण्ठत्व दौर्बल्य न युक्तमुचितमित्यर्थ । पुनरपि धृष्टतया सुबलमाह कृष्ण **श्रुतमिति** — अस्या गोपिकाया कठोरे परुषम् आरभट्या उग्रतया गरिष्ठ गौरवपूर्णमवाच्य वा गिरा वाचा स्फूर्जितम् निर्घोष — "स्फूर्जा वज्रनिर्घोषे" — इति कोश । लक्ष्मीमुख्या मुखादसहश वज्रसम्पातसम दारुण वचो निशम्य तद्धर्षणाय तत्सदृशीं वाचमुदीरयितु सन्नद्धोऽपि प्रेयसीं प्रति तादृग्वचसोऽसमीचीनत्व विज्ञाय अर्द्धनि सृतां वक्तुमुद्यता रसना जिह्वा सन्दश्य दन्तै रुद्ध्वा प्राप्तस्य प्रसङ्गस्यासामञ्जस्यवशाद् खमनुभवन्नाह कृष्ण **कष्टमिति** – भो कष्टम् महत्स्खलमापतितमिति । प्रेयस्या कठोरमपि वचोऽनुकूलमेवेति विपरिणमयन् घट्टीपालेति परामर्शात् तादृगुच्चपदस्वीकारद्वाराऽऽत्मगौरवमेव मन्वानो नायको बाढमिति प्रशसन्नाह **दीव्यदिति** — दीव्यन् दीप्यत् अर्वाचीनो नव यद् यौवन तज्जन्यो गर्व एव सवल

---

उद्यान के चक्रवर्ती का प्रताप जाज्वल्यमान होने पर इस समय मृगनयनियो द्वारा इस प्रकार उद्धत वाणी का प्रयोग उचित नहीं ।

राधा — अरी सखि ललिता ! ढीठ चुङ्गी अधिकारी के कुचक्र में फँस गई हो— अत इस समय कुण्ठित होने से काम नहीं चलेगा ।

कृष्ण — मित्र सुबल ! सुना तुमने इसकी कठोर एव धृष्टताभरी उद्धत वाणी (आधी निकली अपनी जीभ को दाँत से दबाते हुए) बड़े दु ख की

unbecoming on the part of the fawn eyed to use such language of arrogance

RĀDHĀ Friend Lalitā ! you have fallen in the *grip of a rude* toll gate Keeper Weakness is, therefore, of no use here.

KRSNA Friend Subala ! heard you the thunder of her words violent with stiff boldness ! (*biting his slipping tongue*

सर्वस्वया बाढमेतया महाघट्टसाम्राज्यपट्टलब्धाभिषेकोऽहं चातुरिकाणां[1] चक्रवर्ती घट्टीपालः कृतोऽस्मि।

ललिता — ( संस्कृतेन )

**सच्छिद्रा लघुवंशजा च मुरली यष्टिः कठोरा भृशं,**
**स्तब्धात्मा च विषाणिकातिमलिना वक्रस्वरूपापि च।**

---

सकला सम्पत्तिर्यस्याः सा तथा विद्योतन्नवयौवनसम्पन्नया एतया महाघट्टस्य मुख्यचत्वरस्य साम्राज्यपट्टे एकाधिकारे लब्धाभिषेकः संस्थापितः अहं चातुरिकाणां ( चातुरीं वेत्ति इति ठक् ) चतुराणां चक्रवर्ती प्रमुखः घट्टीपालः कृतोऽस्मीति बाढं कष्टमेव।

चातुरिकः रथचर्यायां निपुणे रूढः उत्तमवाहक इत्यर्थमभिदधाति, तस्यात्रा-प्रसक्तत्वात्कुशलार्थे प्रयुक्तमिदं मुधा निहितार्थदोषमुद्भावयत् नातिरुचिकरमेव, एवमेव महासाम्राज्यचक्रवर्तिप्रभृतीनां पदानामुपादानं क्वथितगुग्गलोद्वेगकृद् बन्धस्य बदरपाकं पचतीति सुधीभिर्विभाव्यम्। परुषे वचसि गौरवख्यापनारोपणं नायकस्य नायिकाप्रवणं प्रणयं गमयति "अपराधशतेनाप्यविचाल्यं प्रेम प्रणयः" – इति वचनात्। प्रेयस्या नवयौवनप्रशंसनाद्गुणाख्यानं नामालङ्कार उद्दीपनविभावं विद्योतयति।

कृष्णं घट्टीपालत्वेनोपहसन्ती ललिता संस्कृतमाश्रित्याह **सच्छिद्रेति** — यादृशो घट्टीपालस्तादृश्य एव तस्या महिषीभिः प्रेयसीभिर्भाव्यम् अथवा यादृश्यस्तस्य सहचर्यः तादृशेनैव तेनापि भाव्यम् [ Cf. Tell me your friends and I shall tell you who you are. ] इति न्यायेन घट्टीपालस्यानुरूपतामद्भुताञ्च वृत्तिमुपपादयति — प्रथमा तस्य सहचरी मुरली, सच्छिद्रा रन्ध्रान्विता दोषपूर्णाऽनर्थबहुला छिद्रेष्वनर्था बहुली-भवन्तीत्यभियुक्तोक्तेः। सा पट्टमहिषी तावदिति गमयितुं तस्याः प्रथमनिर्देशोऽभ्यर्हितस्य

---

बात है। नवयौवन के गर्व को अपना सर्वस्व समझती हुई इस बाला ने इस घट्टी चौकी के साम्राज्य पर पट्टाभिषिक्त मुझे चौकीदारों का अध्यक्ष चुंगी का अधिकारी बना दिया है।

ललिता — [ संस्कृत में ] अनेक छिद्रों से युक्त लघु वंश ( =बाँस, कुल ) में उत्पन्न, बिलकुल कठोर एक तो मुरली है; और दूसरी, स्वरूप से टेढी

---

*half way* ) Alas ! what a misfortune ! Surely, I, who am duly coronated as the supreme authority over the entire jurisdiction of the main toll-station, am reduced to the position of a toll-gate guard - a king of the cunning - by this woman puffed with pride of her fresh budding youth.

LALITĀ : ( *In Sanskrit* )

41. It is certainly not amazing to find one living as a tollgate Keeper in this dreadful forest whose body is

---

१. "चत्वरिकाणाम्" – इति पाठभेदः।

आभिः सन्ततमुत्तमाभिरभितो यस्याङ्गमालिङ्ग्यते
घट्टीपालतया भयानकवने वृत्तिर्न तस्याद्भुता ॥ ४१ ॥

प्राथम्यमिनि न्यायात्। अपि च सा लघुवशजा लघोर्वेणुदण्डात् जाता — वंशवृक्षस्य द्वे जाती — एका स्थूलाऽतिदीर्घाऽनेकपुरुषोच्छ्राया, अपरा च कनीयसी तन्वी नातिदीर्घा च, तयोरियं तु मुरली लघुवशसमुद्भूता — श्लेषेण लघौ क्षुद्रे वंशे कुले समुद्भूता हीनकुलजेत्यर्थ, द्वितीया तु यष्टिर्दण्ड साऽपि भृशमतीव कठोरा पक्षे दुर्दान्ता, स्तब्धात्मा अचेतना स्पन्दरहिता च। तृतीया महिषी विषाणिका शृङ्गिका, या अतिमलिना कुरूपा, वक्र तिर्यक् स्वरूप यस्या सा विषमस्वभावा। आभि· उत्तमाभि· विपरीत-लक्षणया क्षुद्राभि· कुत्सिताभि सहचरीभि सन्तत सर्वकालं यस्य अङ्गं गात्र अभित सर्वत आलिङ्ग्यते तस्य (चक्रवर्तिन:) भयानकवने सुजनैरसेव्यमाने दारुणे वने घट्टीपालतया शुल्कग्राहाधिकारिरूपेण वृत्ति स्थिति अद्भुता विचित्रा न सर्वथोपपन्नैवेति भाव। त्वमपि सहचरीसदृश कठोरकर्माऽसीति अधिक्षेप। सुन्दरीनरीधर्षणे धृष्टस्य साहसिक्यार्थं घोरकानने स्थितेरौचित्यमेव।

"वृत्तिर्न तस्याद्भुता" इति काक्वा पठितौ अपि तु अद्भुता सर्वथा असङ्गता विचित्रा एवेति तात्पर्यं शब्दशक्त्या प्रतीयते — तथा त्व सदा मुरली-यष्टि-विषाणिकाभिस्तिसृभिरनुरूपाभि सततमालिङ्गन्तीभिरत एव त्वदीयचरितविषये जागरूकाभि लघुवशजत्वात्कठोरत्वाद्वक्रस्वभावात्कृतापराधे त्वय्यक्षमाशीलाभिः सङ्गत सन् भयावह वनमाश्रित्य गृह परित्यज्य घट्टीपालोऽपि सन् स्वाधिकारस्य दुरुपयोगं कुर्वन् तत्रागन्तुकीनां कुलजाना कन्यकाना प्रसह्य धर्षणात्मिका वृत्तिर्व्यवहारस्तव अद्भुता न अपि तु सर्वभावेनानुचितैवेति भर्त्सन व्यनक्ति। त्वदनुरूपास्तवैव पूर्वोक्ता महिष्यो, न वयं या सरलस्वभावा· कुलीना पतिव्रता अताऽस्मासु तवासद्व्यवहार· सर्वथा गर्हित इति वस्तु च व्यज्यते। उत्तमाभिरिति पदस्यार्थान्तरसंक्रमितवाच्यत्वम्।

पद्येऽस्मिन् सर्वत्र विशेषणाना द्व्यर्थित्वात् श्लेषालङ्कार·, उत्तमाभिरित्यत्र विपरीतलक्षणया 'न तस्याद्भुतेत्यत्र' काकुवशान्यार्थबोधनाद्वक्रोक्ति, सत्त्वेऽपि बहुनारी-व्रजेऽधिकारवशादन्यनारीलम्पटस्य कामुकस्य व्यवहारसमारोपान्मुरल्यादिषु कामिनीत्वा-रोपात्समासोक्तिरलङ्कारश्च, प्रसादार्थव्यक्तिगुणसम्पन्नो बन्ध· वैदर्भीमार्गेणोपनागरिकया वृत्त्या घटितो ध्वनिप्रधान· शार्दूलविक्रीडितेन वृत्तेनोपनिबद्ध उत्तम काव्यम् ॥४१॥

---

छड़ी और तीसरी अत्यन्त मलिन सींघड़ी तुम्हारी प्यारी है-ऐसी ऐसी उत्तम वस्तुओं से तुम्हारा अङ्ग सदा आलिङ्गित रहता है- तो फिर इस भयानक वन में चौकी के अध्यक्ष के रूप में तुम्हारा ऐसा व्यवहार अद्भुत न होगा ॥ ४१ ॥

---

embraced on all sides by excellent beloveds - one of whom is a flute made of petty reed and is full of holes, another an extremely hard, stiff stick, and the third a pipe, dirty and crooked.

**सुबलः** — हन्त दुम्मदमुहराओ ! ण क्खु हेलिदुं जुत्तो एसो महादानस्स अहीसो तुम्हेहिं । [ हन्त ! दुर्मदमुखराः ! न खलु हेलितुं युक्त एष महादानस्याधीशो युष्माभिः । ]

**राधा** — हो दु अहीसो । तदो वि किं ? [ भवत्वधीशस्ततोऽपि किम् ? ]

( इति संस्कृतेन )

**धर्षणेन कुलस्त्रीणां भुजङ्गेशः क्षमः कथम् ।**
**यदेता दशनैरेष दशन्नाप्नोति मङ्गलम् ॥ ४२ ॥**

---

एकां परपामुक्तिमनु परां प्रबलगर्वामुक्तिं युञ्जानाः आभीरावालाः भर्त्सनामुखेन सम्बोध्य ता युक्तव्यवहाराय दिशन्नाह सुबलो **हन्तेति** — अयि दुर्मदवादनुचितगर्वतया मुखरा भूरिवाचो जल्पाकाः ! ( शृणुत ) एष महादानस्य घट्टस्य व्यञ्जनया महतामपि मानमर्दकस्य ( दो खण्डने ततः ल्युटि दानमितिरूपम् ), महत् आदानं ग्रहणं यस्य तादृशस्य स्थानकस्य अधीशः ( प्राकृते 'अहीसो' ) युष्माभिरबलाभिः हेलितं हेलया व्यवहर्तुमवगणयितु युक्तः समीचीनो नेत्युद्बोधनम् । अर्हतीति अहिः गर्वदुर्दान्तः, आ हन्तीति वाऽहिर्निष्ठुरो घातकः तदधीशः वञ्चकचूडामणिरिति प्राकृतपदार्थविशेषः ॥

पुनर्निरपेक्षभावेन सुबलोक्तिं फूत्कुर्वन्ती राधा प्राह **भवत्विति** — भवतु अहीशः ( > अधीशः ), ततः अपि तादृशेनापि किमस्माकं का हानिः इत्युपक्रम्य अहीशेति गृहीत्वा संस्कृतेन नैकार्थकं वच आदत्ते राधा **धर्षणेनेति** — असौ चेदहीशस्तदा भुजङ्गेशः सर्पराजः नकुलस्त्रीणां धर्षणे कथं क्षमः स्यात्, अहिनकुलयोः सहजवैरान्नकुलाः महासर्पमपि भक्षयन्ति, **यदिति** हेतुमाह — एष भुजगेशः एता नकुलस्त्रीः दशनैः खदन्तैः दशन् मङ्गलं क्षेमं नाप्नोति प्रतिदंशेन स म्रियेत एव । प्राकृतपदस्याहीशस्याधीशे-

---

सुबल — अरी गर्वीली वाचाट लड़कियों ! चौकी के मुखिया की इस तरह अवहेलना करना उचित नहीं है ।

राधा — चौकी का मुखिया है तो क्या करें – हमें मतलब !

( इतना कहकर संस्कृत के माध्यम से )

नकुल मादाओं पर आक्रमण करने पर सर्पराज की कुशल कैसे हो सकती है, उन पर दाँत गाड़ने से उसकी ख़ैर नहीं है ।

[ > कुलाङ्गनाओं पर आक्रमण करने पर कामुक श्रेष्ठ की कभी ख़ैर नहीं होती । ] [ > कामुकों का मुखिया कुलस्त्री पर भी साहस करने में

---

SUBALA : Ah, you stiff-necked babblers ! sure enough, it is not proper to insult thus the chief of the tollgate.

RĀDHĀ : Well, what of that, even he be so. ( *In Sanskrit* )

42. How can, even the lord of snakes, ravish the female mongooses ? For, should he bite them with his teeth, he shall not fare well

कृष्णः — भङ्गुरापाङ्गि ! हृदयङ्गममात्थ । ततः समाकर्णय ।
( सहर्षम् )

त्वयोग्रहणे त्व कुलस्त्रीणां पतिव्रतानां कुलाङ्गनानां धर्षणे प्रसह्य सम्ग्रहणे कथम् अपीति अध्याहर्त्तव्य क्षम समर्थो न स्या, यत स्वैर्दशनै एता दशन् अधरं खण्डयन् मङ्गलं कुशलं न आप्नोति, तासां पत्युर्व्यारोपात्, राजदण्डभयात्कुम्भीपाकादौ परत्र पतनभयाच । सर्वथा तव क्षमताया पारे खलु धर्षणव्यापार, अतस्तस्मात् स्त्रीसग्रहण-साहसिक्याद्विरम ।

पद्यमिदं तृतीयमप्यर्थं निष्पादयति गुह्यार्थं प्रकाशयति च — तद्यथा, भुजङ्गेश सुप्रसिद्ध पारदारिकप्रमुख कुलस्त्रीणामस्मादृशानां धर्षणे प्रसह्यसम्भोगे कथ न क्षम अपि तु क्षम एव, यत एता दशनैर्दशन् सरभस दन्तक्षतकर चुम्बनादिक विधाय मङ्गल प्रमोदमयम् आप्नोति केलिसुख चन्द्रस्येवेति साकूत वचनम् । अस्य तृतीयार्थस्य वक्तृबोद्धव्यवैशिष्ट्याद्वगम शब्दशक्त्युत्थ ध्वनिरूप सहृदयहृदयहारी । अत्र गण्ड नाम सन्ध्यङ्गम् ।

अत्र श्लेषालङ्कार नवकुलस्त्रीणामित्यत्र सभङ्ग शब्दपरिवृत्त्यसह, भुजङ्गेशादौ अर्थश्लेषोऽभङ्गरूप । सुबलेन प्रोक्तमधीशांशयुक्तेशपदम यथा योजयित्वा भुजङ्गेशार्थं परिकल्प्य राधाया प्रतिवचने वक्रोक्तिरलङ्कार "कस्त्वं शूली मृगय भिषजम्"— इत्यादिवत् । प्रसादगुण, वैदर्भी रीति, श्लोकाऽयमनुष्टुब्छन्द ॥४२॥

राधाया इमा वक्रोक्ति निशम्य तद्रहस्यभावगम्य ता श्लाघावचोभि प्रोत्साहयन् नर्मकुशल श्रीकृष्ण सम्बोधयामास भङ्गुरेति — अयि भङ्गुरे लोले वक्रप्रेक्षणे निपुणे अपाङ्गे नयनकोणौ यस्या सा तादृशि इति सम्बोधनम् । त्व हृदय गच्छति स्पृशत्या वर्जयति यत्तादृश वच आत्थ कथितवती । तत तस्माद्धेतो मम मनोरथपूरणानुकूलवृत्तित्वात् सम्प्रति मदीय वच समाकर्णय शृणु इत्यर्थ । इत्युक्त्वा सहर्षम्

---

क्यों कर समर्थ नहीं होता — वह तो होता ही है। उन पर दन्तक्षत करने से वह सुख प्राप्त नहीं करता।] [> उस पर दन्तक्षत करने से ही वह आनन्द लेता है।] ॥४२॥

कृष्ण — अरी कुटिल कटाक्षवाली ! हमारे दिल में बैठे ऐसी बात तूने कही — अत एव सुनो (प्रसन्नहो) चन्द्र की कला की भाँति तेरा ललाट हैं ( शिव

(OR)

*By no means can a rake assault the women of* noble descent For, should he implant kisses on them, he shall not come to good luck

(OR)†

*What makes it improper for a lusty youth to dash upon* damsels of noble descent ? for, it is only by biting them that he gets immense pleasure.

KRSNA Oh dear lady with fluttering eyes ! well said Listen *then,* *(joyously)*

---

† the third sense through *double entendre*

अप्रौढद्विजराजराजदलिका लब्ध्वा विभूतिं रुचां
नव्यामात्मनि कृष्णवर्त्मविलसद्दृष्टिं विशाखाञ्चिता ।
कन्दर्पस्य विदग्धतां विदधती नेत्राञ्चलस्य त्विषा
त्वं राधे शिवमूर्तिरित्युरसि मां भोगीन्द्रमङ्गीकुरु ॥४३॥

प्रमोदसान्द्रः सन् प्राह **अप्रौढद्विजेति** — राधया पूर्वस्मिन् पद्ये श्लेषवक्रोक्तया नायकः भुजङ्गेशेति पदेनान्वर्थं परामृष्टः । तामेव भङ्गीमुररीकुर्वन् कृष्ण आत्मानं भोगीन्द्रत्वेन गृहीत्वा राधां शिवमूर्त्तित्वेन साङ्गोपाङ्गं परिकल्प्य तत्र भुजगहारहीनत्वान्न्यूनत्वं प्रदर्श्य तत्पूर्त्तये भोगीन्द्रं मामङ्गीकुरु येन नायिका समग्रतया शिवमूर्त्तिर्भवेदिति । शिवमूर्ति-पक्षे — अप्रौढोऽपरिपूर्णोऽर्द्धः द्विजराजश्चन्द्रमास्तेन राजत् शोभमानम् अलिकं ललाटो यस्याः सा — सम्बोद्ध्यपक्षे अप्रौढद्विजः द्वितीयाचन्द्र इव राजत् अलिकं ललाटप्रदेशो यस्यास्तादृशी राधा; मूर्त्तिपक्षे आत्मनि देहे नव्यामन्यत्रानुपलभ्यमानानां दीप्तीनामवयवत्वेन विभूतिं भस्म लब्ध्वा प्राप्य, परपक्षे देहे नव्यामद्भुतां रुचां कान्तीनां विभूतिमैश्वर्यमुत्कर्षं वाऽवाप्य, शिवपक्षे — कृष्णवर्त्मा वह्निः तेन विलसन्ती दृष्टिर्यस्याः सा — शिवमूर्त्तौ तृतीयस्य नयने वह्नेरावासात् । अपरपक्षे कृष्णस्य भगवतो वर्त्मनि मार्गे यातायातक्रमे विलसन्ती सोत्कं प्रेक्षमाणा दृष्टिर्यस्याः सा राधा; अपि च शिवमूर्त्तिर्विशाखेन स्कन्दस्वामिना अञ्चिता समाश्लिष्टा, त्वञ्च विशाखा नाम सखी तया अञ्चिता सह वर्त्तमाना, अपि च नेत्राञ्चलस्य तृतीयाक्षस्य कोणस्य त्विषाऽर्चिषा कन्दर्पस्य मदनस्य विदग्धतां विशेषेण दग्धतां नितान्तं भस्मीभूतत्वं विदधती कुर्वती शिवमूर्त्तिः, त्वञ्च राधा नेत्रापाङ्गस्य कान्त्या कन्दर्पस्य विदग्धतां चातुरीं विदधती एवं गुणगणविशिष्टत्वात् हे राधे ! त्वं शिवमूर्त्तिरसि; किन्तु शिवमूर्त्तौ यथोरसि भुजङ्गहारः, तस्य त्वय्यभावा-

---

मूर्ति के पक्ष में—चन्द्रमा की एक कला से सुशोभित ललाट है ), और विभूति ( ऐश्वर्य < भस्म ) से शोभायमान है और तेरी भव्य दृष्टि कृष्ण के मार्ग की ओर सदा लगी रहती है ( >शिव की दृष्टि =तीसरा नेत्र कृष्णवर्मा = अग्नि से सुशोभित हैं ), तू विशाखा के साथ विद्यमान है, ( शिवमूर्ति विशाख = कार्तिकेय से मण्डित है ) तू अपने

43* Rādhā ! you, with your graceful (*śiva*) personality are an image of Lord Śiva inasmuch as his forehead shines *with* the crescent moon and yours shines *like* the crescent moon; his body is besmeared with fresh ashes (= *vibhūti*) and yours has ever fresh exquisite splendour (= *vi-bhūti*); his third eye blazes with fire (= *kṛṣṇavartman*) and your eyes are rivetted on the path of Kṛṣṇa (= kṛṣṇa-vartman); he is associated with Viśākha alias Kārtikeya, his son, and

---

* All the adjuncts here have play on words which through *double entendre* yield two meanings applicable verily to Śiva on one side and to Rādhā on the other. For details Vide Notes.

ललिता — कण्ह ! इमाए कूडवाउराए दुग्गहा ललिदा धुत्तहरिणीत्ति सुम्ह सहअरा सुट्ठ जाणन्ति । ता मुंच विहल धिट्ठगढिलत्तणं । [कृष्ण ! अनया कूटवागुरया दुर्ग्रहा ललिता धूर्तहरिणीति युष्मत्सहचरा अपि सुष्ठु जानन्ति । तन्मुञ्च विफल धृष्टग्रन्थिलत्वम् ।]

तन्न्यूनताक्षतये भोगीन्द्र भुजगराजमिव भोगीन्द्र विलासिप्रमुख मां त्वदीयोरसि अङ्गीकुरु इत्यर्थ, तेन तव शिवमूर्तित्व सर्वाङ्गीणं सम्पत्स्यते । राधापक्षे शिवा मङ्गलानन्दमयी मूर्तिस्स्वरूपमित्यर्थ ।

अत्र विभूति विशाखा कृष्णवर्त्मेत्यादिषु पदेषु अभङ्ग शब्दश्लेष, प्रथमपदे चार्थश्लेष । राधावपुषि समारोपिता शिवमूर्तिरतो विषयविषयिणोरभेदाध्यवसानात्, बहुषु प्रतीकेषु तादात्म्यदर्शनपूर्वकं भोगीन्द्रसयोगरूपस्य धर्मस्य वैकल्यदर्शनादत्र साङ्गमपि न्यूनताधिरूढवैशिष्ट्य "अभालल्लोचन शम्भुर्भगवान् बादरायण" इतिवत् श्लिष्टरूपकमलङ्कार । आत्माङ्गीकारस्य वचसा प्रतिपादितत्वात् स्वदौत्यस्य नायकस्य नर्मप्रागल्भ्यम् । नायिकोक्त धर्षणेनेति वचो हृदि कृत्वा नायकस्य तामेव श्लिष्टं नर्म वच अप्रौढेति परस्परं गोष्ठीरूप जल्पाख्य सम्प्रयोगाङ्ग निर्दिष्टम् । राज राजदलिकेत्यत्र पृथगर्थतया वर्णसहतेरावर्तनात्पदमध्यगो यमकालङ्कार, अन्यत्रानुप्रासश्च । कोमला वृत्ति, प्रसादमाधुर्ये गुणौ, मध्यमपाञ्चाली रीति, मधुर पाक, वृत्तञ्च वक्तु प्रागल्भ्यानुगुणं शार्दूलविक्रीडित नाम ॥४३॥

नायकस्योद्धतत्व सामर्थं भर्त्सयतीव ललिता कृष्णमाह **अनयेति** — अनया कूट कपटमायणमेव वागुरा बन्धिनी तया दुर्ग्रहा असाध्या ललितानाम्नी धूर्ता हरिणी चतुरमृगी — इति युष्मत्सहचरा सुबलादयोऽपि सुष्ठु सम्यक् जानन्ति । अतस्त्वं

---

नेत्र की शोभा से मदन की चातुरी को बढाती है ( > शिवमूर्ति के पक्ष में नेत्र की ज्वाला से मदन को भस्म करनेवाली ) — इस तरह हे राधा ! तू सचमुच शिवमूर्ति है, अत एव उचित ही है अभिकों में श्रेष्ठ मुझे ( > सर्पराज को ) तू अपने वक्ष स्थल पर धारण करले ॥४३॥

ललिता — कृष्ण देखो ! इस प्रकार कूटवाणी की पाश से वशीभूत न होने वाली ललिता बडी धूर्त हरिणी है — यह बात तुम्हारे सहचर भी भली भाँति जानते हैं । अत एव तुम्हारे इस ढीठ दुराग्रह से बाज आओ ।

you are accompanied with Viśākhā, your friend, he burnt to ashes (*vi*+*dagdhatā*) God of love (*Kandarpa*) with the fire emitted from the corner of his eye and you excite the exuberance (*vidagdhatā*) of passion (*kandarpa*) by the spark of your eyes But the image of Siva has a large snake (*bhogīndra*) over his chest, which you lack in Please, therefore, to complete your image likewise, accept me, the master lover (*bhogī indra*) over your breast

LALITĀ Krsna ! your companions also know very well that Lalitā is a clever deer that cannot be taken in in such a trap of oblique words Give up, therefore, your futile, impudent obstinacy

( कृष्णः सुबलमवलोकते )

सुबलः — ललिदे ! एदे कहं किर ण जाणिस्सन्ति जाहिं तहिं गंध-अलीहरणे णिक्कुड़सामिणा लुंठिदमणिमंडलाणं सूरोवासिआणं काणं वि महा-प्पहावाणं दंतपंतिसिहरेसु तिणगुच्छमरगएहिं आरद्धा का वि अच्छरिअलच्छी पच्चक्खीकिदा । [ललिते ! एते कथं किल न ज्ञास्यन्ति यैस्तदा गन्धफलीहरणे निष्कुट-स्वामिना लुण्ठितमणिमण्डनानां सूर्योपासिकानां कासामपि महाप्रभावानां दन्तपंक्ति-शिखरेषु तृणगुच्छमरकतैरारब्धा काऽपि आश्चर्यलक्ष्मीः प्रत्यक्षीकृता । ]

---

विफलं मोघं त्वदीयं धृष्टत्वं साहसिक्यं ग्रन्थिलत्वं हठधर्मित्वञ्चेति । मुधाऽऽश्लास्यस्यात्मानं यतो ललितायां परिरक्षन्त्यां तव प्रागल्भ्यं न साधयिष्यति मनोरथमिति ।

अत्र आत्मानं ललितेति प्रथमपुरुषेण परामृशन्त्याः गर्वो व्यज्यते । अत्र प्रत्यक्षनिष्ठुरभाषणाद्वज्रं नाम सन्ध्यङ्गमुक्तम्भवति 'वज्रं प्रत्यक्षनिष्ठुरम्' इति धनञ्जयोक्तेः । कूटे वागुरात्वरोपणं ललितायां मृगीत्वारोपवशंवदमतोऽत्र परम्परितरूपकमलङ्कारो निरङ्गम् ।

एवं भर्त्सितो नायकः समुचितोत्तरया ललितां तत्सखीश्च ह्रेपयितुमलं वचः प्रयोक्तुं सुबलमवलोकते यथोचितभणितये प्रेरयतीत्यर्थः ।

एवं प्रेरितः इङ्गितज्ञः सुबलः पूर्वप्रसङ्गमुद्बोधयति **ललित इति** — ललिता कियती दुर्मदा इति एते मत्सहचराः कथं न ज्ञास्यन्ति अपि तु ज्ञास्यन्त्येव यैः तदा तस्मिन् पूर्वप्रसङ्गे क्वचित् गन्धफलीनां चम्पककुसुमानां हरणे चयने निष्कुटस्यामुष्य निकुञ्जस्य स्वामिना लुण्ठितानि बलाद्गृहीतानि मणिमयानि मण्डनानि यासां तादृशीनां सूर्योपासिकानां गोपिकानां कासाञ्चिद् महाप्रभावानां दुर्मदत्वधीरत्वाभिमानीनां दन्तपंक्ति-शिखरेषु रदावल्यग्रभागेषु तृणस्य गुच्छा एव मरकतमणयः तैः कापि अनिर्वचनीया आश्चर्यलक्ष्मीः अद्भुता शोभा प्रत्यक्षीकृता । मुखे तृणग्रहणं स्वस्य दैन्यप्रकटनं शरणागतत्वं

---

( कृष्ण सुबल की ओर देखता है )

सुबल — ये भलीं सहचर क्योंकर नहीं जानेंगे जिन्होंने एक समय चम्पे के फूल तोड़ने पर इस उद्यान के मालिक ने जब इन महाप्रभावशालिनी सूर्योपासिकाओं के सब मणिजटित आभूषणों को लूट लिया था तब उन्होंने अपने दाँतों के अग्रभाग में पन्ने के रंग की हरी घाँस के गुच्छे को दबाते हुए जो शोभा बनाई थी उसे प्रत्यक्ष रूप से देखी थी ।

---

*( Kṛṣṇa looks at Subala meaningfully )*

SUBALA : Lalitā ! why should they not know, who saw with their own eyes that inextollable, wonderful lustre produced by an emerald-like bunch of grass held in between the rows of reddish teeth of certain Sun-worshippers of superhuman power when they, while collecting Campaka flowers, were held up and deprived of their jewels by the owner of this pleasure garden !

कृष्णः — सखे, विस्मृतं तत्कुतूहलं पुनरत्र काण्डे सुष्ठु भवता स्मारितम्। ( इति स्मितं कृत्वा )

अस्मिन्नद्रौ कति नहि मया हन्त हारादिवित्तं
हारं हारं हरिणनयना ग्राहिता जैनदीक्षाम्।
याः काकूक्तिस्थगितवदनाः पत्रदानेन दीना-
स्तूर्णं दूरादनुजगृहिरे प्रौढवल्लीसखीभिः ॥ ४४ ॥

---

पराजितत्व वा सूचयति। यदा गोपीभि उद्याने चम्पकचयन कृतं तदा तत्स्वामिना बलात् मणिमण्डनान्यवतार्य या दुर्दशा तासा कृता सा यै स्वय दृटा तैरस्मत्सहचैर कथ न ज्ञायते गोपिकानां बलमाहात्म्यम् इति वक्रोक्ति। तृणगुच्छमरकतेत्यत्र रूपकमलङ्कार'— कथं न ज्ञायते इति काकूक्ति। सम्यक्सुबल आहेत्यनुमोदमान कृष्णस्तमभिनन्दन्नाह **सख इति** – तत् पुराकृतं कुतूहलं विनोदस्तन्मया विस्मृतं, पुनरत्रास्मिन् काण्डे प्राप्तावसरे सुष्ठु सम्यग्भवता स्मारितम् – स्मितं कृत्वा स्व-बलात्कृतिशक्ति मिथ्यत्वातनोति कृष्ण **अस्मिन्निति** — हन्त इति सानन्दस्मरणे। अस्मिन्नद्रौ गोवर्धनगिरौ कति नियन्त्य अगणिता हरिणनयना मया हारादिवित्तं मणिमालाप्रभृतिसम्पत्तिं हार हारं नैकधा हरता (वीप्साया हरतेर्णमुल्) जैनदीक्षा ग्राहिता विवसनता नीता, तदा किञ्चिदपि कर्तुमशक्नुवानास्ता काकूक्त्या मा मेतिप्रतिषेधवचनमात्रेणैव स्थगितवदना स्तब्धमुख्य अतएव दाना विवशा तूर्णं सपद्येव कुम्बवर्त्तिनीभि प्रौढवल्लीरूपाभि सखीभि लताभि पत्रदानेन पल्लवद्वारा ता अनुजगृहिरे अनुगृहीता। तदानीं विवशाभिस्ताभिरङ्गनाभिर्निकटस्थलताभ्य पल्लवान्याहृत्य स्वीय वैवश्य पराजितत्व वा

---

कृष्ण — वाह मित्र ! उस कौतुक को तो मैं भूल ही गया था, तुमने ठीक समय पर भली याद दिलायी। ( यों कहकर मुसकराकर )

इसी पहाड़ पर मेरे द्वारा कितनी ही मृगनयनियों को उनके मणि की माला आदि सम्पत्ति को बार बार लूट कर जैन धर्म की दीक्षा दिलवाई गयी और तब "क्या-क्या" कहकर जिनकी बोलती बन्द हो गई थी ऐसी दीन अबलाओं पर ( निकटवर्ती ) हरी भरी लता रूपी सखियों ने अपने पत्ते झटपट समर्पण कर ( उनकी लाज ढककर ) अनुग्रह किया था ॥४४॥

KRSNA Ah, freind ! I had forgotten that interesting incident You did well in recalling it on this occasion *(smiling)*

44 How many fawn-eyed belles, on this mountain, have I not, by snatching away their possessions such as necklace and the like, initiated into the Jain order when they, with their face concealed in affected protests were very kindly provided immediately with leaves by the grown-up friends in the creepers standing at a distance !

विशाखा — अलं इमिणा अलीअदप्पडिंडिमाडंवरेण । [अलमनेन अलीकदर्पडिण्डिमाडम्बरेण । ]

ललिता — सहि विसाहे ! हंत हंत कल्लि पच्चुत्ताणग्घमणिकंचणसंचय-किरणुदंचिदाए राहिए कंचुलिआए उलुंचणवुत्तंत्तं सहीजणे अज्जाए विण्णविदुं पवुत्ते मुहमज्झ-णिक्खित्त-तज्जणी-सिहरस्स सुरिन्दगंधव्वणामं अहीरं पुणो पुणो वाहरंतस्स कस्स वि दप्पसोंडस्स महाप्पचंडस्स सा कावि चाडुगंठिदा कंठकाअली कं वा जणं ण क्खु कारुण्णेण ओण्णिदवदी । सखि विशाखे ! हन्त हन्त, कल्लि-प्रत्युप्तानर्घ्यमणिकाञ्चनसञ्चयकिरणोदञ्चिताया राधायाः कञ्चुलिकाया उल्लुञ्चन-

---

दर्शयित्वा स्वीयेषु मुखेषु न्यस्तानि । अत्र वितथोक्तिरूपो जल्पः । हरिणनयना इत्यत्रोपमा, प्रौढवल्लीसखीभिरित्यत्र रूपकम्, जैनदीक्षां ग्राहिता इति निहतार्थः । सानुप्रासो बन्धः, प्रसादो गुणः, वैदर्भी रीतिः । वृत्तञ्च मन्दमन्दमात्मनः आक्रमणबोधनाय मन्दाक्रान्ता — "मन्दाक्रान्ता जलधिरसगैर्म्भौ नतौ ताद्गुरू चेत्" — इति लक्षणयोगात् ॥४४॥

विशाखा साक्षेपमाह **अलमिति** — अनेन अलीकदर्पाऽडम्बरेण मिथ्याभिमानेन अलम् — अलंयोगेऽत्र वारणार्थे तृतीया । डिण्डिमो घोषः उच्चैः प्रकटनमित्यर्थः ।

गन्धफलीप्रकरणे सुबलोद्धृते यल्ललनानां दैन्यं तस्य समकोटिकस्य दैन्यस्य कृष्णसहचराणां स्मारयन्तं सन्दर्भं ललितोद्धरति **सखि विशाख इति** — कल्लि अतीतेऽनागते दिवसेऽव्ययपदम् । ह्यः प्रभाते प्रत्युप्तस्य खचितस्य अनर्घ्यस्य बहूमूल्यवतः मणीनां काञ्चनेन सह सञ्चयस्य किरणैः प्रभाभिः उदञ्चिताया व्याप्ताया राधायाः कञ्चुलिकायाः स्तनांशुकस्य उल्लुञ्चनस्य वृत्तान्तं प्रसङ्गं सखीजने राधायाः सहचरी-गणे आर्यायै पौर्णमास्यै विज्ञापयितुं कथयितुं प्रवृत्ते उद्यते सति मुखस्य मध्ये निक्षिप्तं तर्जन्याः प्रथमाङ्गुल्याः शिखरं यस्य भयवशात् मुखे प्रविष्टतर्जनीकस्य, सुरेन्द्रगन्धर्वेति महाहाहा तन्नाम अधीरं वेपमानत्वाल्लघु लघु व्याहरतः कस्याप्यग्राह्यनाम्नः दर्पे शौण्डः प्रवीरः तस्य महाभिमानिनः महाप्रचण्डस्य दुर्धरस्य सा विलक्षणा चाटुवचोभिः प्रथिता या

---

विशाखा — रहने दो इस झूठमूठ की शेखी को।

ललिता — सखि विशाखा ! अरे याद करो– कल ही नवीन बहुमूल्य मणियों से जटित सुवर्ण की किरणों से चमचमाती हुई राधा की चोली पर झपटने के वृत्तान्त को जब सहेलियाँ आर्या (भगवती पौर्णमासी) से कहने जा रही थीं उस समय मुख के मध्य भाग पर अपनी तर्जनी रख जिस

---

VIŚĀKHĀ : Enough of this vulgar show of arrogance – a beat of drum as it were.

LALITĀ : Friend Viśākhā ! Ah, it was only yesterday when Rādhā's friend started narrating to the Revered Paurṇamāsī the incident of undoing (by Kṛṣṇa) Rādhā's bodice adorned with blended rays of jewels

वृत्तान्तं सखीजने आर्यायै विज्ञापयितु प्रवृत्ते सति सुखमध्यनिक्षिप्ततर्जनीशिखरस्य सुरेन्द्र गन्धर्वनाम अधीर पुन पुन व्याहरत कस्यापि दर्पशौण्डस्य महाप्रचण्डस्य सा कापि चाटुग्रथिता कण्ठकाकली क वा जन न खलु कारुण्येनार्द्रितवती । ]

**सुबल —** दुल्हा एत्थ सा अज्जा कटकाटइ । ता लुक्कणे वि किं पि ओट्टंभणं ण पेक्खामि । [ दुर्लभात्र सार्या कण्टकाटवी । तत् लुक्कने किमपि अवष्टम्भनं न पश्यामि । ]

**चम्पकलता —** विजअदु सो ललिदाणुहाव-भाक्करो, जो क्खु तक्करविक्कमं कुंठेदि । [ विजयतां स ललितानुभावभास्कर य खलु तस्कर विक्रम कुण्ठयति । ]

कण्ठकाकली गद्गदवाक् सा क वा जन खलु कारुण्येन हृदित दृष्ट्वा दयाभावेन न आर्द्रित-वता । अपराद्धस्य तस्य वराकस्य रोदन वीक्ष्य कृपाद्रामिरस्माभिरेव आर्याया अग्रे समाधान कृत नो चेत्तस्य कीदृशा दुर्गतिरभविष्यत् । अत्र उपालम्भवचोरूप समर्पणं नामाङ्गम् । निःस्व इव सुबल पुनरपि शुल्कव्याजेन गोपाङ्गना लुण्ठितुमुत्कः समुचितमिदं स्थानमिति मत्वा लुण्ठनाय प्रस्तौति **दुर्लभेति** – सा आर्या पौर्णमासी तद्रूपा कण्टकाटवी विघ्नकारिणी अत्रास्मिन् स्थले नास्ति, अत लुकने आसां लुण्ठने किमपि अवष्टम्भन प्रतिरोध न पश्यामि – स्वैरमेता लुण्ठयन्तामिति तात्पर्यम् ।

अत्रान्तर चम्पकलता यद्यप्यार्यात्र नास्ति तथापि ललिता नाम वर्त्तते, सा तावताव प्रचण्डेति स्मारयन्ती ललिताया उत्कर्षं ख्यापयति **विजयतामिति** – स कोऽपि विलक्षण ललिताया अनुभाव कृपादाक्षिण्यसरक्षणरूपो भास्कर प्रतापवान् तेजो-राशि विजयताम् – सर्वोत्कर्षेण वर्त्तते य खलु तस्कराणा लुण्ठाकाना विक्रमं सामर्थ्यं कुण्ठयति निष्प्रभाव विदधाति ।

---

प्रकार घबराते हुए, विलक्षण अभिमानी महाप्रचण्ड की, सुरेन्द्रगन्धर्व का नाम बारबार लेती हुई, चापलूसी से भरी हुई, गद्गद कण्ठ से निकली हुई काकली (दीनस्वर) ने किस मानव हृदय को दया से द्रवित नहीं किया था ?

सुबल — यहाँ अब आर्यारूप काँटो की झाडी नहीं है, अत एव यहा लूटने में किसी प्रकार की बाधा मैं नहीं देखता ।

चम्पकलता — ललिता के प्रभावरूपी भास्कर का जयजयकार हो जो तस्करों के पराक्रम को कुण्ठित कर देता है ।

and gold, some fierce-looking fellow, drunk with arrogance excitedly repeating the name of a Mahāhāha, Surendragandharva sobbed out such coaxing words full of entreaties, that no body could help melting with pity for him.

SUBALA That revered lady, the very grove of briers, is inaccessible here, I, therefore, see nothing to prevent maurauding them here

CAMPAKALATĀ Hail, hail ! the Sun of Lalitā's great majesty, which certainly puts down the valour of the robbers

वृन्दा — ( कृष्णमवलोक्य )

**कपर्दमपि कार्णं तवात्र दुरवापम् ।**
**यदुग्रतरकर्मा कुमार ललितासौ ॥४५॥**

कृष्णः — ( सेर्ष्यमिव ) वृन्दे, विपक्षतामासादयन्ती स्थाने गोपिकापक्षाञ्चलसञ्चारिणी संवृत्तासि । भवतु पश्याद्य मे चञ्चलवल्लवीरसालवल्लीभ्यः शुल्ककुड्मलग्रहणे पुंस्कोकिलताकेलिवैदग्धीम् ।

अमुमेवार्थं समर्थयन्ती वृन्दा कृष्णमवलोक्य तमुद्दिश्याह **कपर्दमिति**— अत्रास्मिन्व्यतिकरे तव ( कर्तरि षष्ठी ) कार्णं कपर्दं स्फुटितं वराटकमपि दुरवापं लब्धुं न शक्यम् – यत्, तत्र हेतुमाह – हे कुमार नन्दसूनो ! असौ अत्र सर्वासां नेत्री उग्रतरकर्मा दारुणा ललिता अस्ति ।

पद्येऽस्मिन् भर्त्सनं तात्पर्यम् । अनुप्रासालङ्कारः, प्रसादो गुणः, वैदर्भीरीतिः । कुमारललितेति भङ्ग्या छन्दसो नाम निर्देशात् मुद्रालङ्कारः । इदं छन्दः उष्णिग्जातीयम् प्रतिपादं सप्ताक्षरं समवृत्तं कुमारललिता नाम–"कुमारललिता ज्सौग्" इति लक्षणात् ॥४५॥

वृन्दां सदा स्वपक्षीयां मन्वानः कृष्णस्तां सम्प्रति ललितापक्षपातिनीं विलोक्य तस्यै ईर्ष्यन्निवाह **वृन्द इति** – विपक्षतामासादयन्ती परपक्षमवलम्बमाना गोपिकानां पक्षस्य मण्डले सञ्चारिणी त्वं संवृत्ताऽसीति स्थाने युक्तमेव सजातीयत्वात् । काकुद्वारा स्थाने किमिदं त्वयि शोभते इत्युपालम्भः पीडाप्रेरितः; अतः समर्पणं नाम भाण्यङ्गमुपस्थापयति "उपालम्भवचः कोपपीडयेह समर्पणम्" – इति लक्षणात् । पुनर्धैर्यमवलम्ब्याह कृष्णः 'भवतु – एवमेवाप्यस्तु सपक्षा अपि परपक्षमवलम्बताम् । त्वमपि अद्य पश्य मे चञ्चलानां लोकानां कातर्यपरवशानां वल्लवीरूपाभ्यो रसालवल्लिभ्यः शुल्कमेव कुड्मलं तद्ग्रहणे पुंस्कोकिलत्वेन या केलिः लीला तस्या वैदग्धीं चातुरीम् । गोपिकारसालमञ्जरीः कथं मद्रूपः पिकवरोऽवचिनोतीति तत्र चातुरीं त्वं वीक्षस्व । अत्र रसालपदस्य साभिप्रायत्वात्परिकरः, शुल्ककुड्मले शुद्धं रूपकं, पुंस्कोकिलेत्यत्र परम्परितं रूपकमलङ्कारः ।

---

वृन्दा — [ कृष्ण की ओर देखती हुई ] हे कुमार ! यहाँ उग्रतर कर्म करने वाली ललिता विद्यमान है, इस लिए तुम्हें एक कानी कौड़ी भी मिलना मुश्किल है ॥४५॥

कृष्ण — ( मानो ईर्ष्या से ही भरा हो ) वृन्दा ! विपक्ष में जाकर मिली हुई तुम ठीक ही गोपिका के अंचल में संचार करने वाली बन गई हो । ठीक है ।

VṚNDĀ : *(Looking at Kṛṣna)* 45. Prince ! not even a broken *cowrie* can be had here; for this Lalitā is so very ruthless in action.

KṚṢṆA : *(as though jealous)* Vṛndā ! appropriately enough (being a woman) you have defected to the opposite side, and have started moving about on the border of the camp of the cowherd belles. All right, now see my

राधा — सहि वुन्दे [1] णिवारीअदु परस्सग्गहाहिणिवेसी अप्पणो वण-प्पिओ[1] । दाणिं दुम्मुहसिलीमुहपालिदाहिं रसालवल्लीहिं पल्लअहत्थेण पल्हत्थो भविअ णोमालिआमल्लीओ तुम्ह सहीओ मा हासेदु एसो ।
[सखि वृन्दे ! निवार्यतां परस्वगृहाभिनिवेशी आत्मनो वनप्रिय[1] । इदानीं दुर्मुख शिलीमुखपालिताभि रसालवल्लीभि पल्लवहस्तेन पर्यस्तो भूत्वा नवमल्लिकामल्ली युष्मत्सखीर्मा हासयतु एष ।]

अत्रान्तरे कृष्णस्यातिसाहसिकत्वम्प्रति सावज्ञमिव वृन्दाम्प्रति सोपालम्भ वच प्रयुनक्ति राधा सखि वृन्द इति — परेषा गृहाणि स्वेषाञ्च गृहाणि इति परस्वगृहाणि-द्वन्द्वान्ते श्रूयमाणमन्त गृहपद प्रत्येकमभिसम्बद्ध्यते — तेषु अभिनिवेश दुर्ग्रह यस्य तादृश अयन्ते वनप्रिय कोकिल कृष्णश्च निवार्यतां स्वहठात् । इदानीमन्यथा अय दुर्मुखशिलीमुखै दुर्मुखा तीक्ष्णदशा शिलीमुखा भ्रमरा "द्विरेफपतिं श्रिता" इति कटुवचनै परामृष्टा स्वस्वपतय तै पालिताभि रसालवल्लीभिस्तादात्म्येन गोपाङ्गनाभि पल्लवहस्तेन पेलवदलस्पर्शेन हस्तेन, व्यञ्जनया च पादस्य लव अग्रभाग ( पद पत् तस्य लव पल्लव ) च हस्तश्च इति पल्लवहस्तस्तेन पादाग्रेण हस्तेन च ( प्राणितूर्यसेनाङ्गानामिति द्वन्द्वमेकवत् ) पर्यस्त अपहस्तित भूत्वा सन् नवमल्लिकानां मल्ली माला यासा ता युष्मत्सखी मा हासयतु । मा तावदय हठिल्लस्ते वनप्रिय रसालवल्लीनां गोपाङ्गनाना पल्लवहस्तेन ताडित सन् प्रेक्षमाणानामितरासां तव सखीनामुपहास्यतां व्रजतु इति वार्यतामय बहु-व्याकृतम् ॥

---

देखो आज चपल गोपिकारूपी रसाल लताओं से शुल्करूपी मञ्जरियों को चुनने में मेरी कोयल जैसी लीला चातुरी ।

राधा — सखि वृन्दा ! अपने पराये घर पर हाथ मारने वाले तुम्हारे इस वनप्रिय सखा को मना कर दो, वरना दुर्मुख भ्रमरराज के द्वारा पालित रसाल लताओं के पल्लवरूपी लातों और हाथों से तितर बितर किये जाने पर जूही की कली जैसी तुम्हारी सहेलियों के उपहास का पात्र कहीं तुम्हारा मित्र न बन जाय ।

dexterity of a Koel in plucking the bud of toll from the mango creepers in the form of these agile cowherd belles

RĀDHĀ Friend Vṛndā ! this favourite woodland monger of yours ( = male kôel, Kṛṣṇa ) who is very fond of settling on others' homes and property, may be restrained, lest he be hurt with strokes of sprouts ( = kicks and blows ) by the mango creepers ( belles ) guarded by the stinging bees ( *śilīmukhas* ) ( = by their robust husbands armed with sharp arrows i. e *śilīmukhas* ), and be laughed at by your friends, the wreaths of jasmines ( = belles wearing such wreaths )

---

1. पिओ' ( रणप्रिय ) इति पाठान्तरम् ।

कृष्णः — ( सखेलस्मितम् )

**घट्टशुल्कप्रदानाय गुहातिथ्यग्रहाय वा ।**
**स्पृहा ते हेमगौराङ्गि ! गिरस्तां गोचरीकुरु ॥४६॥**

( राधा सेर्ष्यमवज्ञां नाटयन्ती तूष्णीं तिष्ठति )

**अरविन्ददृशामपश्चिमा त्वमपूर्वा बहुरूपलीलया ।**
**कपटोद्धटनाददक्षिणा न कथं वा भवितासनुत्तरा ॥४७॥**

---

स्वमेव ध्वनिमातन्वानः कृष्णः प्रेयसीनां पल्लवहस्ताहतिं प्रमोदभूमिं मन्वानः राधिकायाः रतौत्सुक्यमनुमाय निर्धूतशालीनतया सखेलस्मितं राधामाह **घट्टशुल्केति** – हे हेमवद्गौराण्यङ्गानि यस्याः सा तादृशि सुवर्णवर्णे राधे । ( औपचारिकतया ) घट्टशुल्कस्य प्रदानाय ( आभ्यन्तराकूत्या ) गुहायां गिरिकन्दरायामेकान्ते आतिथ्यस्य निधुवनोत्सवरूपस्य सत्कारस्य ग्रहाय च ते स्पृहा अस्ति, अतः किमिति व्यञ्जनया, तां स्पृहां गिरो वाचां गोचरीकुरु विषयतां नय स्फुटमभिधया कथयेत्युक्त्वा तां हेपयामास । अनुष्टुप् वृत्तम् ॥४६॥

स्वाभिप्रेतमपि अवहित्थयोपेक्षमाणा कथं रहस्यमयमेवमाहेत्येर्ष्या, मा तावदिति मुधा धैर्यमाभासयन्तीत्यवज्ञा, ताभ्यां सह भावं नाटयन्ती राधा मौनं सम्मतिलक्षणमिति क्रमात्तूष्णीं तिष्ठति लज्जावशात् ।

अत्रावसरं प्राप्य तस्याः कान्दिशीकतां बोधयन् न कस्यां दिशि त्वमसीति श्लेषेण दिशां नामनिर्देशेन तां सम्बोधयति कृष्णः **अरविन्देति** – अरविन्ददृशां कमलाक्षीणां ललनानां ( निर्धारणे षष्ठी ) त्वमपश्चिमाऽसि अन्यूनाऽग्रवर्तिनी, अपि च

---

कृष्ण — [विनोद करते हुए स्मितपूर्वक] अरी सुवर्णसदृश गौराङ्गि ! चूंगी चुकाने अथवा गिरिगुहा में आतिथ्य ग्रहण करने की तुम्हारी इच्छा है, उसे वाणी से स्पष्ट कह दो ॥४६॥

( राधा ईर्ष्याभरी अवहेलना का अभिनय करती हुई चुपचाप खड़ी रहती है )

तुम कमलनयनी प्रमदाओं में किसी से पीछे नहीं (अपश्चिम) हो ; रूप के विविध विलासों में अपूर्व हो; तुम्हारे द्वारा चुंगी चुराने के कपट के खुल जाने से तुमने दाक्षिण्य खो दिया है (=तुम अदक्षिणा हो गई हो);

---

KRSNA : ( *playfully smiling* ) 46. Gold-complexioned one ! if you have a desire to pay the toll and / or to accept hospitality in a cave, give expression to it in words.

( *Rādhā stands quiet, enviously pretending disregard* )

47. Among the lotus-eyed you are behind none ( = *apaścimā* ) hence you have no West ( *paścima* ); with your manifold charms you are unprecedented

नान्दीमुखी — ( मन्दमन्दमुपसृत्य ) णअणाअविन्द,[1] भअवदी सन्दिसदि । [ नयनारविन्द ! भगवती सन्दिशति । ]

बहु प्रभूत यद्रूप सौन्दर्यं तस्य लीलया विलासेन ( करणे तृतीया ) अपूर्वा अद्वितीया एवं त्व पश्चिमतो बाह्या पूर्वदिग्भागतो बाह्या गुणोत्कर्षात् – तत्रापि पराजयहेतुमपकर्षं द्योतयति – कपटस्य नर्मच्छलम्योद्घाटनात् रचनात्त्वमदक्षिणाऽननुकूला परच्छन्दानुवर्त्तित्ववश्या एवं त्व दक्षिणदिग्बाह्या अत कथ वा अनुत्तरा उत्तरप्रदानविमुखी न भवितासि अपितु स्वीयादाक्षिण्यवशान्मनोरथपूर्तौ क्षमा न भवसि, कथं न भविता यत्र कात्रुमाश्रित्य पश्चिमादिदिक्नयाश्रयहीना कथमुत्तराश्रयहीना त्व भवितुमर्हसि, चतुर्दिक्ष्वन्यतमा त्वाधारभूतेनाश्रयणीयैव स्वस्थितये, अत त्वमनुत्तरा न कथमपि भवितासि, उत्तरप्रदानेन नूनमनुग्राह्योऽयं तावकीनो जन । एवं चतस्सृषु दिक्ष्वपि न कुत्रचिदाधार प्राप्तवती त्व नून कान्दिशीकतामासेति समञ्जसमेवेति ध्वनि । न विद्यते उत्तरा प्रगुणा यस्या सा अनुत्तरा सर्वोत्कृष्टा कथ न भवितेति श्लेषेण प्रशसावचनम् । स्वव्यवहारवशाद्दिक्नयच्युता त्व अनुत्तरा वा उत्तरदिग्विहीना वा अपि कथ न भवसि अपि तु भवस्येवेति, न ते कुत्रचित् स्थितिरिति तात्पर्यं वापद अनुत्तरेति पदेन सयोज्य कथ प्रश्ने गृहीत्वा गृह्णन्ति केचित् ।

एव श्लेषेण गर्भवक्रोक्तिप्रधान ध्वनिसनाथमिद पद्यम् । प्रसादमाधुर्ये गुणौ, मध्यमपाञ्चाली रीति समस्तपदघटिता, स्थाने प्रयुक्तश्चात्र वियोगिनी नाम वृत्तम् सुन्दरीत्यस्यापर नाम ॥४७॥

प्रक्रान्तस्योपक्रमस्यैकरवता रसापकर्षकारिणी मा भूदित्युद्दिश्य भगवत्या पौर्णमास्या सन्देशहारिणीं नान्दीमुखीमुपस्थापयति **नयनेति** – हे नयनारविन्द कृष्ण ! भगवती सन्दिशति वार्तया इत्यर्थ ।

---

[ यो तुम्हारे लिये पश्चिम, पूर्व और दक्षिण दिशाओं का आश्रय न होने पर ] तुम अनुत्तर (उत्तर के बिना) किसी भी तरह रह नहीं सकती ॥४७॥

नान्दीमुखी— ( *धीरे धीरे निकट आती हुई* ) हे *कमलनयन ( = मेरे नयनों को कमल जैसे सुहावने )* ! भगवती ने सन्देश भेजा है ।

( *apurva* ), hence you have no East (*purva*), your fraud having been exposed you have become uncivil (*=adakṣinā*), hence you have no South (*dakṣina*), under the circumstances how can you help becoming the most attractive and unable to answer and depriving yourself of the North ( *anuttarā* ) as well

NĀNDĪMUKHI ( *slowly drawing near* ) Oh dear one ! pleasing to the eyes like a lotus ! here is a message from the Revered Paurnamāsī

---

1 णाअरिन्द = *नागेन्द्र !* — इति पाठान्तरम् ।

कृष्णः — नान्दीमुखि ! सत्वरमावेदय किमाज्ञापयति तत्रभवतीति।

नान्दीमुखी — एसा भणादि– राहीमुहाओ अम्ह वालिआओ अज्ज हेअंअवीणं घेत्तूण जण्णे गमिस्सन्ति । ता इमाणं घट्टदाणे अणुऊलेण होदव्वं सुहंजुणा । [ एषा भणति– राधाप्रमुखा अस्मद्बालिका अद्य हैयङ्गवीनं गृहीत्वा यज्ञे गमिष्यन्ति । तदेतासां घट्टदाने अनुकूलेन भवितव्यं शुभंयुना इति । ]

कृष्णः — ( प्रमोदमिवाभिनीय ) मूर्द्धनि गृहीतोऽयं महाप्रसादः । ( पार्श्वतोऽवलोक्य ) सखे मधुमङ्गल ! सुमधुरं खलु मिहिरोपासिकानां किशोरीणां हैयङ्गवीनमिति गोकुले गरीयसी प्रसिद्धिः । ततः समुचितेऽपि

---

किमिति जिज्ञासुः कृष्णः अयि नान्दीमुखि ! सत्वरमावेदय भगवत्याः सन्देशं किमाज्ञापयति सा इत्यौत्सुक्यं प्रदर्शयति ।

नान्दीमुखी प्रतिवक्ति **एषेति** — सा प्राह यत् राधाप्रमुखाः अस्मद्बालिकाः गोपकन्याः अल्पवयस्काः अद्येत्यादि स्पष्टम् । "शुभंयुः शुभान्वितः" — इत्यमरः । शुभं यातीति शुभंयुः सौभाग्यभाङ्मङ्गलशाली । घट्टशुल्कादानस्यायं स्ववसर इति प्रमोद-मिव प्रदर्श्य सखायं सम्बोधयति कृष्णः **मूर्धनीति** — मूर्धनि शिरसि गृहीतः स्वीकृत इत्यर्थः । सखे मिहिरोपासिकानां सूर्याराधिकानां किशोरीणां प्रथमयौवनवतीनां हैयङ्गवीनं सुमधुरमिति गोकुले गरीयसी महती प्रसिद्धिः । ततः ख्यातत्वाद्महर्घत्वाच्च प्रतिटङ्कं

---

कृष्ण — नान्दीमुखि ! तुरन्त सुनाओ भगवती का क्या आदेश है ?

नान्दीमुखी — वह कहती हैं — "राधा आदि हमारी बालिकाएँ आज नवनीत लेकर यज्ञ-स्थल पर जा रही हैं, अतएव चुंगी के विषय में मङ्गलाभिलाषी तुम्हें उनके प्रति अनुकूल रहना चाहिए ।

कृष्ण :— (प्रमुदित होने का अभिनय करते हुए) उनकी यह कृपा सिर आँखों पर । (बगल में देखते हुए ) सखे मधुमङ्गल ! इन सूर्योपासिका गोपिकाओं का माखन बहुत मधुर होता है – ऐसी गोकुल में प्रसिद्धि है। अतएव

---

KṚṢṆA : Nāndīmukhi ! report at once ; what does her holiness command ?

NĀNDĪMUKHĪ : She says, "Our girls, Rādhā and others, will go today to the place of sacrifice with fresh butter, you, the blessed one, have to be lenient in exacting toll-tax from them."

KṚṢṆA : (*pretending to be happy*) This great favour of revered Paurṇamāsī is accepted on my head. (*looking sideward*) friend Sumaṅgala ! it is well-known in Gokula that the fresh butter carried by the maidens who worship

प्रतिटङ्कं हेमटङ्कत्रये स्फुटमेकटङ्ककनिष्ठटङ्कणेन गणय शुल्कवित्तानि यदमूषु भगवत्याः पक्षपातिता ।

मधुमङ्गल — पिअवअस्स ! ( प्रियवयस्य ! )

टङ्कैश्चतुर्भिः कर्षः स्यात्तैश्चतुर्भिर्भवेद् पलम् ।
भवेत्तुला पलशतं भारः सार्द्धिंशतिस्तुला ॥४८॥

त्ति गणणावेइणो भणन्ति । एसो वणो राहिआदिणो पत्तेअ महाभारो ज

---

हेमटङ्कत्रयरूपशुल्कस्यौचित्येऽपि तत्र एकटङ्केन कनिष्ठेन न्यूनतमेन टङ्कणेनाकलनेन यावन्ति भवेयु शुल्कवित्तानि तावन्ति गणय, यत अमूषु ( विषयसप्तमी ) एतासां किशोरीणा विषये भगवत्या पौर्णमास्या पक्षपातिता सौहार्दं वर्त्तते ।

आदौ गणनाकोष्ठक स्मारयन्नाह मधुमङ्गल प्रियवयस्य कृष्ण सम्बोधयन् **टङ्कैरिति** — अत्र पुराकाले भारपरिमाणग्रहणव्यवस्थाऽवधेया, या तावत् —

| | |
|---|---|
| १ कृष्णला ( गुञ्जा ) | = १ रक्तिका ( रत्ती ) |
| ५ रक्तिका | = १ माष ( मासा ) |
| ४ माष | = १ टङ्क ( टाका ) |
| ४ टङ्क | = १ कर्ष |
| ४ कर्ष | = १ पलम् ( = १६ टङ्का ) |
| १०० पलम् | = १ तुला ( तोला ) ( = १६०० टङ्का ) |
| २० तुला | = १ भार ( = ३२००० टङ्का ) |
| ५० भार | = १ महाभार ( = १६००००० टङ्का ) ॥४८॥ |

इति गणितवेदिन गणितज्ञा भणन्ति ।

---

हर टक नवनीत के लिए तीन सुवर्ण टङ्क चुंगी उचित होते हुए भी कम से कम एक टक क हिसाब से चुंगी गिनी जाय, कारण, भगवती का इनके प्रति पक्षपात ह ।

मधुमङ्गल — प्रिय मित्र ! चार टक का एक कर्ष, चार कर्ष का एक पल, १०० पल की एक तुला और बीस तुला का एक भार होता है – ऐसा गणितज्ञ कहते हैं। राधिका आदि सखियाँ तो प्रत्येक महाभार के बराबर हैं – यह स्वय

---

the Sun is extremely sweet So, while it is only proper to calculate toll-tax at the rate of three gold *tankakas* per *tanka*, now that the revered Paurnamasi is favourably disposed towards them, you my calculate the toll at the minimum rate reduced to one *tankaka*

MADHUMANGALA 48. Four *tankas* make one *karsa*, four *karsas* make one *pala*, a hundred *palas* make one *tulā*, and twenty *tulas* make one *bhāra* - so do the arithmeticians

ललिदाए अप्पणो मुहेण भणिदं, "हला इमिणा महाभारेण किलिट्ठासि त्ति"।
[इति गणनावेदिनो भणन्ति। एष पुनः राधिकादेः प्रत्येकं महाभारः यत् ललितया आत्मनो मुखेन भणितम् "हला अनेन महाभारेण क्लिष्टासीति"।]

कृष्णः — (स्मितं कृत्वा) ततस्ततः।

मधुमङ्गलः — भाराणां पंचासेण महाभारो भणिज्जइ। अदो ज्जेव पंचाणं गोइआणं हेअंगवीणेहिं टंकाणं असीदिलक्खाहिं होंति। परं पि घट्टआल-वट्टण-णिव्वाहस्स टंकलक्खचउक्कं मए वड्ढिदं। [भाराणां पञ्चाशता महाभारो भण्यते। अत एव पञ्चानां गोपिकानां हैयङ्गवीनैष्टङ्कानामशीतिलक्षाणि भवन्ति। परमपि घट्टपालवेतननिर्वाहाय टङ्कलक्षचतुष्कं मया वर्द्धितम्।]

---

राधिकादीनां शिरसि प्रत्येकं महाभारोऽस्तीति स्वयं ललितया पूर्वं कथितं 'महाभारेण क्लिष्टासीति'। ललितया महाँश्चासौ भारः इत्यर्थे प्रयुक्तं महाभारपदं परिमाणविशेषवाचकत्वेनात्र ग्रहणादत्र वक्रोक्तिः।

एवं महाभारं प्रत्येकं वहन्तीनां पञ्च गोपिकानां ८०,००००० (= अशीतिलक्षाणि) टङ्कानां भवन्ति। तत्र घट्टपालस्य निर्वाहाय जीविकार्थं चतुष्कं लक्षाणां मया सङ्कलितम्। एवं साकल्येन चतुरशीतिलक्षाणि टङ्कानां शुल्कत्वेन निर्धारितानि भवन्ति।

---

ललिता ने अपने मुख से कहा, "हला, इस महाभार से तुम पीड़ित हो रही हो।"

कृष्ण — (मुसकराते हुए) तो फिर ?

मधुमङ्गल — पचास भार के बराबर एक महाभार होता है। अतः पाँच गोपिकाओं द्वारा लिए हुए नवनीत पर अस्सी लाख टङ्क चुंगी होती है, जिसके अलावा घट्टपाल के निर्वाह के लिए चार लाख टङ्क और मैंने बढ़ा दिये हैं।

---

calculate. Here again, each one of them - Rādhā and others - is with a *mahābhāra* as confessed by Lalitā in her own words when she said, "friend Rādhā! you are afflicted with this *mahābhāra*."*

KṚṢṆA : *(smiling)* Well, then !

MADHUMAṄGALA : Fifty *bhāras* are said to make one *mahābhāra*. Accordingly the number of *taṅkas* for the fresh butter of five cowherd maids comes to eighty lakh *taṅkas*. But I increased the amount by four lakh *taṅkas* in order to provide for the subsistence of the toll-chief.

---

*pun on the word "*mahābhāra*" : 1. great weight in which sense Lalitā used the word; 2. coins (= 16,00,000 *taṅkas*) in which sense Madhumaṅgala means it.

कृष्ण — सखे रसलुब्ध ! वर्द्धितमिति मृषोक्तम् । नूनमुत्कोचरोचनया गणने सङ्क्षिप्तिरेवाचरिता । यदत्र भवद्गणनया हेमटङ्काना चतुरशीति-लक्षमात्र सिद्धम् ।

( मधुमङ्गल कृष्णस्य कर्ण मुख विन्यस्य कथनमुद्राञ्चामिनीय किमप्यकथयन्नेव विश्लिष्यति । )

[कृष्ण —] ( सस्मितम् ) आम् आ विज्ञात विज्ञातम् । सम्यगाचरितम् ।

---

तत्र साक्षेपमिव कृष्ण आह सखे रसलुब्धेति — रसे गोरसे नवनीते लुब्ध । अशीतिलक्षोऽपार त्वया घट्टपालस्य निर्वाहाय लक्षाणा चतुष्क वर्धितमिति मृषा मिथ्या उक्तम् — यत राजस्वस्य चतुर्थोऽश घट्टपालस्य भवतीति नियमात् लक्षाणा विंशतिर्धनीयाऽऽसीत्तत्र नूनम् न्यूनीकृते शुल्के उत्कोचस्य रोचनया स्वादनाय किञ्चिन्नवनीतमेतास्ते दास्यन्तीति लोभात् गणने सङ्क्षिप्ति न्यूनता एव आचरिता सम्पादिता, यत् तत्फलस्वरूपेण गणनया शुल्कयोगे हेमटङ्काना केवल चतुरशीति-लक्षमात्रमेव सिद्धम् — नो चद्वस्तुतस्तु कोटिरेव सिद्धा भवेदिति भाव ।

मधुमङ्गलस्तत्रोपरि कृष्णस्य कर्णे मुख विन्यस्य किञ्चिद्वदलेवेत्यभिनयन् किमप्यनुक्त्वैव कृष्णकर्णात् मुख विश्लिष्यति दूरीकरोति ।

कृष्णस्तावत् किमपि त्वदुक्त बुद्धमिति मिथ्यैव नाटयन् आमाम् — विज्ञातमिति वीप्सया भणति — किं विज्ञातमिति अनुमित सति पौराणनये

---

कृष्ण — अरे रस के लोभी मित्र ! "बढ़ा दिया है-" यह बात तुम्हारी गलत है। वस्तुत घूस की लालच से तुमने कमी ही की है। कारण, तुम्हारे हिसाब से तो कुल चौरासी लाख ही बने।

[ मधुमङ्गल कृष्ण के कान के पास अपना मुँह लगाकर कुछ कहने का अभिनय करता हुआ कुछ भी न कहकर जुदा हो जाता है ]

हा, हा, मैं समझा । तुमने ठीक किया । तो फिर हिसाब के

---

KRSNA Friend, greedy of butter ! that you have increased the amount is a lie In fact you have been conservative in the hope of getting butter in gratification, for, according to you it has come only to eighty four lakhs of gold *tankas*

*(Madhumangala puts his mouth in the ear of Krsna, and gesticulating as though he is whispering something, withdraws it without saying anything )*

Ah ! yes, I follow Well done So then effort may be made to see that these young women heap up the

यदत्र गणितवित्तानि यथा झटित्यमूर्घट्टचत्वरे कूटयन्ति तथोद्यमः क्रियताम् ।

चित्रा — दाणीन्द ! जइ पंच गागरिआणं सुलुक्कं च्चेअ चऊरसीदि-लक्खप्पमाणं संवुत्तं तदो ण जाणे मोल्लं वा केत्तिअ[1] ? [ दानीन्द्र ! यदि पञ्च-गर्गरिकाणां शुल्कमेव चतुरशीतिलक्षप्रमाणं संवृत्तं ततो न जाने मूल्यं वा कियत् ? ]

कृष्णः — चित्रे ! मैवं ब्रवीः कथमन्यथा दीर्घदर्शिनो याजकास्ते निर्भरमनर्घाणि विश्राणयन्ति मणिमण्डलानि !

---

जीवानां चतुरशीतिलक्षयोनयो मन्यन्ते, प्रतिजाति यदुत्कृष्टं तद्रत्नमभिधीयते एवं चतुरशीतिलक्षजीवजातरत्नमिति मूल्यं निर्धारयितुमीदृशी गणना व्यवस्थापितेत्यूहः सङ्गच्छते । तत्स्वीकृत्य कृष्णः प्राह **तदत्रेति** — एवञ्चेत् गणितवित्तानि यथा अमूः गोपिकाः झटित्येव घट्टचत्वरे कूटयन्ति निष्कास्य अर्पयेयुस्तथोद्यमः क्रियतामिति । वस्तुतः चुरादिगणपठितः कूटधातुरप्रदान-निन्दन-दहनार्थकः, किन्तु झटितिप्रदानार्थे प्राकृतभाषायां "कूड़ना"— इति व्यवह्रियमाणस्य धातोः संस्कृतरूपान्तरं (backwardization) भाषाशास्त्रीयार्थान्तरणरूपमेवेति विज्ञेयम् ।

घट्टाधिकारिणां स्वैरितां गणितज्ञतां प्रति विस्मयमाना चित्रा प्राह — **दानीन्द्रेति**— घट्टप्रमुख ! नवनीतस्य पञ्च गर्गरिकाणां घटीनां शुल्के यदा एतावद्भवति तदा तासां कियन्मूल्यं स्यादिति न जाने ।

कृष्णः प्रतिवक्ति **चित्रे इति** — मा एवं ब्रवीः वादीः, अतिशयमूल्यं नो चेदासां गर्गरीणां ( लक्षणया तत्राहितनवनीतचयस्य ) कथं नाम दीर्घदर्शिनः मूल्यविज्ञातारो याजकास्ते सुप्रसिद्धाः निर्भरं निःसङ्कोचम् अनर्घाणि मूल्यवन्ति मणीनां मण्डलानि राशीन् विश्राणयन्ति वितरन्ति ।

---

मुताबिक चुंगी का पैसा ये चौकी पर चट पट गिरा दें ऐसा प्रयत्न करो ।

**चित्रा** — हे दानीन्द्र ! यदि पाँच ( माखन की ) गगरियों पर चुंगी ही चौरासी लाख टंक बनती हो, तो उन गगरियों का मोल क्या होगा ?

**कृष्ण** — चित्रा ! ऐसा मत कहो, यदि गगरियाँ भारी मूल्य की न हों तो वे दूरदर्शी याजक क्योंकर निस्सङ्कोच इनके बदले मणिजटित अनमोल आभूषण देते हैं ।

---

calculated amount of coins at once at the counter.

CITRĀ : Oh chief ! if the toll-tax on five pots of fresh butter alone amounts to eighty-four lakh *tankas*, I wonder, what would be the price of butter itself ?

KRṢṆA : Citrā, donot say so; were it not so exorbitant in price, how would the prudent sacrificers offer invaluable jewels for it ?

---

1. केत्तिअम् – इति पाठभेदः ।

नान्दीमुखी — पुक्खरेक्खण ! दुक्करं क्खु इमाण एत्थ चउरसीदिलक्खाणं दाणं, ता अणुकंपिअ किं पि समाहाणं चिंतेहि । [पुष्करेक्षण ! दुष्करं खलु एतासां चतुरशीतिलक्षाणां दानम्, तदनुकम्प्य किमपि समाधानं चिन्तय ।]

मधुमङ्गल — पिअवअस्स ! णन्दीमुहिए सुत्तिदं एक्केक्को चउरसीदिलक्खजीअजाढरूवेहिं भूइट्ठं वरिट्ठरूआओ होंति इमाओ । [प्रियवयस्य ! नान्दीमुख्या सूत्रितम् एकैकशश्चतुरशीतिलक्षजीवजातरूपेभ्यः भूयिष्ठ वरिष्ठरूपा भवन्तीमा ।

( इत्यर्धोक्ते स्मितं कृत्वा मुखं व्यावर्तयति )

---

शुल्कस्य भूयस्त्वमामनन्ती नान्दीमुखी तल्लघूकरणाय निवेदयति **पुष्करेक्षणेति** — पुष्करेक्षण कमलनयन ! एतासां ( कर्तरि षष्ठी ) चतुरशीतिलक्षाणां दानं दुष्करं दुःसाध्यं खलु, तदनुकम्प्य कृपालुर्भूत्वा किमपि समाधानं न्यूनतापादनेन व्यावहारिकरूपं चिन्तयेत्यनुनयति

अनन्तरं स्वार्थघटनपटीयान्मधुमङ्गलो व्याहरति **प्रियवयस्येति** — नान्दीमुख्या सूत्रितं समासेन निर्दिष्टं यदेता एकैकशः पद्मस्तु एका एका अपि चतुरशीतिजीवजातेषु प्रशस्तेभ्य इति जीवजातरूपेभ्य ( प्रशंसायां रूपप् प्रत्ययः ) अथवा जीवस्य कृते जातरूपाणि सुवर्णटङ्कानि तेभ्यः भूयिष्ठमतितरां वरिष्ठं रूपं यासां ताः इमा भवन्तीति — [ इति अर्धमेवोक्त्वा स्मितं कृत्वा मुखं व्यावर्तयति अपनयति । ]

---

नान्दीमुखी — अरे कमलनयन ! चौरासी लाख देना तो इनके वस का नहीं है, दया कर कुछ समाधान निकालो ।

मधुमङ्गल — प्रिय मित्र ! नान्दीमुखी ने सङ्केत किया है कि इन में से एक एक चौरासी लाख सुवर्ण टंक तथा जीवर्ग से कहीं अधिक मोलवाले रूप की है ।

(यों आधी बात कह कर मुसकराता हुआ मुँह फेर लेता है ।)

---

NANDĪMUKHĪ Oh lotus-eyed Kṛṣṇa ! it is difficult for them to pay eighty-four lakhs of *taṅkas*. Kindly, therefore, think of some way out to reduce the amount

MADHUMANGALA Dear friend ! Nāndīmukhī pithily suggests that each one of these (maids) is infinitely superior to eightyfour lakhs in value † (*Half-spoken he smiles and turns away his face*)

---

† Their beauty outweighs the value of 84 lakhs — of gold coins as well as other species of creation.

कृष्णः — सखे ! सम्यगाकलितम् । तेनात्र काप्येकतरा गृह्यतामिति नान्दीमुख्याः शिक्षाचातुरी ।

ललिता — (सोत्प्रासस्मितम्) एवं क्खु मणोरहमेत्तेण दक्खाभक्खणं अदक्खस्स लोलुह-कीरजुआणस्स । [एतत्खलु मनोरथमात्रेण द्राक्षाभक्षणमदक्षस्य लोलुपकीरयूनः ।]

कृष्णः — [1]नातीव तारतम्यवतीष्वप्येतासु ललिता जीवातुरेव राजीवलोचना मह्यमभिरोचते ।

---

तत्तात्पर्यसूत्रं गृहीत्वा कृष्णः स्वनिर्णयमुद्घोषयति **सखे इति** — सम्यक् आकलितं बुद्धम् । तेन एवम्भेदेन एतासु [ (यतश्च निर्धारणम्) ; निर्धारणे च सप्तमी ] काऽपि एकतमा गृह्यतामिति नान्दीमुख्याः शिक्षाचातुरी निर्देशमहिमा ।

निर्णयमनुमाक्षिपन्ती सोत्प्रासेनोपहासव्यञ्जकेन स्मितेनाहान्योक्त्या **एतदिति** — एतद् एकतमाग्रहणकल्पनं नाम मनोरथमात्रेण अभिलषणीयेन अदक्षस्य अपटोः लोलुपस्य रसास्वादलुब्धस्य कीरयूनः शुकशावकस्य द्राक्षाभक्षणम् । अत्रान्योक्तिः निदर्शनालङ्कारश्च । व्यञ्जनया अदक्षस्य केवलं मनोरथमात्रावगाहिनः अक्रियाकारिणः यथा सङ्कल्पितमेव मृद्वीकाभक्षणं भवति तथैव तवापीति भावः । एवं प्रोत्साहितः कृष्णः झगिति स्वाभिनिवेशं प्रकटयति **नातीवेति** – एतासु कतरा शोभनतरा कतमा शोभनतमा वेति तरप् तमप् चेति तरतमौ तयोर्भावस्तारतम्यम् तदवधारितदयो नातीव प्रतिभाति सर्वासां समानरूपत्वात्तथापि एतासां जीवातुः प्राणभूता राजीवलोचना ललिता मह्यमभिरोचते नितरां रोचते ।

---

कृष्ण — मित्र ! तुमने ठीक ही समझा है—तो फिर इन में से किसी एक को रख लो—यही नान्दीमुखी की चतुर राय है।

ललिता — यह तो किसी अकुशल, लालची तोते के द्वारा मनोरथ मात्र से अंगूर खाने जैसी बात है।

कृष्ण — इन सखियों के बीच कोई रूप में ख़ास कमी-बेशी नहीं है; तथापि इस मण्डली की प्राणरूपा, कमल जैसे नयनवाली ललिता ही मुझे पसन्द है।

---

KRṢṆA : Friend, well-reckoned so that any one of them may be accepted (in lieu of toll-tax). That is Nāndīmukhī's artifice of suggestion.

LALITĀ : *(sarcastically smiling)* This, indeed, is eating grapes only in desire by an unskilled, yet a greedy parrot.

KRṢṆA : While there is not much to choose among these belles who, being so similar, donot admit of any gradation as better or best, only the lotus-eyed Lalitā, the very life of life, appeals to me most.

---

1. "भिदा" इत्यधिकः पाठः क्वचित्।

वृन्दा — निकुञ्जयुवराज ! निह्नुतमणिमण्डनेयं राधा। तदेषा भूरि-भूषणभूषिता ललितैव शुल्ककार्याय पर्याप्नोति।

कृष्ण — सेयं मुग्धे शिखरदशना पद्मरागाधरोष्ठी
राजन्मुक्ता स्मितमधुरिमा चन्द्रकान्तस्य बिम्बा।

---

रुच्यर्थे प्रीयमाणस्य ललितार्थस्य विवक्षाप्राधान्यादभ्युपसर्गबलं विहाय मह्यमित्यत्र कारकविभक्ते बलीयस्त्व प्राचम्। अत्र जीवातुरित्यत्र रूपकं, राजीवलोचनेत्यत्र लुप्तोपमा।

तमेवार्थं पुष्णन्ती वृन्दाऽऽह **निकुञ्जेति** — हे अमुष्य निकुञ्जस्य वनोद्यानस्य युवराज। इय राधा निह्नुतानि अन्तर्निहितानि मणिमयानि मण्डनानि यया साऽस्ति, (प्रत्युत) एषा भूरिभूषणै प्रचुराभरणै भूषिता ललिता एव, तत् सा शुल्ककार्याय पर्याप्नोति अलम्भविष्यति। एव ललिता प्रशसन्त्यपि राधामेव व्याजेन प्ररोचयति यतः साऽनाविष्कृतभूषणाऽधिक सम्पन्ना अन्यथाऽपि सैव निर्वेशयोग्येति व्याजस्तुतिरलङ्कार।

वृन्दया सह मन्वान कृष्णोऽपि तथैव राधैवापरिहेयेत्याह **सेयमिति** — हे मुग्धे वृन्दे, आपातत भूरिभूषणानि वीक्ष्य ललितापक्षपातिनि। इय तावद्राधा शिखरं पक्वदाडिमाभं माणिक्य तद्वद्दशनानि यस्या सा, पद्मरागो माणिक्यमणिस्तद्वदधरोष्ठो यस्यास्तादृशी, राजन्ति मुक्ताफलानि यस्या सा, स्मितस्य मधुरिमा यस्या सा, चन्द्रकान्तस्य मणे बिम्बा प्रतिच्छाया, उद्दीप्त भास्वरं यदिन्द्रोपलमिन्द्रनीलं

---

वृन्दा — निकुञ्ज के युवराज! यह राधा ही अपने मणिरचित आभूषणों को छुपाए हुए है। अत एव प्रभूत आभूषणो से विभूषित यह ललिता ही शुल्क के लिए पर्याप्त है।

कृष्ण — अरी भोली वृन्दा! देखो— जिसके अनारदाने जैसे दांत हैं, माणिक जैसा अधर है, चहरे पर मोती जैसी मुसकराहट की मधुरिमा है, चन्द्रकान्त जैसा मुखमण्डल है, ऐसी यह चमकीले इन्द्रमणि जैसी कान्तिवाले

---

VRNDĀ : O prince! Rādhā has hidden her jewels This Lalitā who is profusely decked with ornaments is, therefore, quite adequate to be equated with the toll-tax

KRṢNA : 49 O simpleton, look here this young Rādhā with her teeth like ripe pomegranate seeds, her lips like rubies, her sweet smile resembling brilliant pearls and her hair lustrous like shining sapphires is the

उद्दीप्तेन्द्रोपलकचरुचिः पश्य ही राधिकेति
त्यक्तुं युक्ता न किल तरुणी रत्नमालामहिष्ठा ॥४९॥
( इति राधामुप(मनु)सर्पतीति )

**राधा** — (लीलया साध्वसातिरेकमभिनयन्ती) **सहि विसाहे ! परित्ताहि परित्ताहि ।** [ सखि विशाखे ! परित्रायतां परित्रायताम् । ]

**विशाखा — भो दुव्वारवारण ! इमाए दुल्ललिदाए महावारीए**

---

तद्वन्नीला कचानां केशानां रुचिः कान्तिर्यस्याः तादृशी अस्तीति पश्य । ही विस्मयानन्दे। इति हेतोः रत्नमालया महिष्ठा सर्वश्रेष्ठा, अथवा रत्नानां माला यस्याः सा अत एव महिष्ठा परं महनीया अपि च तरुणी नवयौवना त्यक्तुं युक्ता न किल नूनमियमेवासादनीयेति भावः ।

अत्र सर्वत्र लुप्तोपमालङ्कारः, एकैकस्य गुणस्य ग्राह्यत्वेऽलम्भवत्वपि नैकगुणोपादानात्समुच्चयालङ्कारोऽपि । 'तन्वी श्यामा शिखरिदशने'ति कालिदासीयपद्यसच्छायमिदं पद्यमित्यवधेयम् । अत्र प्रसादमाधुर्ये गुणौ, अल्पवृत्तित्वाद्वैदर्भी रीतिः प्रायेण, गुणाख्यानरूपं नाट्यालङ्करणम् । मन्दाक्रान्ता च वृत्तम् ॥४९॥

[ इति एवं ब्रुवन् राधामुपसर्पति तामादातुं समीपं व्रजति ]

लीलया नाट्येन साध्वसातिरेकं भयाधिक्यमभिनयन्ती सखीं विशाखां साहाय्यं याचते राधा **सखि विशाख इति** — परित्रायतां रक्षतु रक्षतु भावाधिक्याद्वीप्सा ।

विह्वलां वीक्ष्य प्रियसखीं राधां विशाखा स्वतिभूमिं सरन्तं कृष्णं भर्त्सयन्तीवाह **भो इति** — दुर्वारः दुःखेन वारयितुं शक्यः हठिलश्चासौ वारणः तत्सम्बुद्धौ मत्तगज ! अस्याः दुर्ललितायाः दुरस्वभावायाः दुरतिक्रम्यायाः महावार्याः महत्या गजवन्धन्याः ["वारी तु

---

केशपाश से सुशोभित राधिका श्रेष्ठ तरुणिओं की पंक्ति में सबसे वरिष्ठ है — इसे छोड़ना उचित नहीं ।

( यों कहकर राधा की ओर आगे बढ़ता है )

**राधा** — (नख़रे के साथ अनन्त भयभीत सी) अरी विशाखा ! बचाओ, बचाओ ।

**विशाखा** — अरे उद्दण्ड गजराज ! इस दुर्ललिता गजबन्धिनी का अतिक्रमण

---

most precious garland of jewels (among beauties), and, therefore cannot be given up.

*(So saying he draws near Rādhā)*

**RĀDHĀ**: (*sportively gesticulating excess of fear*) Friend Viśākhā! protect me, protect me.

**VIŚĀKHĀ**: O, you uncontrollable elephant, when you get rid of this stiff and tough rope ( = difficult Lalitā ),

अदिक्कमे सवुत्ते चेअ चंपअलदादिवेड्ढिदाए अमीअ-सरसीए विगाहणं दे सुलहं । [ भो दुर्वारवारण ! अस्या दुर्ललिताया महार्याया अतिक्रमे सवृत्ते एव चम्पकलतादि चेष्टिताया अमृतसरस्या विगाहनं ते सुलभम् । ]

ललिता — हहो कुंम्भसम्भअ-पिअगिरिंदसिंदुर ! एसा जुत्ता ण क्खु अदिभूमी । [ हंहो कुम्भसम्भवप्रियगिरीन्द्रसिन्धुर ! एषा युक्ता न खल्वतिभूमिः । ]

वृन्दा — ( अपवार्य ) सखि ललिते ! चाटुभिरभ्यर्थ्यमानासि । मनागत्र

---

गजवन्धनी"—इत्यमर । ] अतिक्रमे भङ्गे सवृत्ते जाते सति एव चम्पकाख्यलतादिभिर्वेष्टितायाः अस्या, अमृतं मधुरं जलं तद्वत्या सरस्या विगाहनं मज्जनं ते सुलभम् भविता । यावत्त्वं गजबन्धन्या बद्धः तावत्त्वमतिक्रम्य चम्पकलतादिपरिसरं तत्र सरसीं यावदवगाहनाय गन्तुं न शक्नोषीति भावः । अत्रामृतस्य सुधारसस्य सरसीत्वेन विषय राधां निगीर्य विषयिमात्रोपग्रहणादध्यवसायस्य सिद्धत्वान्निगीर्याध्यवसानातिशयोक्तिरलङ्कारः, दुर्ललिता दुष्टा ललिता, चम्पकलतायाः सख्य, इत्येव भङ्ग्या नामोल्लेखाद् मुद्रालङ्कारश्च । वारणेऽत्र रूपकम् अन्योक्तिवशादन्यापदेशालङ्कारश्च ।

अनान्तरे कृष्णमतिभूमिं व्रजन्तमनुमन्वाना ललिता सप्रश्रयमाह हंहो इति — कुम्भाद्घटात् सम्भवो यस्य स अगस्त्यमुनि तस्य प्रियो यो गिरीन्द्रो विन्ध्यपर्वतः तदुद्भव हे सिन्धुर हस्तिन् ! विन्ध्ये वन्यगजा बहवो भवन्तीति प्रसिद्धिस्तत्रत्यगजस्यो-मत्तत्वं ख्यातम् । एषा खलु अतिभूमि, तवायं व्यवहारो नूनं मर्यादोल्लङ्घी — न ते शोभतेऽस्माकं पुरता वैयात्यमिति ।

विन्ध्यगजेति प्रतिपाद्येऽर्थे कुम्भसम्भवादिपदार्थापदानमत्र "उदधिजागृहजन्मभुव प्रसन्ना" इतिवन्निहतार्थ एव ।

परस्परं चाटुगर्भां नर्मकेलिं रस्यन्ती वृन्दा अपवार्यान्यैः श्रूयमाणं वक्ति ललिता प्रति सखीति — चाटुभिः प्रियोक्तिभिः अभ्यर्थ्यमाना असि त्वम् अनुनाध्यसे । मनाक्

---

हो जाय तो ही चम्पकलता आदि से घिरी हुई इस अमृत सरसी में अवगाहन करना तुम्हारे लिए सुलभ हो सकता है।

ललिता — अरे अगस्त्य ऋषि के प्रिय पर्वत के गजराज ! इस तरह मर्यादा अतिक्रमण उचित नहीं।

वृन्दा — (एक तरफ) सखि ललिता ! बड़ी चापलूसी से तू मनायी जा रही है।

then alone it would be easy for you to have a plunge in the nectar-lake ( = Rādhā ) surrounded by plants of Campā ( = Campakalatā ) and others

LALITĀ : Oh ! insolent Vindhya elephant, this kind of transgression is certainly not proper.

VṚNDĀ : ( *aside* ) Friend Lalitā ! you are entreated with coaxing words Please keep quiet for a moment Let's see

तूष्णीं भव। पश्यामो भावोद्भासितामनयोर्व्यावहासीम्।

कृष्णः — सद्मनर्दिनि ! किं पलायसे ? शुल्कमप्रदाय दुर्लभा ते पदादपि पदान्तरगतिः।

राधा — किं अह्मे वणिज्जाजीविआओ जं घट्टआलदो भएण पलाइस्सम्ह। [ किं वयं वाणिज्यजीविका यद्‌घट्टपालाद् भयेन पलायिष्यामहे। ]

कृष्णः — साधु, साधु। क्षणं स्थिरीभव। यावदेष ते पयोधरोपरि

किञ्चित्कालमतः तूष्णीं भव मौनं धारय। अनयो राधामाधवयोः भावोद्भासितां रतिप्रवणां व्यावहासीं व्यतिहारेण परस्परं प्रयुज्यमानाम् अवहासीं नर्मोक्तिं पश्यामः। अत्र अनुभूतिसामान्यार्थे दृशेः प्रयोगः न केवलं चाक्षुषप्रत्यक्षमात्रव्यवस्थितः। एतदन्तराले कृष्णः राधां सम्बोधयति **सद्मेति** — सद्मनि गेहे एव नर्दति शब्दायमाना भवतीति सद्मनर्दिनी। अत्र सद्मपदमुपलक्षणार्थकम् परिचितस्वजनसामान्यबोधकम्। ललितादिसखीजनेषु तदाश्रयेण परेष्वपि यथेच्छं प्रलापिनीत्यर्थः। तत्सम्बुद्धौ हे राधे ! किं पलायसे, शुल्कमप्रदाय पदादेकस्मात् पदान्तरं अन्यत्पदं यावदपि ते गतिः दुर्लभा दुस्साध्येत्यर्थः।

स्वीयं दार्ढ्यं बोधयन्ती राधा प्राह **किम् अम्ह** इति — अम्ह इत्यहोवाचकम्। किं वयं वाणिज्येन वस्तु-क्रय-विक्रयेण जीविका निर्वाहसाधनं यासां तादृश्यः स्मः यतः शुल्कविषये घट्टपालाद् भयेन पलायिष्यामहे — न वयं बिभीमः इति तात्पर्यम्। घट्टपालादित्यत्र भयहेतौ पञ्चमी।

एतन्निशम्य प्रत्युत्तररूपेण कृष्णो राधां भाययन्निव प्राह **साधु साध्विति** — समीचीनं पश्येयम् कथं न त्वं बिभेषि — क्षणं स्थिरीभव दृढतां धारय यावदेषोऽहं ते तव [ शिरसि ] पयोधरोपरि मेघमण्डलोपरि लक्षितां दृश्यमानां नक्षत्रमालां

---

कुछ देर चुप तो रह ताकि इन दोनों राधा-माधव-की परस्पर भावभीनी हँसी मज़ाक तो देखें।

**कृष्ण** — अरी घर में शोर मचाने वाली ! किधर भाग रही हो, चुंगी अदा किए बिना एक पैर भी हटना दुर्घट है।

**राधा** — क्या हमारा व्यवसाय वाणिज्य है कि हम घट्टीपाल के भय से भाग जाँयगी ?

**कृष्ण** — शाबाश ! क्षण भर टिकी रहो जब तक तुम्हारे पयोधर पर झूलती हुई नक्षत्रमाला को अपहरण करने के लिए मैं सज्ज हो जाता हूँ।

---

the mutual derision of these two (Rādhā & Kṛṣṇa) refulgent with emotions.

KṚṢṆA : O ! dunghill bird ! how - you run away ? You can't move even a *step without paying the toll-tax.*

RĀDHĀ : Are we traders to run away in fear from the Toll-chief ?

KṚṢṆA : Good ! good ! stand steady for a while please, as I get ready to take away the starry necklace seen on

लक्षितां नक्षत्रमालामपहर्तुं कल्यतामासादयामि ।

**राधा** — एसा सुदीहतमा तामसी सामा । ता कुदो कल्लस्स अब्भुग्गमासंका वि । [एषा सुदीर्घतमा तामसी श्यामा तस्मात्कुत कल्यस्याभ्युद्गमाशङ्कापि ।]

**कृष्ण** — (स्मितं कृत्वा) प्रोल्लसच्चण्डकरे प्रफुल्लपुण्डरीकेक्षणे विस्फुरति,

---

तारकाणा श्रेणिम् अपहर्तुं कल्यता प्रात कालत्वमासादयामि । "प्रत्यूषोऽहर्मुखं कल्यम्" — इति कोषवचनात् सूर्योदयवेलार्थे कल्यप्रयोग — एतादृश महदद्भुत कृत्वा ते दर्शयामीति भयहेतौ असाधारणक्रियाशालितोपपत्ति । श्लेषेण स्वेप्सित गमयति यदेषोऽहं तव पयोधरोपरि कुचमण्डलोपरि लक्षिता लसन्ती नक्षत्रमाला सप्तविंशति-मुक्ताघटिता मालामपहर्तुं कल्यता समर्थत्वम् आसादयामि । "कल्य सज्ज नीरोग-दक्षेषु" इति मेदिनी । अत्र श्लेषालङ्कार ।

कृष्णोक्तेर्द्वितीयमर्थमाकलय्यापि प्रथममेवार्थं परमार्थतो गृहीत्वा तथैव श्लेषेण प्रत्याह राधा **एषा सुदीर्घेति** — एषा तामसी तमसाऽन्धकारेण बहुला श्यामा कृष्णपक्षीया रजनी, तस्मात् हेतो कल्यस्याधुना प्रभातस्य अभ्युद्गमस्य आशङ्का सम्भावनापि कुत भवितुमर्हतीति शेष । श्लेषमर्यादया तामसी कोपवती श्यामा सुन्दरी तत्र कल्यत्वस्य सामर्थ्यस्याभाव, अपि च तामसी कृष्णपक्षीयेत्यनेन कृष्णानुकूल्येन वर्तमानाया कुत सामर्थ्यस्य प्रयोगावकाश इति निगूढव्यङ्ग्यार्थे तिरस्कृतवाच्यत्वम् । अपि च नक्षत्रमालाप्रे त्वं सुदार्घा ग्रथिलाकृष्याद्यतुमयोग्या तामसी नीलमणिघटिता श्यामा श्लक्ष्णेति च । अत्र श्लेषालङ्कार ।

तस्या वाक्यचातुरीप्रमुदित कृष्ण पुनस्तामात्मनि सूर्यत्वमारोपयन् व्याहरति स्मितपूर्वक **प्रोल्लसदिति** — प्रोल्लसन्तो देदीप्यमाना चण्डा करा यस्य तादृशि अपि च प्रफुल्लानि पुण्डरीकाणि सिताम्भोजानि एव ईक्षणानि लोचनानि यस्य तादृशि, सूर्ये विस्फुरति उदिते सति, तामसी श्यामा रात्रि, हारित अदृष्टता गत ताराणां नक्षत्राणाम्

---

[ >मेघमण्डल पर दिखनेवाली ताराओं की पंक्ति को लुप्त करने प्रभात बन जाता हूँ ।]

**राधा** — यह बहुत लम्बी काली रात है, इस समय पौ फटने का कोई अन्देशा नहीं है [> यह बहुत प्रचण्ड तमोगुणी श्यामा (तरुणी) है, माला अत्यन्त लम्बी है अत एव तुम्हारे समर्थ होने का कोई प्रश्न नहीं ।]

**कृष्ण** — (मुसकराते हुए) प्रचण्ड किरणों से देदीप्यमान, विकसित कमलरूपी नयनों से सुशोभित सूर्य के उदीयमान होते ही ताराओं की लम्बी

---

your breast (> as I await the daybreak for the stars shining on clouds to disappear)

**RĀDHĀ.** This is a long, dark night So, now, there is no apprehension of daybreak.

**KRṢNA:** *(smiling)* No sooner the Sun glowing with his hot rays and eyes in the form of full blown lotuses rises

हारिततारोरुहारा स्खलिततमिस्रवसना तामसी श्यामा स्वयमेव सदा पलायते ।

**राधा** — हन्त सूर ! राहुत्थाणे ण क्खु चंडअरस्स चंडिमा ।
[ हन्त सूर्य ! राहूत्थाने न खलु चण्डकरस्य चण्डिमा । ]

---

उरुः प्रशस्तः सुदीर्घो वा हारः कण्ठमाला यस्याः सा, अपि च स्खलितं संस्तं तमिस्रमेव वसनं परिधानं यस्यास्तादृशी भूत्वा स्वयमेव सदा प्राकृतिकनियमवशात् पलायते ।

रवौ उदिते सूर्यविकासीनि कमलानि उल्लसन्ति तान्येव सूर्यस्य नयनानि कल्प्यन्ते, तदा तारकाणि रजनीनायिकायाः मुक्ताहाररूपाणि निलीयन्ते, रजन्याश्च तमः एव नीलं वासोऽपि स्वयमेव संसते इति निसर्गवर्णनादत्र स्वभावोक्तिरलङ्कारः, चण्डकरेत्यत्र रश्मय एव कराः इत्यत्र श्लिष्टरूपकमितरत्र निरङ्गरूपकम् । स्खलितवसनेत्यादिविशेषणैः नायिकाव्यवहारसमारोपस्य गम्यमानत्वादत्र समासोक्तिरलङ्कारश्च । चण्डकरेति विषयिणा प्रकृतस्य विषयस्य कृष्णरूपस्य, श्यामा षोडशवार्षिकीति अभिधानमहिम्ना राधायाश्चात्राध्यवसानात् श्लेषेणान्यविशेषणानामपि निगीर्णार्थानुयोगित्वादत्र प्रशस्यः अतिशयोक्तिरलङ्कारः । तेन च प्रकृतार्थे प्रोल्लसन्तौ चण्डौ विक्रमिणौ करौ पाणी यस्य तादृशे, प्रफुल्लपुण्डरीकेक्षणे विकचपद्मनयने कृष्णे ( मयि ) विस्फुरति पुरत उपस्थिते सति श्यामा नवयौवना अत एव मुग्धा तामसी कोपवत्यपि सती भावोद्रेकवशाद्गलितवसना सदा निसर्गेणैव पलायते भयकम्पाद्यनुभावाभिभूताऽपसरतीति प्रतीयमानार्थचमत्कृतिः ।

आत्मनि सूर्यत्वमारोपयन्तं कृष्णं नर्मणा प्रतिवक्ति राधिका **हन्तेति** — हन्त इति विस्मये । हे सूर सूर्य [ प्राकृते 'सूर' इत्यस्य द्व्यर्थित्वात् शूर इत्यपि गृहीतेऽर्थे उपहासो व्यज्यते एव । ] राहूत्थाने राहोरुत्थाने न खलु चण्डकरस्य सूर्यस्य

---

कतार लुप्त हो जाती है, अन्धकार के आवरण को स्वयं ही खिसकाती हुई अँधेरी रात सदा भाग जाती है ।

[ > खिले हुए कमल के समान नेत्रवाले नायक के प्रचण्ड हाथ आगे बढ़ने पर चाहे कितनी तामसी श्यामा नायिका क्यों न हो, उसका चमकीला हार दोलायमान होने लगता है और उसका परिधान स्वयं शिथिल हो जाता है — और साथ साथ वह भी । ]

**राधा** — अरे सूर ( > सूर्य; शूरवीर ) राहु के उत्थान होने पर चण्डकर की प्रचण्डता कहाँ रहती है !

---

than the dark night disappears of her own accord with her beautiful necklace of stars snatched away and her garment of darkness dropped. ( > as Kṛṣṇa with his glowing fierce arms and full-lotus-like eyes appears, the angry beloved always submits with her beautiful starry necklace removed, and her dark clothes dropped. )

**RĀDHĀ**: What a pity ! O Sun ! at the rise of Rāhu the hot Sun can no longer retain his fierceness,

कृष्ण — पश्य दुर्विषहतायुतोऽयं चक्रलक्ष्मा । कथं तदुत्थानं सम्भाव्यते ।

**राधा** — ( विहस्य ) हंत ! फुक्कार-दुव्विसेण हदाजुद चक्कलक्खण, णाअरणाअ ! मोहदाइणं विसाण महासार किं त्ति उल्लासेसि । तुमं गब्भर गदुअ मुरलिआ-णाइणीं चुवेहि । [ हन्त, फूत्कारदुर्विषेण हतायुतचक्रलक्षण ! नागरनाग मोहदायिना विषाणा ( > विषाण ) महासार किमिति उल्लासयसि ? त्वं गह्वरं गत्वा मुरलिका नागिनीं चुम्ब । ]

चण्डिमा प्रचण्डत्वं प्रगल्भता ग्रासविषयीभूतत्वात् । [ प्राकृते प्रयुक्तस्य राहूत्थानेति पदस्य राधोत्थानेति संस्कृतेन विपरिणामे, हे शूर ! राधाया उपस्थितौ तव प्रागल्भ्यं न प्रचलिष्यतीति साक्षेपोक्ति । ]

कृष्ण राहोरुत्थानस्य सम्भावना प्रत्यादिशन्नाह **पश्येति**—[अत्र स्वस्य दक्षिणकरं विस्फार्य प्रदर्शयन्नाहेति नाट्यधर्मी अध्याहरणीय ।] पश्य अयं दुर्विषहता दुस्सहता तया युतं चक्र लक्ष्म चिह्न यस्मिन् तादृशोऽसौ कर. । मम पाणौ चक्र जृम्भते, तथा सति तदुत्थानं राहो प्रगल्भत्वं कथं सम्भाव्यते आशङ्क्यते — यतः चक्रात् स निभेति । पुरा तावदमृतवितरणप्रसङ्गे देवेषु निलयोपस्थितस्य राहोश्शिर मोहिनीरूपधारिणा हरिणा चक्रेण छिन्न इति पौराणिकी कथाऽनानुसन्धेया। दुर्विषेण हतान्ययुतान्यसङ्ख्येयानि प्रतिपक्षिणा येन तादृश इति श्लिष्टोऽर्थ , अथवा हतानि अयुतानि चक्रस्य लक्षणानि यस्य स तत्सम्बुद्धौ इति ।

श्रुत्वैतत् राधा विहस्य प्राह **हन्तेति**–फूत्कार वेगेन श्वासनिर्गमरतस्य दुर्विषेण हता या असह्यता तया युतमपि चायुतं चक्रलक्षणम् यस्य स तत्सम्बुद्धौ नागरेषु नागस्तस्यापि मोहदायिनं मूर्छाकरं विषाणं दन्तं महासारं महान् आसार धारासम्पात यस्मात् तत् विषप्रवाहि अथवा विषाणा महतीं शक्ति किमिति मुधव उल्लासयसि आस्फालयसि ? मन्दीभूतप्रभाव !

---

कृष्ण — देखो यह ( हथेली दिखाते हुए ) चक्र से अङ्कित है, जो कि असह्य है, अत राहु के उत्थान की कहाँ सम्भावना है ? ( कारण, चक्राङ्कित विष्णु को देखकर राहु घबराता है )

राधा — ( हँसकर ) अरे ! फूत्कार के कारण निष्प्रभ हजारों चक्रलक्षणों से अङ्कित नागर नाग ! ( नाग = श्रेष्ठ, गजराज, सर्प ) ! अब तुम कल्पित सामर्थ्य का आडम्बर क्यों रच रहे हो ? जाओ, अपनी गुफा में जाकर मुरली नागिन का ही चुम्बन करो ।

---

KRSNA — Look at this (my right palm) having the sign of a discus, the force of which is unbearable, how, then, is the rise of Rāhu possible ?

RĀDHĀ — (*laughing*) What a pity ! O city bred serpent, with your myriad hall-marks of discus destroyed by the deadly poison poured out by the hissing (of Kāliya serpent), why do you make a show of the great strength of your false (deadly outpour of) poisons ? Better go to a cave and kiss your serpent-spouse, the flute.

कृष्णः — शुल्कनागरि ! तथ्यमेव नागरनागः सुप्रतीकोऽयं यत् पद्मिनीनां वः करहाटकमाक्रष्टुकामो महासारं विषाणमुल्लासयति ।

**राधा** — पउमिणीए वराडअस्स वि अप्पदाणं जाणीहि । [पद्मिन्या वराटकस्याप्यप्रदानं जानीहि ।]

( इदमेव ते श्रेयो यत् ) त्वं स्वकीयं गह्वरं गत्वा स्वीयां मुरलिकारूपिणीं नागिनीं चुम्ब । इह नास्ति तेऽवकाशः इति ।

राधया प्रोक्तं नागरनागमिति परामर्शं स्वीकृत्य तदुपरि नर्म कुर्वाणः कृष्णो राधां सम्बोधयति **शुल्केति** — अयि शुल्कव्यवहारे नागरि चतुरिके, व्यञ्जनया शुल्केन लभ्ये नागरि सुन्दरि ! तथ्यमेव अयं नागरेषु चतुरेषु नागः इव श्रेष्ठः, अपि च सुप्रतीकः शोभनानि प्रतीकान्यङ्गानि यस्य सः, नागपक्षे सुप्रतीक इत्यष्टदिग्गजेष्वन्यतमस्य नाम । "ऐरावतपुण्डरीकवामनकुमुदाञ्जनपुष्पदन्तसार्वभौमसुप्रतीका अष्टौ दिग्गजाः ।" कमलवनप्रियो हस्तीति निसर्गः; अत एवाह स नागः पद्मिनीनां कमलनीनां पक्षे उत्तमस्त्रीणां करहाटकं शिफाकन्दं नायिकापक्षे करयोः हाटकं सुवर्णाभरणादिकम् आक्रष्टुकामः महासारं बलवत् विषाणं दन्तमुल्लासयति प्रवर्त्तयति । अत्र सर्वत्र श्लेषालङ्कार एव रूपकोपस्कारकः ।

नायिकापक्षे योज्यमानमर्थं गृहीत्वा राधा प्रत्युत्तरयति **पद्मिन्येति** — पद्मिन्या पद्मिनीलक्षणान्वितया नायिकया ( प्रकृते राधया ) वराटकस्य अपि, करहाटकं दूरे आस्ताम्, कपर्दकस्यापि [ कमलिनीपक्षे वराटको बीजकोपः तस्यापि ] अप्रदानं अदीयमानत्वं जानीहि । उल्लासयतु नागः कियन्तमपि स्वं विषाणं किन्तु कमलिनी तु

---

कृष्ण — शुल्क की अदायगी में चतुराई दिखाने वाली ! सचमुच यह नागरनाग ( १. श्रेष्ठ हाथी, २. चतुरों में श्रेष्ठ ) सुप्रतीक नामक दिग्गज ( > सुन्दर प्रतीक = अङ्ग से शोभित ) है, जो तुम पद्मिनियों ( १. उत्तम स्त्री, २. कमलिनी ) के करहाटक ( १, हाथ में धारण किये हुए सुवर्ण. २. कन्द ) को खींचने के लिए महासार (*बड़े बलवान्, २. धारासम्पात को करने वाले*) *अपने विषाण* ( १. शृंग; २. गजदन्त ) को उछाल रहा है ।

राधा — पद्मिनी का एक वराटक ( स्त्री पक्ष में कौड़ी, २. कमलिनी के पक्ष में बीज कोप ) भी मिलने वाला नहीं है — यह समझ लो ।

KRSNA : Oh clever assessee girl ! this handsome elephant is certainly a clever one, for he is projecting his strong tusk with a desire to uproot you, the water-lilies. ( > Certainly, *this polished* clever elephant ( *in myself* ) is spreading his strong hand to snatch the gold ornaments from the hands of the *Padminī* type of beautiful young women like you.

RĀDHĀ : Be sure that even a cowrie will not be available from *Padminī*.

कृष्ण — कामिनि ! वराटिकयापि किमात्मदानं कर्तुमुद्यतासि ? यदयमर्थग्रहिलश्चक्रवर्ती नाङ्गनाभिस्तुष्यति ।

राधा — ( सोत्प्रास विहस्य ) हन्त कूडघट्टमण्डलाहण्डल, प्पसीद प्पसीद । सुलुक्किदे सअं चेअ कारुण्णेणाणुगेण्ह इमं जण [ हन्त कूटघट्टमण्डला-

---

बीजकोषमपि न दारयति, नायिकापक्षे नागरनाग कियदपि चाटु करोतु नाम पद्मिनीत्वेन पराभूष्टा नायिका तु कपर्दमपि न दास्यति इति भाव ।

श्रीराधावचने 'अ प्पदाणम्' इति प्राकृतपदम् यस्य 'अप्रदानम्' इति सस्कृतम् । सभङ्गश्लेषेण पदमिदम् अप्प दाणम् ( > आत्म दानम् ) इत्यपि योजयितु शक्यम् । वराट वर स्वच्छन्दतया अटति कामनासु हिण्डते वराङ्गायेत्यसौ, तत स्वार्थे कनि वराटकेति रूपम्, तस्य वराटकस्येत्यत्र प्राकृत चतुर्थ्यर्थे षष्ठी, सस्कृते च सम्प्रदानस्थाने गर्हाया षष्ठी । एव विहितेऽन्वये भङ्गयन्तरेण चतुरा नायिका पद्मिनीरूपा वराटाय कृष्णायात्मदान प्रतिश्रुणुते — इति हार्दमाकूत विभाव्यम् ।

कृष्णस्तदेवाकूत परिगृह्य व्यतिकरेऽस्मिन् स्वयदूतीं राधा स्थाने कामिनीति सम्बोधयन्नाह **कामिनीति** — अयि प्रशस्त उद्रिक्त काम अस्या अस्तीति कामिनि ! ( अत्र प्राशस्त्यार्थे इति ) । वराटिकया तदर्थमपि किं त्वमात्मदान स्वाङ्गसमर्पण कर्तुमुद्यतासि, एवमसि मन्मथोन्मथिता शुल्कनागरी त्व, यद्वराटिकामात्रेण स्व दित्ससीति सोल्लुण्ठोपहास तत्राभीप्सितमप्यर्थं प्रत्यादिशन्निव शुल्कग्रहणस्यैव महत्ता दर्शयन्निवाह कृष्ण **यदयमिति** — यदय तव पुरो दृश्यमान चक्रवर्ती घट्टाधिकारी ( चक्रेण सह वर्तते असौ कृष्ण ) अर्थग्रहिल शुल्कद्रव्यस्यादाने यद्धाग्रह अङ्गनाभि न तुष्यति, स तु शुल्कमेवा-दित्सुरिति भाव ।

पूर्वाशयमेवाजयन्ती राधा पुनर्द्व्यर्थिना वचसा सोत्प्रास सोल्लुण्ठ हसन्ती कृष्णमाह **हन्तेति** — कूटघट्टमण्डलाखण्डल कूट कपटाचारी घट्टमण्डलस्याखण्डल इन्द्र , अथवा घट्टमण्डले सवसु घट्टेषु कूट शिखर प्रधान कूटघट्टमण्डल तस्य आखण्डल तत्सम्बुद्धौ हे

---

कृष्ण — अरी कामिनी ! एक कौड़ी से तुम आत्मदान करने उद्यत हो गई हो — यह अर्थग्रहण का हठी चक्रवर्ती अङ्गनाओं से सन्तुष्ट होने वाला नहीं है ।

राधा — ( उपहास करती हुई ) अरे चालबाज चुगी चौकी के मुखिया ! मेहरबानी करो, चुगी के मामले में तुम ही स्वय दया भाव से अनुगृहीत करो ।

---

KRṢNA Lustful woman ! are you prepared to give yourself in place of a cowrie ? This sovereign, who is relentless in pecuniary matters, is not satisfied with women (in lieu of money )

RĀDHĀ *( laughing in derision )* Rogue of a toll-chief ! please, please, you yourself kindly oblige these people ( i. e. us ) in the matter of toll-tax.

खण्डल ! प्रसीद, प्रसीद, शुल्ककृते स्वयमेव कारुण्येनानुगृहाण इमं जनम् । ]

कृष्णः — ( स्फुटं विहस्य ) चण्डि ! स्वार्थपण्डितासि, यदुपहासमुद्रयैव कृता काकुर्भङ्गिभरेण भवत्या वास्तवे पर्य्यवसाय्यते । ततस्तथ्यमाकर्णय —

**गव्यभारभरभुग्नकन्धरां त्वद्विधां विधुरगात्रि ! मद्विधः ।**
**स्प्रष्टुमप्यहह लज्जते पदा, दैन्यमाचर न हासदम्भतः ॥५०॥**

कपटपटो प्रधानघट्टप्रमुख ! प्रसीद प्रसीद नितरां सुप्रसन्नो भव वीप्सायां द्विरुक्तिः । शुल्ककृते शुल्कविषये परञ्च स्वयमेव कारुण्येन कृपाभावेन इमं जनं शुल्कदानक्षमया अनुगृहाण उपकुरु— मा शुल्कं गृहीष्ठाः, निगूढार्थस्तु शुल्ककृते शुल्कस्थाने विनिमयेन इमं जनं कारुण्येन प्रणयसान्द्ररसाभिषेकेण अनुगृहाण स्वीकुरु इति स्वाभिसारं प्रस्तौति । "आदौ वाच्यः स्त्रिया रागः" इति भरतोक्तदिशा नायिकाभिमुख्यं पुरस्कुरुते कविरित्यवधेयम् ॥

अतिप्रसक्तोऽयं प्रस्ताव — इति निदर्शयन्निव तम् परिहासेनावहित्थते **चण्डीति**— अत्र चण्डीति सम्बोधनं साभिप्रायम् , या पुरा कोपं नाटयन्ती साक्रोशं व्याजहार सैवेदानीमात्मानं ग्राहयितुमुत्सहमानेति उत्प्रासयितुं प्रयुक्तमत एवात्र परिकराङ्कुरालङ्कारः । स्वार्थपण्डिता स्वाभीष्टघटने निपुणाऽसि यदुपहासमुद्रया परिहासप्रसङ्गेन कृता काकुः वक्रोक्तिः भवत्या भङ्गिभरेण व्याजबलेन वास्तवे तात्त्विकरूपेण पर्यवसाय्यते विपरिणम्यते । यन्मयोपहासरूपेणोक्तं तद्भवत्या तथ्यतया परिणम्यते । ततः अत एव तथ्यं वस्तु आकर्णय **गव्यभारेति** — अयि विधुराणि क्लिष्टानि गात्राणि यस्यास्तादृशि तन्वि ! मद्विधः सरभसरतिदक्षः गव्यस्य नवनीतस्य भारभरेण भाराधिक्येन भुग्ना नता त्रुटिता कन्धरा यस्यास्तां त्वद्विधां त्वादृशीं शिथिलाङ्गीं पदा चरणेन एकेनापि स्प्रष्टुं लज्जते नोत्सहते । अहह हासदम्भतः उपहासव्याजेन दैन्यं न मा आचर दीनभावमात्मसमर्पणरूपं मा दर्शय । अत्रापि नायकगता इष्टार्थप्रत्यादेशरूपाऽवहित्थैव ।

अत्र प्रसादो गुणः, वृत्त्यनुप्रासः, वैदर्भी रीतिः, रथोद्धता वृत्तम् – "रान्नराविह रथोद्धता" — इति लक्षणात् ॥५०॥

---

कृष्ण — (खिलखिला कर) अरी चण्डी ! अपने मतलब की बड़ी पक्की हो ; जो मैंने तुमसे परिहास के रूप में कहा था उसी व्यङ्ग्योक्ति को तुम वास्तविक रूप में परिणत कर रही हो । तो तुम अब सच बात सुनो —

हे परिश्रान्त गात्रवाली ! नवनीत के अतिशय भार के कारण जिसकी गर्दन टूटे जा रही है ऐसी तुम जैसी को तो मुझ जैसा व्यक्ति

---

KRSNA : (*laughing loudly*) You, angry woman ! are clever in attending to your own interest. The mode of your expression, though humorous, ends, by the very excess of its periphrasis, in revealing the truth. So listen to the fact –

50. Dear feeble-bodied girl ! a man like me would feel ashamed even to touch with his foot a woman like you whose neck is bent by the heavy weight of butter

राधा — ( स्मित्वा ) इअं चेअ महाविडंबणे वि किज्जंतम्मि सुट्ठु सक्कार-बुद्धीए दप्पुद्धुरदा णाम भणिअदि । [ इयमेव महाविडम्बनेऽपि क्रियमाणे सुष्ठु सत्कारबुद्धया दर्पोद्धुरता नाम भण्यते । ]

सिंगारोविदामा' विअक्खणो होसि सव्वदो भद्द ।
कलिदे जम्बूलउडे प्पसादमणणेण जं फुल्लो ॥५१॥

[ शृङ्गारोपितदामा विलक्षणो भवसि सर्वतोभद्र ।
कलिते जम्बूलगुडे प्रसादमननेन यत् फुल्ल ॥५१॥]

नायकस्योद्धुरता वीक्ष्य स्मेरा राधा कृष्णमुपहसति **इयमिति** — महाविडम्बने उत्कटपरिहासे क्रियमाणेऽप्युपहसितमिदं मे सत्कार इति बुद्धया मिथ्याभिनिवेशेन दर्पोद्धुरता गर्वोद्रिक्तता नाम नूनं भण्यते । उपहासप्रसङ्गेन वक्रोक्त्या बह्वादरे प्रदर्शिते गर्वान्ध अहो प्रिया मे सत्कार इति मत्वा उद्धततया यथा धत्त तथैव त्वमपीति अभिक्षेप । तमेवार्थं विशदयति **शृङ्गारेति** — हे भद्र कल्याणिन् त्वं शृङ्गार उज्ज्वलोऽपि सन् सतत विलक्षण विगतलक्षण मा भवसि । "शृङ्गार शुचिरुज्ज्वल" इत्यमर । यत जम्बुले क्लेदविवशे दिने गुडे कलिते सति उपहारीकृत सति असौ महान् प्रसाद इत्येव मननेन कल्पनया फुल्ल गर्वारूढ़न सञ्जात । एतावत्कालपर्यन्त परिहासद्वारा विवशता गताय ते स्वार्पणप्रस्तावमात्रेण तथैवोत्फुल्ल यथा क्लिष्टो विवशो जन गुडखण्डमवाप्य महतीं सत्क्रिया मनुते — भङ्गयन्तरेण त्व सत्य गौरेवासि । तत् यथा — हे भद्र बलीवर्द ! 'उक्षा भद्रो बलीवर्द' इति कोष । त्व शृङ्गार शृङ्गमियर्ति असौ विषाणसहृतोऽपि सन् तदा मा विलक्षण गोवमशृङ्य भव ( शृङ्गारोऽपि तदा + मा ) यत् जम्बूवृक्षस्य लगुडे दण्डप्रहारे दत्तेऽपि त प्रसाद सत्कारोऽयमिति मत्वा फुल्ल । इदमन्यथाऽपि योजयितु शक्यते – हे भद्र बलीवर्द ! शृङ्गे आरोपित दाम रज्जु यस्य स त्व सर्वत विलक्षणो विचित्रो भवसि, पुनश्च जम्बूलगुडे काष्ठदण्डे कल्पित बद्धे सति त्व प्रसाद इति मत्वा फुल्ल प्रसन्नो भवसि । कृष्णपक्षे हे भद्र गवा चारणाय जम्बूलगुडे कलिते दत्ते सति असौ प्रसाद इति कृत्वा प्रमुदितो भवसि ।

इह न वाच्यो न वा प्रतीयमानोऽर्थश्चमत्कारी चूषितोऽपि पिचुमन्दवद्विरसायते । बन्धोऽप्यनतिरुचिकर वाक्यैवाक्यमात्रघटक तथापि बहुवप्रवृत्त्यनुरूप । प्राकृते इय गाथा ; संस्कृतच्छायायामियमार्या जाति ॥५१॥

पैर से छूने में भी रुजा का अनुभव करता है, अत हँसी के नाम पर तुम इस प्रकार दीनता न दर्शाओ ॥५०॥

राधा — ( मुसकराती हुई ) विडम्बना को भी सत्कार समझ लेना इसे ही तो गर्वीलापन ( ऐंठ ) कहते हैं – हे भद्र ( १ वृषभ २ महाशय ) – सींग

(lit the products of the cow ) So donot betray your wretchedness with a hypocritical laughter

RĀDHA (*smiling*) This is what is called gross vanity which takes even abject humiliation as respectful treatment.

51 Blessed one (Bullock) [1] you become extraordinary with a garland put on your crown (with a rope tied

१ °-रुददामा – इति पाठान्तरम् ।

( सर्वाः सशब्दं हसन्ति )

**कृष्णः —** सम्प्रति वाणी विश्राम्यताम् । पाणी हीरकहारं हरताम् ।

**राधा —** पाणिपल्लअस्स कुदो[1] वज्जाणं प्फसणे साहसं । ता अलं मुहाडोवेण । एसा तुम्हाणं पेक्खंताणं चलिदह्मि । [पाणिपल्लवस्य कुतो वज्राणां स्पर्शने साहसम् ? तदलं मुखाटोपेन । एषा युष्माकं प्रेक्षमाणानाञ्चलितास्मि । ]

**कृष्णः —** सुदीर्घकुन्तलपक्षासि, तत्स्फुटमुड्डीय गमिष्यसि ।

[ सर्वाः सहचर्यः वृषभाय लगुडप्रहारप्रयोगं श्रुत्वा सशब्दमुच्चैर्नादं हसन्ति ]

एवं मोघेन वाचिकनर्मणा परिश्रान्तो वक्रोक्त्या विजितो नायकः क्रियापरत्वं प्रस्तुवन्नाह **सम्प्रतीति** — सम्प्रति वाणी विश्राम्यतु । संवादमात्रेणालम् इत्याह । पाणी ( पाणिपल्लवेन इति पाठे पाणिः पल्लव इव तेन, एवं कृते तृतीयान्तस्य हरतामित्य-नेनान्वयो न घटेत ) हीरकहारं हरताम् ।

तत्रापि परिहासमुखी राधा वदति **पाणीति** — पाणिपल्लवस्य कुतः वज्राणां हीरकाणां स्पर्शने साहसः ? पल्लवम् कोमलं कथं कठोरं वस्तु आदातुं शक्नुयात् तदलं मुखाटोपेन अतः वागाडम्बरेणालम् । एषाहं युष्माकं प्रेक्षमाणानां पश्यतां चलितास्मि ।

कृष्ण आह **सुदीर्घेति** – सुदीर्घाः कुन्तलाः केशाः एव पक्षा यस्याः सा, त्वं तैः पक्षैः स्फुटं नूनं उड्डीय गमिष्यसि । किमिति शेषः इति कुतूहलग्रहणेऽपि

---

पर माला के पहिनाने से तुम हर तरह विलक्षण दीख पड़ रहे हो; साथ ही अब जामुन का दण्डा और थमा दिया तो तुम उसे महान् सत्कार समझ कर फूल उठे ।।५१।।

[ सब खिलखिला कर हँस पड़ते हैं ]

**कृष्ण —** अब मौखिक चर्चा रहने दो । हाथों को हीरे का हार खींच लेने दो ।

**राधा —** इन कोमल हाथों से वज्रों ( हीरों ) को छूने की हिम्मत ! रहने दो तुम्हारा यह मौखिक दम्भ (= शैखी) । तुम्हारे देखते देखते मैं यह चली ।

**कृष्णः —** अरी ! लम्बे लम्बे घुघराल् बाल के पंखवाली तू है; इसीलिये सामने ही

---

to your horns) ; the *moment* a club made of a *Jāmbū* wood is given to you for tending cattle ( some *gur* = jaggery is given to you on a rainy day) you bloom, happy, considering it a great honour.

( *All laugh loudly* )

**KṚṢṆA :** Speech may rest now ; and let the hands take away the necklace of jewels.

**RĀDHĀ :** Can a sprout-like hand dare touch diamonds ( lit. pieces of thunderbolt ) ? Enough of your bragging. Here I go under your nose.

**KṚṢṆA :** Sure enough, you will go flying ; for, you have wings *in the form of long locks of hair.*

---

१. क्वचित्पाठे 'कुतो' – इति नास्ति ।

**राधा — सव्वदा हि सारिआसहस्स-सेआरद ! णाहं सारी जं उड्डिस्स ।** [ सर्वदा हि सारिकासहस्रसेवारत ! नाह शारी यद् उड्डयिष्ये । ]

**कृष्ण — लोलाक्षदायभजनादष्टापदमभिधृतासि पुरः ।**
**इति शारी भवसि त्व शृङ्खलयिष्याम्यतो भवतीम् ॥५२॥**

---

भवितुमर्हति । पक्षे सुदीर्घः कुन्तलपक्ष केशपाश यस्या सा तादृशीति । "पाश पक्षश्च हस्तश्च कलापार्था कचात्परे" – इत्यमर ।

तत्र राधा प्रतिवक्ति **सर्वदेति** — सर्वदा अभिसारिकासहस्रस्य सेवाया सेवने रत ! नाह शारी सारिका यद्उड्डयिष्ये । प्राकृत "सर्वदा हि सारिका–°" इत्यत्राभिसारिकापद सयोज्य गृहीतु शक्यम् , त्व सारिकासहस्रसेवारतोऽसि नाह सारिका यद् उड्डयिष्ये ।

शारीपद श्लिष्टम यथा सयोज्य कृष्णस्त्व शारी भवसि इति राधा प्रतिवक्ति, शारीत्वं च तस्या उपपादयति **लोलाक्षेति** — लोलौ द्यूतप्रसङ्गे सतत स्फुरन्तौ अक्षौ पाशकौ तयो दायभजनाद् क्षपप्रसङ्गेन अष्टापद शारिफल खेलपट्टमभि धृतासि पुर पुरस्तात् न्यस्ताऽसि – अत त्व शारीफले यस्ता शारी एव भवसि इति हेतो त्वां शृङ्खलयिष्यामि शारिबन्धे स्थापयिष्यामि । श्लेषवशात् गूढार्थस्तु — लोलाक्षस्य दायभजनात् शुल्करूपे दाये द्रव्ये भजनात् कल्नात् ( हेतौ पञ्चमी ) अष्टापद सुवर्णं पूर्वगणितचतुरशीतिलक्षटङ्कमितम् अभि लक्ष्यीकृत्य पुर धृताऽसि रुद्धाऽसि अतस्त्व शारीभवसि शारी एव जातासि सारिकेत्यर्थ अत भवतीम् शृङ्खलयिष्यामि बाहुभ्यां निगडयिष्यामीति भाव ।

---

उड़कर चली जायगी ! [ कुन्तलपक्ष = १ केश रूपी पक्ष, २. केशपाश । ]

**राधा —** अरे सदैव हज़ारों सारिका ( १ मैना, २ अभिसारिका ) की सेवा में तत्पर ! मैं कोई शारी ( मैना ) नहीं हूँ जो उड़ जाऊँगी ।

**कृष्ण —** फड़कते पाशों ( जुआ खेलने की गोटियों ) को फेंकने के लिये शारीफल ( चौपट ) पर सामने तुम धर दी गई हो, ( = तुम दाँव पर चढ़ी हो, ) इस लिए तुम शारी ही हो, तुम्हें पिंजरे में रख ले रहा हूँ ।

---

RĀDHĀ Oh libertine ! ever devoted to the service of a thousand birds, *Maina* = thrush (women who go to meet their lovers stealthily) I am not a bird (a woman) of that type to fly (to go to a love-tryst)

KRṢNA 52 You are in front of me as a die held on the die-board with the dice moving to and fro You are, therefore, a die (also *Śārī* = a bird) and I shall put you in the cage (= take you in my arms)

( इति पाणिभ्यामाधातुमिच्छति )

**राधा** — हद्धी, हद्धी, णूणं एसो महामम्महस्स सेवाए पहावो जं पइव्वदाप्फंसे पापादो दे भअं णत्थि। [हा धिक्! हा धिक्! नूनमेष महामन्मथस्य सेवायाः प्रभावो यत् पतिव्रतास्पर्शे पापात् ते भयं नास्ति।]

**कृष्णः** — ( स्मित्वा ) भामिनि[1] ! सत्यं त्वमुत्कोपपतौ बद्धव्रतासि,

अत्र पूर्वेण त्वङ्कारेण परामृष्टायाः वृते पश्चाच्च भवतीमिति प्रयोगो भग्नप्रक्रमत्वमाद-धाति। नर्मणो वैचित्र्ये कथञ्चित् स्वीकृतेऽपि सर्वतः प्रकृते बन्धे पदानां हठाकृष्टानां कथमपि योजनेन पाकस्यानतिहृद्यत्वादत्र नारिकेलपाकः – वस्तुतस्तु पिठरपाको बन्धः।

आर्योत्तरार्धसमत्वात्पूर्वार्धस्याप्यत्रेति हेतोरियं जातिरुपगीतिः ॥५१॥

एवं ब्रुवन् विश्राम्यतु वाणीति पूर्वोक्तं यथावत्कर्तुमुत्कः पाणिभ्यां राधामाधातुं गृहीतुमिच्छति उपक्रमते।

कृष्णस्य प्रसह्याचरणेनोद्विग्ना राधा निनदति **हा धिगिति** — अत्र सम्भ्रमे द्विरुक्तिः। पूर्वं कस्य राज्ञः कर्मचारी त्वमिति पृच्छायां महामन्मथस्य राज्ञ इत्युक्त-मासीत्तदनुसन्धायाह एष दुर्ललितो व्यवहारः महामन्मथस्य विवेकापहारिणः सेवायाः प्रभावः परिणामो यत् पतिव्रतानां स्पर्शे यत्पापं तस्मादपि ते भयं नास्ति।

*तत्रापि पुनः द्व्यर्थवचसा स्वार्थं साधयन् सस्मितं कृष्णः आह* ***भामिनीति!*** *अयि भामिनि भाम कोपः अस्या अस्तीति भामिनी तत्सम्बुद्धौ।* *'भाविनि' – इति पाठे*

---

[चञ्चल आँख वाले मुझे देय चुंगी के ८४ लक्ष कनकटङ्क के बदले अवरुद्ध की गई हो। इस बन्ध के कारण तुम सारिका [ > अभिसारिका ] ही हो, तुम्हें आलिङ्गन में बाँध ले रहा हूँ ॥५१॥

(ऐसा कह कर कृष्ण राधिका को अपने बाहुपाश में लेना चाहते हैं)

**राधा** — बड़ी लज्जा की बात है! अवश्य, महामन्मथ महाराज की चाकरी का ही यह फल है, जो पतिव्रताओं के स्पर्श जनित पाप से तुम्हें भय नहीं रह गया।

**कृष्ण** — (मुस्करा कर) अरी कोपने (साध्वि)! तू अपने तीव्र कोपी पतिदेव के प्रति

( > You are held as a hostage before me for the gold due as toll-tax to the one with rolling eyes ( = myself). You are therefore, a stake, and so I put you under fetters (in my arms).

(*He desires to take her in his arms*)

RĀDHĀ : Shame, shame! this is really the effect of serving the great Cupid that you have no fear from the sin of touching a chaste woman.

KRṢṆA : (*smiling*) Wrathful (Virtuous) lady! true, you are

1. "भाविनि" इति पाठान्तरम्।

अतस्तवोरुसेवायामभिलाषुकोऽस्मि ।

राधा — (सप्रणयरोषम्) वक्कवितंडा[1]पंडित, विरमेहि । कुलंगनाप्फंसणं क्खु अच्चाहिदप्पदं होदि । [वक्रवितण्डा[1]पण्डित ! विरम । कुलाङ्गनास्पर्शनं खलु अत्याहितप्रदं भवति ।]

कृष्ण — कुलीनम्मन्ये ! किमहमकुलीनो यदद्य[2] भवत्यास्तनुस्पर्शेऽपि मेऽनौचिती ?

प्रगल्भ प्रशस्तो वा भाव (श्लाघ्य) यस्या सा तादृशी । भाविनीति पदं "साध्वी" इत्यर्थेऽपि रूढम् । तथा सति अयि साध्वि इति सम्बोधनम् वक्रवचनत्वेनोपपन्नम् । सत्य त्वम् उत्कोपपतौ उत्कोप कोपनशीलो यः पति तस्मिन् बर्बरे पतिव्रतारूपेण बद्धव्रतासि । पक्षे त्वम् उत्का उत्कण्ठिता सती उपपतौ अथवा उत्क त्वदर्थमुत्कण्ठिते उपपतौ मयि बद्धव्रता कृतनिश्चया असि, अत तव उरुसेवाया उर्वी महती या सेवा श्लाघनीयत्वाच्चरणसेवा तस्या, पक्षे उर्वो जङ्घयो [सन्धौ] सेवाया सेवन अभिलाषुकोऽस्मि इति हार्दम् । अत्र श्लेषालङ्कार: । नर्मस्फूर्जश्च कैशिकी नृत्यङ्गम् । अत्र वचस सातिशयश्लिष्टत्वाद् द्वितीय पताकास्थानम् ।

प्रणयार्द्र रोष प्रकटयन्ती राधा कृष्णमाह वक्केति — हे वक्रवचनेषु या विदग्धा चातुरी अथवा वितण्डा व्यर्थवाक् तस्या पण्डित वावदूक ! विरमास्माद् व्यापारात्, तत्र हेतुमाह – कुलाङ्गनाना परकीयाणा स्पर्शन खलु अत्याहितप्रदमनिष्टकरं भवति ।

तन्निशम्य कृष्ण पुन सोत्कण्ठ प्राह कुलीनेति — आत्मान कुलीनां मन्यते असौ हे कुलीनम्मन्ये ! किमहमकुलीनोऽधम यदद्य मया प्रस्तुते भवत्यास्तनुस्पर्शने मम अनौचिती अयोग्यता इति ।

---

| | |
|---|---|
| | अडिग आस्थावती है, यह सही है, इसलिए मैं तुम्हारी प्रशस्त सेवा (चरणों की सेवा) का आकांक्षी हूँ । [ > अयि कोपने ! अपने लिये लालायित प्रणयी जन के प्रति ( > उपपति के प्रति उत्सुक हो ) तू निर्णय ले चुकी है, इसलिये मैं तुम्हारी ऊरुसेवा का अभिलाषी हूँ ।] |
| राधा — | (स्नेहिल रोष दिखाती हुई) उल्टी सीधी बोली की कला में कुशल ! ठहरो, निश्चित है कि पराई वनिताओं का छूना भी बड़ा ही अहितकर होता है । |
| कृष्ण — | बड़ी कुलीन बनने वाली ! क्या मैं अनभिज्ञात हूँ, जो श्रीमतीजी |
| | devoted to an irascible husband I am, therefore, anxious to render some appreciable service to you. ( > *you are avowed to your eager lover,* < *you are* faithful to and longing for your ardent lover, I, therefore, feel inclined to serve your thighs ) |
| RĀDHĀ : | *(in coquettish anger)* Oh ! clever in oblique speech ! stop, touching a respectful woman will, indeed, bring a great calamity on you |
| KṚṢṆA : | *Oh self-styled high-born woman ! am I low-born that* |

1. 'विदग्धा' इति पाठभेद । 2. "अद्य" – इति पाठभेदश्चिन्त्यः ।

राधा — कुलीनजणाणं किर एव्वं चरिदं जं णिज्जणवणे परवणिदाणं णिरुन्धणेण एदं विडंबणं। [ कुलीनजनानां किल एवं चरितं यत् निर्जनवने परवनितानां निरोधनेन एदं विडम्बनम्।]

कृष्णः — कामिनि ! परा त्वं वनितासीति वनेऽत्र मन्यसे; तेन नितरां वितराद्य घट्टदानम्।

कुलीनानां चरितं कुलीनवद्भवति तव तु तथा नेति दर्शयन्ती राधाऽऽह कुलीनेति — कुलीनजनानामभिजनवतां किलैवं चरितं — किलेति गर्हायाम्। यत् निर्जने वने निस्सहायस्थले परवनितानां निरोधनेन इदं विडम्बनम् दुर्दशाकरणमिति साक्षेपोक्तिः। अत्र परदूषणख्यापनात् अपवादो नाम विमर्शसन्ध्यङ्गमुक्तम्भवति।

राधाया एवमधिक्षेपं श्रुत्वा कृष्णः प्रतिवक्ति कामिनीति — अयि कामिनि प्रशस्तः उद्बुद्धः मनोजः यस्याः सा तत्सम्बुद्धौ हे प्रमदे ! त्वं अत्र वनेऽस्मिन् वृन्दारण्यपरिसरे आत्मानं परा उत्कृष्टा महिलेति अन्यदीया इति वा मन्यसे । यद्येवं स्वगौरवगर्विष्ठासि तदा अद्य अधुनैव घट्टदानं मह्यं देयं शुल्कं नितरां पूर्णरूपेण सद्यः वितर देहि। इह पूर्वसिद्धार्थकथनाद्विहक्तिर्नाम नाट्यलक्षणम्।

अत्र परा उत्कृष्टा परकीयेत्यर्थद्वयप्रतिपादकत्वात्परापदे श्लेषालङ्कारः। छेकानुप्रासश्च। "परा त्वं वनितासीति" — "वनेऽत्रमन्यसे तेन" इति गद्यांशौ श्लोकपादघटितौ "नितरां वितराद्य घट्टदानम्" इत्यंशः त्रिष्टुभि ससजा गावितिलक्षणात् विमलावृत्तचरणरूपः। अतः समग्रमिदं वाक्यं वृत्तगन्धि ज्ञेयम्।

---

के देह को छूना भी मेरे लिये उचित नहीं।

राधा — सचमुच अभिजातों के ये ही व्यवहार हैं कि निर्जन स्थान में पराई वनिताओं को छेक कर उनकी ऐसी दुर्दशा करना !

कृष्ण — कामिनि ! इस वन में तू अपने आप को कोई अनुपम ( > पराई ) महिला मानती हो, तो तुरन्त अभी सारी चुंगी दे दो।

even my touching your body now is considered to be improper?

RĀDHĀ : Pshaw, such indeed, is the behaviour of the high-born ones ... harassing the wives of others by holding them up in a lonely woodland.

KṚṢṆA : Lovely woman! you think yourself to be the most distinguished ( > some one else's ) woman in this forest. Sh-ll out then, the total toll-tax today.

राधा — मोहन ! जधा तुह्मादिसेण तक्कीअदि तधा एसो जणो ण होदि । ता एत्थ भमंद-भूभंह-[1]भुअजुअल-णच्चणेण आहितुण्डिअदा-लीला-डंबरेहिं अलं । दुल्लहा दे एत्थ सुलुक्कभिक्खा । [मोहन ! यथा त्वादृशेन तर्क्यते तथा एष जनो न भवति । तदत्र भ्रमद्भ्रू[1]भुजयुगलनर्तनेनाहितुण्डिकतालीलाडम्बरैरलम् । दुर्लभा तेऽत्र शुल्कभिक्षा । ]

कृष्ण — अयि सुकलेवरमधुना शुल्कं त्वां दातुमुद्यतां प्रेक्ष्य ।
परमोत्सवचटुलेयं कुरुते भ्रूनर्तकी नृत्यम् ॥५३॥

एवमधिक्षिप्य राधा सरलभावेन कृष्ण बोधयति मोहनेति–यथा त्वादृशेन लम्पटेन तर्क्यते 'उत्कोपपतौ बद्धमतत्वमित्यादि' तथा एष जन न भवति । नाह तादृशी यथा त्व मां सम्भावयसि । तदत्र भ्रमत् भ्रुवोश्च भुजयोश्च (भुजङ्गयो ) युगल तस्य नर्त्तनेन आस्फालनेन आहितुण्डिक व्यालग्राही तस्य कर्म आहितुण्डिकता लीलाया आडम्बरेणानुकरणेनालम् । ते शुल्कभिक्षा अपि दुर्लभा – इत्यवेहि इति शेष । 'भ्रमद्भ्रू [ + भुज ]-° इति पाठ भ्रुवोर्भुजयोरित्यर्थ ' ।

यद्यपि वाचा त्वमेव वक्षि तथापि भ्रूलास्येन सवान्तारिकभावबोधा भवतीति दर्शयन्कृष्णो राधामाह अयीति -- अयि सुकले दानप्रवणे, अधुना वर शुल्क दातुमुद्यतां त्वा प्रेक्ष्य परमोत्सवचटुला हार्दानन्दचपला इय भ्रू नर्त्तकी इवेति भ्रूनर्त्तकी नृत्य कुरुते लास्य तनोति । "सुकलो दातृभोक्तरि" इति कोष । अथवा अयि सुकले शोभनकला-मण्डिते । पक्षे सुकलेवरमिति समग्रपदग्रहणे शोभन कलेवरमेव वर शुल्क दातु त्वमुद्यता सीति भ्रुवा चञ्चद्भावया स्वीयलोलतया बोध्यते इत्याकूतम् । भ्रूनर्त्तकीत्यत्रोपमानोत्तरपद कर्मधारय, तेन चोपमालङ्कार । सुकलेवरेत्यत्र श्लेषालङ्कारश्च । पद्यमिद रत्याख्यभावानु भावगमकम् प्रसादगुणोपेतया वैदर्भ्या निबद्धम् । अत्र आर्या जाति ॥५३॥

---

राधा — अरे चितचोर ! तुम्हारे जैसे लम्पट मेरे बारे में जैसा सोचते हैं, वैसी में नहीं हूँ । इसलिये अब नागिनि जैसी चलल भौंह [ + भुजाएँ ] नचाकर सपेरो के खेल वाली बाते रहने दो, तुझे चुगी भी यहाँ मिलना मुश्किल है ।

कृष्ण — अयि दानदक्षे ! इस समय प्रशस्त शुल्क देने के लिये तुम्हें तैयार देखकर, [ > अयि ! अपने सुकलेवर को चुगी देने के लिये सन्नोकर

RĀDHĀ Mohan ! I am not that type, the people like you guess me to be So, enough of your juggler s show of whirling your serpentine eye brows ( + and arms ) It would be difficult for you here to get the tax which you are begging for

KRSNA 53. Dear munificent Rādhā ! seeing you ready to pay the tax, ( > Friend ! seeing you now ready to offer your beautiful person ), this eye-brow danseuse of mine,

---

[1] 'भ्रमद्भ्रूभुजङ्ग ( + भुजयुगल ) नर्त्तनेन ' इति पाठान्तरम् ।

राधा — ( संस्कृतेन )

**लोहमय्यलघु कृष्णवर्त्मनः स्तम्भिनी प्रतिकृतिः स्फुरत्यसौ ।**
**यत्र यान्ति कुहकस्य वन्ध्यतां भूरिभोगभरितस्य चाशिषः ॥५४॥**

तव सर्वापि कपटबुद्धिरत्र मोघा भविष्यति यत इयं मद्रूपा प्रतिमा परमदृढा अविचलाऽस्तीति कृष्णं बोधयति संस्कृतमाश्रित्य राधा **लोहेति** — असौ प्रतिकृतिः तव पुरतः स्थिता मद्रूपा लोहमयी लोहवदनाम्या दृढा, अलघु अक्षुद्रा परिमाणे च गुरुः, एवं स्तम्भिनीत्यस्य क्रियाविशेषणम् । पक्षे लोहमयी सुवर्णप्राया "सर्वञ्च तैजसं लोहम्"– इत्यमरवचनाल्लोहशब्दः सुवर्णवाची । कृष्णवर्त्मनः अग्नेः स्तम्भिनी प्रतिरोधिनी – अयोऽग्निप्रतिरोधि भवतीत्यवधेयम् । पक्षे कृष्णवर्त्मनः कृष्णस्य वर्त्म सरणिः तस्य स्तम्भिनी कृष्णस्येप्सितरोधिनी स्फुरति भासते; यत्र यस्याः प्रतिकृतेः पुरतः भूरिभोगभरितस्य विशालकायसम्पन्नस्य उग्रफणावतो वा ( "भोगः फणः भोग्यं वर्ष्म च" इति कोषः ) कुहकस्य कालसर्पस्य आशिषः दंष्ट्राः कपटपटोर्लम्पटस्य वाञ्छा वा । अत्र श्लिष्टलक्षणचित्रार्थत्वात् शोभा नाम नाट्यलक्षणम् । वन्ध्यतां यान्ति असफला भवन्ति ।

अत्र लोह-कृष्णवर्त्म-कुहक-भोगाशिषः श्लिष्टाः, अत एव श्लेषालङ्कारः तेन च अप्रस्तुतद्वारा प्रस्तुतस्य ख्यापनादप्रस्तुतप्रशंसालङ्कारश्च । प्रसादगुणसम्पन्नो बन्धः, वैदर्भी च रीतिः । स्तम्भिनीति पदेन स्तम्भः अस्या अस्तीति व्युत्पत्तौ कृष्णस्य वर्त्मनः ( पञ्चमी ) सरणे जातस्तम्भा–इति गम्यार्थमहिम्ना विभावगत-हर्ष-जाड्य-स्तम्भादयो भावा व्यज्यन्ते ।

"रान्नराविह रथोद्धता लगौ"–इति लक्षणयोगादत्र रथोद्धता वृत्तम् ॥५४॥

---

रखने वाली तुम्हें देख कर ] परमानन्द से दोलायमान यह भौंह ( रूपी ) नदी नाच उठी है ॥५३॥

राधा — ( संस्कृत के माध्यम से ) यह कठोर लोहे [ स्वर्ण ] की अडिग मूर्ति जो देख रहे हो, वह अग्नि को भी शक्तिहीन करने वाली है, जहाँ विशाल फटाटोपवाले जहरीले साँप के भी दाँत नहीं गड़ पाते ।
[ > यह चमचमाती सुनहली, बड़ी सी गुड़िया कृष्ण के मार्ग ( < काले निम्न पथ ) की अवरोधिनी है, जहाँ बहुविध भोगकला में दक्ष छली के भी दाँत खट्टे हो जाते हैं । ] ॥५४॥

---

quivering with utmost joy has begun to dance.

RĀDHĀ : 54. (*In Sanskrit*) This heavy image of gold (in me) shines restraining a blackguard. Here the fangs of even a large serpent with an expanded hood are bound to be ineffective.
( > this weighty golden image (of mine) fascinated with joy shines blazing the path of Kṛṣṇa, where vain are the desires of a lustful rogue. )

कृष्ण — प्रतिमास्यद्भुता राधे बहुलोहमयी ध्रुवम् ।
ततः स्वयंग्रहाश्लेषं चुम्बके मय्युरीकुरु ॥५५॥
( इति मन्द मन्दमुपसर्पति )

राधा — ( मनाक् परावृत्य ) अपेहि, अपेहि ( आर्त्तस्वरेण ) मा धरेहि ।

[ अपेहि, अपेहि । मा धारय । ]

राधाया "लोहमयी प्रतिमाऽहमिति' वचोऽनुसन्धाय तथात्वे त्वया किं कर्तुमुचित-मिति दिशन्नाह कृष्ण **प्रतिमेति** — अयि राधे । ध्रुव निश्चयेन त्व बहुलोहमयी प्रचुरलोहघटिता [ पक्षे बहुलै प्रभूतै ऊहै वितर्कै सम्पन्ना ] अत एव अद्भुता विलक्षणा प्रतिमा असि [ पक्षे प्रतिमासि मासि मासि अद्भुता नवीना पुन शुद्धत्वात् असि ] । यत त्वं लोहमयी असि, लोहस्याय निसर्ग यदसौ चुम्बक अयस्कान्त स्वय सन्निपत्य ि यति, तथैव चुम्बके चुम्बनोद्यते मयि स्वयग्रहाश्लेष स्वय सन्निपत्य आश्लेष परिरम्भ उरीकुरु स्वीकुरु । अत्र सहृदयहृद्य श्लेषालङ्कार । अत्र कार्यसग्रहादादान नाम विमर्शाङ्गम् । किं त्वया कर्त्तव्यमिति बोधनादत्र "युक्तिरर्थावधारणमिति' लक्षणात् युक्तिर्नाम नाट्यलक्षणमुपन्यस्तम् । अनुष्टुब्वृत्तम् ॥५५॥

इति एव ब्रुवन् मन्द मन्दमुपसर्पति राधामुपगच्छति [ चुम्बनाश्लेषायेति शेष ] ।

राधा मनाक् किञ्चित् परावृत्य मुख साचि कृत्वा अपेहि दूरमपसरेति सम्भ्रमे द्विरुक्ति करोति । तथापि ग्रहणोन्मुख कृष्ण प्राप्य कष्टवशादार्त्तस्वरं कृत्वा मा धारय, मा मां सग्रही इति प्राह ।

---

कृष्ण — राधे ! अवश्य ही तुम कठोर लोहे की विचित्र मूर्ति हो, इसलिये मुझ जैसे चुम्बक से आकर स्वय जुडना स्वीकार करो। [ > अवश्य ही तर्क वितर्क करने वाली तू बड़ी रहस्यमयी गुडिया है, [ < महीने महीने नवीनता को धारण करने वाली है।] अत चुम्बनोद्यत मुझे अपने स्वयकृत आलिङ्गन में जकड लेने वाली बात सोचो।] ॥५५॥
( ऐसा कहकर कृष्ण धीरे धीरे पास आते हैं )

राधा — (किञ्चित् मुँह फेर कर) हट जाओ, दूर हटो। (करुण स्वर से गिड़गिड़ाती हुई) हमें मत छूओ।

---

KRSNA 55 Rādhā, you are indeed a wonderful image made of weighty iron So allow me the magnet the pleasure of your spontaneous embrace ( > Rādhā, you are indeed an ever fresh beauty periodically renewed Accept therefore, a voluntary embrace with me, the kisser )
*( Kṛṣṇa slowly approaches her )*

RĀDHĀ *( recoiling a little )* Begone, begone *( in a tone of distress )* donot hold me

कृष्णः — लक्षैश्चतुरशीत्या हि शुल्कैर्विनिमयं गताम् ।
न यौवतशिखारत्नं कुतस्त्वा धारयाम्यहम् ॥५६॥

( इति दिधीर्षुः प्रसर्पति )

राधा — ( ससम्भ्रममभिनीय साचि विचलन्ती ) ललिदे ! तुमं किं क्खु कोदुहलं पेक्खसि । [ ललिते, त्वं किं खलु कौतूहलं प्रेक्षसे ? ]

नान्दीमुखी — सहि राधे ! अलं इमिणा सुट्ठु कुट्टमिदेण, केत्तिअं पलाइस्ससी । [ सखि राधे ! अलमेतेन सुष्ठु कुट्टमितेन । कियत् पलायिष्यसे । ]

राधोक्तधारयतेर्द्व्यर्थित्वात् कृष्णस्तत्पदमुद्गृह्यात्मनः उत्तमर्णत्वं प्रकटयन् धारणस्यौचित्यमुपपादयति **लक्षैरिति** — हि नूनं लक्षैः चतुरशीत्या चतुरशीति (८४)-लक्षटङ्कमितैः शुल्कैः विनिमयं गतां प्रतिदानरूपेणाप्तां, युवतीनां समूहो यौवतं तस्य शिखारत्नं चूडामणिं ललनाललामभूतां त्वां कुतः केन कारणेन न धारयामि अपि तु अवश्यमेव धारयामि शुल्कक्रीतासीति धर्तुमर्होऽहमिति साधयति — इति अनुष्टुब्वृत्तम् ॥५६॥

एवं ब्रुवन् कृष्णस्तां दिधीर्षुः ( सन्नताद्गुः ) धर्तुमिच्छुः प्रसर्पति अग्रे सरति ।

कृष्णस्य साहसिक्यात् सम्भ्रमं व्याकुलत्वम् अभिनीय नाटयित्वा साचि तिर्यक् विचलन्ती अपसरन्ती राधा ललितां सखी साहाय्यार्थमाह्वयति **ललितेति** — अयि । त्वं पार्श्ववर्त्तिनी भूत्वाऽपि किं खलु निरपेक्षतया कौतूहलं क्रीडनमिव प्रेक्षसे इति आक्षिपति ।

अत्रान्तराले वयोऽधिका वरिष्ठा नान्दीमुखी सान्त्वनापुरस्सरं राधां राधयितुं वदति **सखीति** — सखि राधे ! एतेन सुष्ठु शोभनतयाऽभिनीतेन कुट्टमितेन इष्टेऽप्यर्थे

---

**कृष्ण —** जानती हो, तुम चुंगी के ८४ लाख टङ्क के बदले में मिली हो, तुम्हें हम भला क्यों न पकड़ लें ॥५६॥

( ऐसा कह कर पकड़ने के लिये तीव्र गति से बढ़ते हैं )

**राधा —** ( हड़बड़ाने का अभिनय कर थोड़ा इधर-उधर हटती हुई ) ललिते ! सही में, क्या तू तमाशा देख रही है ?

**नान्दीमुखी —** सखि राधे ! ये कहर ढाने वाले झूठे नख़रे रहने भी दो, कब तक यह भाग-दौड़ चलेगी ।

---

KRṢṆA : 56. Now that you have given yourself in exchange for the tax amounting to eighty-four lacs of gold coins, why should I not take possession of you, the crest-jewel among the young women !

( *He proceeds with a desire to grasp her* )

RĀDHĀ : ( *gesticulating flurry and stepping aside obliquely* ) Lalitā ! are you simply seeing a fun ?

NĀNDĪMUKHĪ : Friend Rādhā, I enough of this affected repulse of these endearments. How long will you escape ?

**ललिता** — ( पुर परिक्रम्य ) जहवि दुल्ललिदसीलाणं लुण्ठआण तुह्माणं दाणगणणा प्पलाव ण क्खु अम्हे कण्णप्पेरते वि अप्पह्म तहवि किं पि भणिदुकामह्मि । [ यद्यपि दुर्ललितशीलाना लुण्ठाकाना युष्माक दानगणनाप्रलापम् न खलु वय कर्णप्रान्तेऽप्यर्पयामस्तथापि कि मपि भणितुकामास्मि । ]

कृष्ण — कठिने ! काम भण्यताम् ।

**ललिता** — ( सस्कृतेन )

**अमूर्व्रजमृगेक्षणाश्चतुरशीतिलक्षाधिकाः**
**प्रतिस्वमिति कीर्तित सवयसा तवैवाधुना ।**

---

वैमुख्यदर्शनेन अलम् बहु कृतम् – त्व रियत् पलायिष्यसे ? अतश्च सरला भूत्वा मनोरथं साधय । अत्र उपदिष्ट नाम नाम्यलक्षणम् ।

साहाय्यार्थमागारता ललिता स्थान पुर परिक्रम्य अग्रत उपस्थाय भर्त्सयति साहसिक माधव **यद्यपीति** — दुर्ललत सुभगेनर शाल यषा तादृशा लुण्ठाकाना परस्वाप हरणवृत्तीना युष्माक दानगणना गुरुकगणित तद्विषयक प्रलाप जप वय न कणप्रान्तऽपि अर्पयाम मनागपि न शृणुम तथापि किमपि गणनाविषयमधिकृत्य भणितुकामाऽस्मि वक्तुमिच्छामि । भणितुं काम यस्या सा – तुङ्काममनसोरित्यनन मकारलोप ।

कृष्णेन अयि कठिने दुस्साध्ये अन्तरायकारिणि । काम यथेच्छ भण्यतामिति उक्तायां सत्या ललिता कठारा भूत्वा सस्कृतेनाह **अमूरिति** — अमू एता व्रजस्य मृगस्येक्षणे इव इक्षणे नयने यासा ता व्रजाङ्गना मूयेन प्रतिस्व स्व स्व इति प्रतिस्व एकैकश चतुरशीतिलक्षाधिका इति अधुना [ > अमुना ] तवैव सवयसा सखायेन

---

**ललिता** — (सामने आकर) अभद्र व्यवहार करने वाले आप जैसे लुटेरों की चुंगी की गिनती के बकवास को यद्यपि हम कान के पास भी नहीं फटकने देती हैं, तो भी मैं कुछ कहना चाहती हूँ ।

कृष्ण — अरी कठोरहृदये ! खूब कहो ।

ललिता — ( सस्कृत के माध्यम से ) ये एक एक व्रजवनिता ८४ लाख मूल्य से भी अधिक है ऐसा तुम्हारे ही मित्र मधुमंगल ने अभी अभी कहा

---

LALITĀ (*stepping forward*) Though we donot allow the prattling about the assesment of tax of the ill bred robbers like you to touch even the lobe of our ears yet I wish to have a word with you

KRSNA You, stiff necked lady, speak freely

LALITĀ (*In Sanskrit*) It was declared just now by your friend (Madhumangala) that these fawn eyed belles of Braja are, each one of them, worth more than eighty-

इहापि भुवि विश्रुता प्रियसखी महार्घ्येष्वसौ,
कथं तदपि साहसी शठ ! जिघृक्षुरेनामसि ॥५७॥

कृष्णः — (स्वगतम्) बाढं निर्वचनीकृतोऽस्मि। (इति सव्याजमुत्कर्णो भवन्) सुबल, केयं गभीरधर्मापि ध्वनिधोरणी विदूरत्वादस्फुटेव प्रसरन्ती मामुच्चालयतीति। (इति सुबलस्य कर्णे लगति)

---

मधुमङ्गलेन कीर्तितमुद्घुष्टम्। इहापि व्रजाङ्गनासु असौ राधाख्या मे प्रियसखी महार्घ्याऽतिमूल्यवती प्रशस्ततमेति भुवि विश्रुता लोकविज्ञाताऽस्ति। तत् एवं सत्यपि अतिसाहसी देयादधिकग्राही हे शठ धूर्त ! कथमेनां जिघृक्षुः आदातुमिच्छुः (ग्रह्णातेः सन्नताद् उः) असि। अतिधृष्टोऽसि इति भर्त्सयति। अत्र ललिता क्रूरा सखी इत्युज्ज्वलनीलमणिः। मृगेक्षणाः इत्यत्रोपमालङ्कारः। प्रसादो गुणः, वैदर्भी रीतिः, पृथ्वी वृत्तम् ॥५७॥

कृष्णः तथ्यभर्त्सनया मूकतां नीतः स्वगतं बाढं सत्यमेव निर्वचनीकृतोऽस्मि निरुत्तरोऽहमिति मत्वा प्रसङ्गान्तरमाक्षेप्तुं सव्याजं किमपि मिषं दर्शयित्वा शृण्वन्निव उत्कर्णः कल्पितध्वनिं प्रति श्रोत्रमीरयित्वैव सुबलं सम्बोधयति सुबलेति — का इयं गभीरधर्मापि वस्तुतः गभीरा अपि ध्वनिधोरणिः अनुस्यूता विदूरत्वात् अस्फुटेवापरिचीयमानेव प्रसरन्ती माम् उच्चालयति व्यग्रीकरोति — इत्युक्त्वा सुबलस्य कर्णे किमपि शाठ्यं रचयितुं दिशन्निव लगति।

---

है, उस पर भी मेरी सखी राधा बहुत मूल्यवती है, जिसे सारा संसार जानता है, तो भी साहसी धूर्त ! तू कैसे इसे लेना चाहता है ॥ ५७ ॥

कृष्ण — (मन ही मन) मैं सही में निरुत्तर बना दिया गया (बहाने से कान को दूसरी ओर करके)

सुबल ! बहुत दूर के कारण अस्पष्ट, घरघराहट जैसी चारों ओर फैलती हुई सतत आ रही यह कैसी ध्वनि है, जो मुझे व्यग्र बना रही है।

(ऐसा कह कर सुबल के कान के पास मुँह लगाते हैं)

---

four lacs of gold coins; and then this dear friend (Rādhā) is renowned in the world as the most valuable even among them. Then, how do you, swindler ! dare desire to seize her ?

KRṢṆA : (*To himself*) Surely, I am rendered speechless. (*artfully gesticulating as though hearing something*) Subala, what is this continuous sound of grave nature which, spreading indistinctly on account of distance, disturbs me ?

(*So saying, he clings to the ear of Subala as though whispering something into his ears*)

सुबल — एसो कोलाहलस्स प्पहव विण्णादु चलिदोह्मि ।
[ एष कोलाहलस्य प्रभव विज्ञातु चलितोऽस्मि । ]

( इति निष्क्रान्त )

कृष्ण — कठोरभाषिणि ललिते ! भवतु भवत्याः सखी चतुर-शीतिलक्षाधिका तथापि कोटिं नातिक्रमिष्यत्येव - ततः परैरपि कला-लक्षैस्त्वामवश्य नागरचन्द्रोऽय योजयिष्यतीति ।

राधा — णन्दिमुहि, भअवदीणिदेसस्स पडिवालण साह्नु सवुत्त ज

---

तद्गृहीत्वा सुबल आह एष इति — एष अह कोलाहलस्य प्रभव कुतोऽयमिति तद्द्रुम विज्ञातु चलितोऽस्मि इति वदन् रङ्गतो निष्क्रान्त ।

ततो माधव पुनर्ललिता सम्बोधयति कठोरेति — अयि कठोरभाषिणि क्रूरवाक् ललिते ! भवतु यथा भवत्योक्त तथा — भवत्सखी चतुरशीति लक्षाधिका सत्यपि कोट्यधिका न । तत त मूल्यपूर्तय शेषै कलालक्षै षोडशलक्षैस्त्वां नागरचन्द्र (अह) योजयिष्यति मेलयिष्यति अतस्तस्या ग्रहणे माऽन्तराय कृथा । चन्द्रमस कला षोडश भवन्तीति कलापदेनात्र प्रकरणवशात् षोडशसख्या प्राह्या । अत्र परिभाषण नाम सन्ध्यङ्गमुक्त भवति ।

सोपालम्भ वक्ति राधा नान्दीमुखीति — अये नान्दीमुखि । भगवत्या

---

सुबल — इस कोलाहल का उद्गम जानने के लिये यह मै चला ।
( ऐसा कह कर रंग मच से चला जाता है )

कृष्ण — क्ररभाषिणि ललिते ! तुम्हारी सखी ८४ लाख मूल्य से भी अधिक की है — यह सही हो, तो भी करोड़ से अधिक की तो नहीं ही हैं, इस लिये नागरचन्द्र [ मैं ] बचे हुए १६ लाख मूल्य के लिये तुम्हें ही जोड़ लेगा ।

राधा — नान्दीमुखी ! भगवती पौर्णमासी के सकेत का सरक्षण हो चुका !

---

SUBALA Here I go to find out the source of this uproar
(*Exit*)

KRṢNA Harsh tongued Lalitā ! all right, granted that your friend (Rādhā) exceeds in value eighty four lacs of gold coins, but she will not, at any rate exceed a crore of gold coins in value Well then this illustrious citizen (in me) will certainly use you to make up the balance of sixteen lacs

RĀDHĀ (*sarcastically*) Nāndīmukhī, well have been followed the instructions of the revered Paurnamāsī ! Look,

कोडिगुणीभूदं ज्जेअ घट्टीदाणं । [नान्दीमुखि ! भगवतीनिदेशस्य प्रतिपालनं साधु संवृत्तं यत्कोटिगुणीभूतमेव घट्टीदानम् । ]

नान्दीमुखी — सहि राहे कह पडिवालणं ण संवुत्तं जं सुल्कस्स तिहाओ गेण्हिअदि । [सखि राधे ! कथं प्रतिपालनं न संवृत्तम्, यत् शुल्कस्य त्रिभागो गृह्यते । ]

( प्रविश्य सवयस्यः सुबलः )

सुबलः — पिअवअस्स, णिअवाहिणीणिग्घोस-वहिरीकिद-दिसामंडला विजेंति उज्जाणचक्कवट्टिसीहाओ । [प्रियवयस्य, निजवाहिनीनिर्घोष-बधिरीकृत-दिङ्मण्डले विजयन्ते उद्यानचक्रवर्तिसिंहाः । ]

---

पौर्णमास्याः निदेशस्य "अस्मद्वालिकानां घट्टदानेऽनुकूलेन भवितव्यम्" इत्यस्य प्रतिपालनं साधु संवृत्तम् राम्यग्जातं यत् घट्टीदानं शुल्कं कोटिगुणभूतमेव ।

ताम्प्रत्युत्तरति नान्दीमुखी सखि राध इति — कथं प्रतिपालनं न जातं यद्यस्य शुल्कस्य त्रिभागः पूर्णस्य तृतीयांशः एव गृह्यते । त्रिभागः कथमिति "समुचितेऽपि प्रतिदृष्टं हेमटङ्कत्रये स्फुटमेकटङ्क-कनिष्ठटङ्कणेन गणयेत्युक्तत्वात्" कृष्णेन इति ।

एतदन्तराले कोलाहलस्य प्रसूतिं ज्ञात्वा प्रतिनिवृत्तः सुबलः सवयस्यः प्रविश्याह प्रियेति — प्रियवयस्य माधव ! निजस्य वाहिन्याः सेनायाः निर्घोषेण बधिरीकृतं दिशां मण्डलं यैस्ते उद्यानचक्रवर्तिनः सिंहा इवोत्पुरुषा विजयन्ते ।

---

क्यों कि घाट की चुंगी करोड़ गुना हो रही ।

नान्दीमुखी — सखी राधे ! संरक्षण हुआ क्यों नहीं, क्यों कि चुंगी का तृतीयांश ही लिया जा रहा है ।

( अपने मित्र के साथ सुबल का प्रवेश )

सुबल — प्रिय वयस्य ! अपनी सेना के कोलाहल से समस्त दिशाओं को बधिर करने वाले अपने उपवन के सम्राट् ही गर्जना कर रहे हैं ।

---

the toll-tax has now mounted to a crore of gold coins.

NĀNDĪMUKHI : Friend Rādhā, how do you say that those instructions have not been followed ? Only one-third of the tax is being assessed.

( *Enters Subala with his friend* )

SUBALA : Dear friend ! victorious is the pre-eminent king of these gardens by the roar of whose personal army the entire world has been deafened.

**कृष्ण** — प्रियवयस्योज्ज्वल, नूनं लेखहरोऽसि चक्रवर्तिनाम् ।

**उज्ज्वलः** — अध इं । महाभट्टारअस्स घट्टाहिआरे एसो लेहो ।
[ अथ किं, महाभट्टारकस्य घट्टाधिकारे एष लेख । ]

( इति कृष्णकरे केतकाकोरकपत्रमर्पयति )

**कृष्ण** — ( सव्याजमशब्दमेव लेखवाचनमुद्रामभिनयति )

**वृन्दा** — नागरेन्द्र, वयमप्याकर्णयितुमिच्छामो वर्णदूतम् । तन्मुखबन्धमुत्सृज्य कार्यमेव समुच्चार्यताम् ।

---

सुबलेन सार्धमायान्तम् उज्ज्वलनामानं कार्यपुरुष सम्बोध्य पृच्छति कृष्ण **नूनमिति** — त्व चक्रवर्तिना लेखहर, सन्देशहारकोऽसि – इति मन्ये ।

उज्ज्वल **अथ किमिति** — निश्चयेनाहमस्मि लेखहर, महाभट्टारकस्य स्वामिन घट्टाधिकारे घट्टविषये एष लेख आज्ञप्ति — इत्युक्त्वा कृष्णस्य करे केतकीपुष्पस्य कोरकपत्र गर्भपर्णमर्पयति । एतादृशान्येव पुरा लेख्यसाधनान्यभूवन् ।

तद्गृहीत्वा सव्याज किमपि तत्र लिखित प्रकल्प्य अशब्दमनुच्चरन्नेव लेखवाचनस्य मुद्रामभिनयति । तादृश त वीक्ष्य वृन्दा लेखमुच्चैर्वाच्यतामिति कृष्ण दिशन्ती प्राह **नागरेन्द्रेति** — हे नागरश्रेष्ठ ! वयमपि वर्णदूत लेखरूप सन्देश आकर्णयितु श्रोतुमिच्छाम । तदत एव मुखबन्ध सम्पुटमुत्सृज्य उन्मोच्य अथवा मुख विवृत्य तत्र समुच्चार्यताम् निर्दिष्ट श्रव्यतया वाच्यताम् ।

---

**कृष्ण** — प्रिय मित्र उज्ज्वल ! चक्रवर्ती महाराज का तुम अवश्य ही सन्देश ले आये हो जोगे ।

**उज्ज्वल** — जी हा । महाराज द्वारा घाट के अधिकार के विषय में यह लेख है । ( ऐसा कह कर केतकी कोरक पर अङ्कित पत्र को हाथ में देता है )

**कृष्ण** — ( बहाना बनाकर मौन से ही पत्र-वाचन की मुद्रा का अभिनय करते हैं )

**वृन्दा** — कुशल शिरोमणि ! इस पत्र को सुनने के लिए हम सब ही इच्छुक हैं, अत मुँह खोल कर, जो लिखा है, जरा जोर से पढ़िये ।

---

KRṢṆA — Dear friend Ujjvala ! sure enough, you are the king's letter-bearer

UJJVALA — Yes, here is the king s letter authorising you to be in charge the Toll station

( He hands over to Kṛṣṇa a tender *Ketakī* leaf )

( *Kṛṣṇa artfully gesticulates reading the letter in silence* )

VṚNDĀ — First citizen, we too would like to hear the letter Please, therefore, unseal your mouth and read out the contents.

कृष्णः — ( स्पष्टं वाचयति )

**पाण्डित्यं चण्डधाम्नः परिचरणविधौ प्राप्य गूढोरुगर्वाः**
**कुर्वाणा घट्टघातं घटितनिकृतयः सुभ्रुवो विभ्रमन्ति ।**
**कर्तव्यस्तासु यत्नः पटिमपरिचयादप्रमत्तैर्भवद्भिर्**
**द्राघिष्ठं छद्म दृष्ट्वा किमपि शतगुणस्तत्र शुल्को विधेयः ॥५८॥**

**नान्दीमुखी — दाणीन्द, पइदिविसुद्धाणं इमाणं कुदो कूड-लेससिक्खा-**

---

कृष्णः स्पष्टं वाचयति **पाण्डित्येति** — चण्डधाम्नः सूर्यस्य परिचरणविधौ सेवायां पाण्डित्यं कौशलं प्राप्य "वयं सूर्योपासिकाः" इति गूढोरुगर्वाः निगूढमहाभिमानिन्यः, सुष्ठु भ्रुवौ यासां ता सुभ्रुवः सुन्दर्यः, घटिता कृता निकृतिः शठता याभिस्ताः — "कुसृतिर्निकृतिः शाठ्ये" — इत्यमरः । घट्टघातं कुर्वाणाः घट्टमर्यादामवमत्य विभ्रमन्ति अस्मिन् परिसरे सञ्चरन्ति । अतः पटिमपरिचयात् पटिम्नः कौशलस्य परिचयादनुभवाद् भवद्भिः तासु सुन्दरीषु यत्नः शुल्कादानप्रयासः कर्त्तव्यः । (तासां) किमपि *अणुमात्रमपि छद्म कपटं दृष्ट्वा तत् द्राघिष्ठं गुरुतमं विधाय तत्र तस्मिन् विषये शतगुणः* शुल्कः विधेयः इति चक्रवर्त्तिनः आदेशं श्रावयति । अत्र स्रग्धरा वृत्तम् ॥५८॥

नान्दीमुखी श्रुत्वैतदासां निष्कपटतां साधयति **दानीन्द्रेति** — प्रकृत्या निसर्गेणैव विशुद्धानां सरलानामासां बालिकानां कुतः कूटलेशस्य अंशेनापि छद्मनः शिक्षायामभिलाषः,

---

**कृष्ण —** ( पत्र को स्पष्ट बाचते हैं )

**सूर्य की परिचर्या में दक्षता प्राप्त कर, महान् अभिमान भरी, शठता करती, मर्यादा को रौंदती हुई ये रमणियां सञ्चरण करती रहती हैं, इनसे आप चालाकी से परिचित होने के कारण सावधानी से चुंगी लेने का प्रयास करना, लेश मात्र भी चालबाजी देख उसे बड़ा अपराध बनाकर उस पर इनसे सौ गुनी चुंगी लेना ॥ ५८ ॥**

**नान्दीमुखी** — *घट्टेश ! स्वभाव से ही सरल इन बालिकाओं में दांव-पेच के अभ्यास*

---

KRSNA : ( *reads aloud* )

58. Lovely women, with beautiful eye-brows ! who having acquired some strength by performing the worship of the god Sun, are roaming about with excessive concealed arrogance are causing a fall in the collection of toll tax by committing fraud. Efforts should, therefore, be made by you who, being familiar with such sharp practices, are always alert (to find out the culprits); and those who are found guilty of fraud (evasion for a long time) should be charged as penalty the toll-tax hundred times the normal rate.

NĀNDIMUKHI : Toll gate chief ! how can these women, innocent

हिलासो वि। [ दानीन्द्र ! प्रकृतिविशुद्धानामासां कुत कूटलेशशिक्षामिलापोऽपि। ]

कृष्ण — तथाप्यवश्यमनुष्ठेय कान्ताराधिराजस्य तस्य महाशासनम् ।
( इति किञ्चिदुपसृत्य ) हन्त, चित्रमिद यदेतत् सम्यगनिवृत्तशैशवानामप्यमूषा निर्भरमुच्छूनमुरः समीक्ष्यते । ( पुनर्निर्भाल्य ) कथ वा वराम्बरसवृतादपि वक्षसः काञ्चनमय्यो मयूखवीचयः सञ्चरन्ति ।

( राधा साभ्यसूय तिरो दृगन्तं पातयति )

---

निरा ते कपटाचरणेऽनभ्यस्ता अमूरिति तात्पर्यम् ।

नान्दीमुख्या कथन स्वीकुर्वन्नपि कृष्ण प्राह **तथापीति** — यद्यपि एता अनभ्यस्तकूटाचरणास्तथापि कान्तारस्य अमुष्य उद्यानस्य अधिको राजा इत्यधिराजस्तस्य महाशासनमादेश अनुष्ठेय पालनीयमेवेति वदन् किञ्चित् उपसृत्य समीपमेत्य साश्चर्यमाह **हन्तेति** — चित्रमद्भुतमिद यदेतत् सम्यक् पूर्णत अनिवृत्त असमाप्त शैशव यासां तादृशीनामपि अमूषा बालाना निर्भर समग्रमु छून पीवरता गत उर समीक्ष्यते — एता बाला अपि कठोरपयोधरा लक्ष्य ते । पुन सूक्ष्म निभाल्य परीक्ष्य दृष्ट्वा **कथमिति** वितर्क- अहो आसा वरेण अम्बरेण वाससा सवृतादाच्छादितादपि वक्षस काञ्चनमय्यो सुवर्णभास मयूखवीचय किरणलहर्य सञ्चरन्ति निर्गच्छन्ति ।

कृष्ण प्रति गर्वाभ्यसूयासहित तिरोदृगन्त निलीन वक्रापाङ्ग पातयति कटाक्षक्षेप विदधाति — अनुभावोऽय स्थायिनो रत्याख्यभावस्य पोषक । राधा अभ्यसूयया तिर तिर्यक् दृगन्त कटाक्ष पातयति ।

---

की लेश मात्र भी कामना कहाँ सम्भव है।

**कृष्ण —** फिर भी अपने उद्यान चक्रवर्ती के आदेश का पालन तो करना ही होगा । ( ऐसा कहते हुए पास जाकर ) बड़ी अद्भुत बात है कि इनका बचपन अभी पूरा बीता नहीं, तो भी इनके उरोज भली भाँति उन्नत दिखाई पड रहे हैं, ( फिर अच्छी तरह देख कर ) क्या बात है कि अच्छे वस्त्रों से आच्छादित होने पर भी इनके वक्ष स्थल से सुनहली किरणावलियाँ छिटक रही हैं।

( राधा ईर्ष्या से भरे तिरछे कटाक्ष पात करती है )

---

by nature even desire to learn a bit of cheating ?

KRSNA Yet, the great command of the King of the forests has to be obeyed *(going near a little)* Ah it is surprising that the bosom of these belles who have not yet outgrown fully their childhood, appears to be excessively developed *(seeing again)* and how is it that waves of gold rays are issuing from their bosom though covered with excellent cloth

( *Radhā looks obliquely with envy* )

कृष्णः — ( सकौतुकमात्मगतम् )

**पटोन्नमनलीलया पुलकवृन्दमारुन्धती**
**स्मितं त्वधरमाधुरीपरिचयेन गान्धर्विका ।**
**मृषा भृकुटिबन्धुरी[1]कृतमुखी मदुक्तिश्रवा**
**निरस्यति दृगञ्चलभ्रमिभिरत्र रुष्टेव माम् ॥५९॥**

राधाकृतकटाक्षक्षेपोद्दीपितः कृष्णः तस्या भावं परिचिन्वन् सकौतुकमौत्सुक्ये-नात्मगतमाह **पटोन्नमनेति** — [ इयं ] गान्धर्विका राधा पटस्य शाटीपटस्य उन्नमनस्य उत्क्षेपणस्य उदञ्चनस्य वा लीलया पुलकवृन्दं मद्वीक्षणजन्योद्दीपनवशाज्जातं सात्त्विकं रोमहर्षं आरुन्धती संवृण्वती अधरमाधुरीपरिचयेन स्मितम् आतन्वतीत्यध्याहार्यम्; मृषा मिथ्यैव [ कोपं प्रकटयन्ती ] भ्रुकुटीनर्त्तनेन बन्धुरीकृतं निम्नोन्नतत्वं नीतं मुखं यस्यास्तादृशी – "निम्नोन्नतं तु बन्धुरम्" इति कोषः । मदुक्तौ मद्वचने ( विषयीकृत्य ) श्रवौ कर्णौ यस्याः सा मद्वचनश्रवणपरायणा [ मदुक्त्याश्रवा – इति पाठे मदुक्तस्य मया प्रस्तुतस्य चुम्बके मयि स्वयंग्राहमङ्गीकुरु इति प्रस्तावस्य आश्रवा वशंवदा मौनेनैव स्वीकुर्वाणा इत्यर्थः ] अत्र प्रसङ्गे रुष्टा इव आपाततो, न तु वस्तुतः रोषम् बिभ्रतीव दृशोरञ्चलस्य अपाङ्गवीक्षणस्य भ्रमिभिः घूर्णाभिः मां निरस्यति दूरीकरोत्येव । अत्र रतिभावपोषकाणां सात्त्विकसञ्चारिभावानां बहिःक्रोधदर्शनात्कुट्टमितस्य योषिदलङ्कारस्य च बोधनम्भवति ।

अत्र द्वितीयचरणे स्मितमित्यस्य द्वितीयान्तस्य साकाङ्क्षत्वे तदन्वयपूरणाय पदाभावान्न्यूनपदतादोषः । अधरमाधुरीपरिचयेनास्वादिताधरपीयूषयूषत्वं नायिकायाः ख्याप्यते यत्स्मरणमुद्दीपनतां धत्ते । अत्र प्रसादार्थव्यक्ती गुणौ, अल्पवृत्ति-कोमलवर्ण-घटिता वैदर्भी रीतिः । वृत्तञ्च पृथ्वी ॥५९॥

---

कृष्ण — ( उत्सुक हो मन ही मन )
साड़ी के आंचल को ऊपर उठाने के बहाने रोमाञ्च तथा अधर की मधुरिमा के स्मरण जन्य मुसुकान को, [ > मधुर होटों को मिलाकर मुसुकान को ], [ < साड़ी को यथास्थान जमाने के बहाने होंटों के प्रचुर माधुर्य द्वारा हर्षोत्थित रोमाञ्च को ], छिपाती हुई, भौंहें नचाती हुई सलोने मुंह वाली [ > भृकुटि नर्त्तन द्वारा मुँह को फुलाती पचकाती ] मेरी बातों पर कान लगाये, निगाहों की कोर को इधर-उधर घुमाती, रूठी सी राधा झटे ही मेरी अवहेलना कर रही है ॥ ५९ ॥

( *aside with curiosity* )
59. Pretending to settle her raiment and hiding the profuse horripilation arising from joy (caused by my looking at her) with plentiful sweetness of her lips, this celestial belle (Rādhā), with her ears intent upon my words and face rendered crooked (lovely) by a vain frown, wards me off with whirling corners of her eyes as though she is angry with me,

1. "वल्गित-°" इति पाठभेदः ।

(प्रकाशम्) साधु, महोद्यानचक्रवर्तिन् साधु । सत्येयं 'उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धय' इति प्रसिद्धिः । (सव्यतो दृशं क्षिपन्) नान्दीमुखि ! पश्य, पश्य ! पञ्चभिरमूभिर्विंशतेरर्द्धान् शातकुम्भकुम्भान् वक्षसि कौशलेन निह्नुवानाभिः कृतिनोऽपि घट्टाधिकारिणः प्रतार्यन्ते ।

**सर्वाः** — (सरम्भेण भ्रूकार्मुकाणि कुटिलीकृत्य साक्रोशम्) रदहिंडअ, हिंडेहि णिअमंडवं । [रतहिण्डक, हिण्ड निजमण्डपम् ।]

---

इत्यात्मगत भाव विवृत्य कृष्ण चक्रवर्तिन आदेश श्लाघमान आह **साध्विति**— "ईश्वरबुद्धय स्वामिना धिय उपरि बुद्धीनाम् उपरि वस्तु द्रावने पूर्वाविभासवत्यश्चलन्ति"–इति प्रसिद्धि आभाणक सत्या एव । एवमुक्त्वा सव्यत वामपार्श्वे दृश क्षिपन् **नान्दीमुखीति**— सम्बोद्धय आह – पश्य पश्य त्वमेवं प्रत्यक्षीकुरु यत् पञ्चभिरमूभि सखीचतुष्टयसमेतया राधया विंशतेरर्द्धान् दशसख्याकान् शातकुम्भान् सुवर्णकलशान् पयोधररूपान् वक्षसि कौशलेन निह्नुतवानाभिराच्छादयन्तीभि कृतिनोऽपि कुशला अपि घट्टाधिकारिण प्रतार्य ते वञ्च्य ते ।

पञ्चसखिवृन्दमुद्दिश्योक्तमिद वचो निशम्य सर्वा भ्रुव एव कार्मुकाणि धनूषि कुटलीकृत्य साक्रोश निनदन्त्य एकस्वरेण प्राहु **रतेति** — हे रताय हिण्डते बम्भ्राम्यते असौ वनितालम्पट ! निजमण्डप स्वागारं हिण्ड गच्छ ।

---

(प्रकट) बहुत खूब ! उपवन सम्राट् धन्य हो। यह प्रसिद्धि सही ही है कि बड़े लोगो की बुद्धियाँ सामान्य बुद्धि से ऊँची उडानें भरती हैं। (बायां ओर आखें घुमाकर) नान्दीमुखी ! देखो, देखो, दश स्वर्ण कलशियों को चतुराई से वक्ष पर छिपाने वाली इन पाचो सुन्दरियो स बड़े चतुर भी, घाट के अधिकारी ठग लिये जाते हैं।

**सभी गोपियाँ**—(उत्तेजित हो, भौंहों की कमानों को टढी कर आक्रोश से) औरतों क पीछे लगने वाले लम्पट ! अपने मण्डप में जाओ।

---

*(aloud)* Excellent king of gardens, excellent! That the masterly wits of the highly talented persons work is a well deserved fame (*casting his glance to the left*) Nāndīmukhī Look here even the clever toll gate officers are being deceived by these five (belles) who have skilfully hidden ten gold pots (two each) behind their bodice

ALL (*bending the bows of their eye-brows in agitation and cursing*) Kidnapper of women ! get away to your stall

कृष्णः — (अपवार्य) वृन्दे, विलोकय कुञ्चितभ्रुवं पञ्चमुखीम् ।

(इति सगद्गदम्)

कामः काञ्चिदवाप्य पञ्चमुखतस्तीव्रां व्यथामुग्रतः
सौम्यां पञ्चमुखीं भजन् ध्रुवमिमां लब्धोरुविद्यः कृती ।
भ्रूचापेषु समं कटाक्षविशिखान् पञ्चापयन् पञ्चसु
क्रुद्धः पञ्चमुखोग्रविक्रमसौ मां हन्तुमारिप्सते ॥६०॥

---

एतच्छ्रुत्वा अपवार्य इतरश्रवणनिरसनपूर्वकं केवलं वृन्दाश्राव्यमेवाह **वृन्द इति** । अयि वृन्दे ! विलोकय कुञ्चिते कुटिलीकृते भ्रुवौ यया तादृशीं कुञ्चितभ्रुवं पञ्चानां मुखानां समाहारः पञ्चमुखी तां सखिपञ्चकम् इति वदन् अन्तः सात्त्विकभावस्य प्रमोदाश्रुद्गमस्य गमकं गद्गदं वचः प्रयुञ्जानो नायकः मनोजाभिभूतमात्मानं विवृण्वन्नाह **कामेति** — कामः क्वचित्पञ्चमुखात् उग्रात् पीडितः, ततोऽर्जितकौशलः सौम्यां पञ्चमुखीमवाप्य चापेषु बाणं सन्निधाय पञ्चमुखतुल्यं विक्रमं तद्वैरनिर्यातनाय हन्तुमारभते इति भावं प्रकटयति — तद्यथा (क्वचित् पुरा) कामः पञ्चमुखतः उग्रात् "उग्रः कपर्दी श्रीकण्ठः" इत्यमरः रुद्रात् (पञ्चमुखः शिव इति प्रसिद्धिः) काञ्चिद्दारुणामवर्णनीयां व्यथामवाप्य (पश्चात्) लब्धा उर्वी महती विद्या धनुर्विद्या येन सः अत एव कृती कर्मणि कुशलः सन् इमां सौम्यां मधुरप्रकृतिं (न तूग्रां) पञ्चमुखीं सखीनां पञ्चकं ध्रुवं भजन् साहाय्यत्वेन विन्दन् तासां पञ्चसु भ्रूचापेषु भ्रुकुटीरूपेषु शरासनेषु कटाक्षविशिखान् अपाङ्गबाणान् पञ्चापयन् पञ्चतां साधयन् (कामः पञ्चबाणः इति प्रसिद्धिः) पञ्चमुखस्य सिंहस्य उग्रः विक्रमः इव उग्रविक्रमो यस्य तादृशं मां क्रुद्धः पूर्वं पञ्चमुखादवाप्तव्यथां स्मरन् रुष्टः हन्तुमारिप्सते

---

कृष्ण — (एक ओर, धीरे से) वृन्दे ! टेढ़ी भौंहों वाली इस पञ्चमुखी (पांच सहेलियों के इस झुण्ड) को देखो । (गद्गद होकर)

भीषण पञ्चमुख शङ्कर से किसी असीम वेदना को पाकर, अवश्य ही सोम (चन्द्र) गुण सम्पन्ना पञ्चमुखी [ > इन पांचों चन्द्रवदनियों ] के समक्ष आत्म समर्पण कर (आश्रित हो), प्रशस्त धनुर्विद्या को उपलब्ध कर चतुर यह मदन, शङ्कर से भी

---

KRṢṆA : (*aside*) Vṛndā : see the five faces with knitted brows ( < look at this frowning lioness Rādhā ).

(*in a faltering tone*)

60. Having suffered some intense pain from the fierce god, Śiva and then having latterly gained some excellence and skill in archery verily by waiting upon these mild five belles (Rādhā and her four friends), the angry

( इत्युद्घूर्णां नाटयति )

**मधुमङ्गलः** — ( अपवार्य ) हन्त, कीस विम्हलंतं वि अत्ताणअं ण रुन्धेसि जं कडक्खिज्जह्म जिह्मदिट्ठीहिं किशोरिआहिं। [हन्त ! कस्मात् विह्वलित-मप्यात्मान न रुणत्सि ? यत कटाक्ष्यामहे जिह्मदृष्टिभि किशोरिकाभिः।]

**कृष्ण** — ( सावहित्थम् ) सखे मधुमङ्गल ! कुटिलभ्रुवां कौटिल्य-वैचित्रीभिर्विस्मितोऽस्मि। भवतु, किं नस्तेन। कैतवनिह्नुतानां हिरण्मयानां

---

आरब्धुमिच्छति। व्यथाकारिण उग्रस्य प्रत्यपकाराशक्त काम तद्दुष्प्रविरम मा सन्त्रास्य तद्वैरनिर्यातनङ्करोतीति कल्पनयान प्रत्यनीकालङ्कार। अपि च पञ्चमुखपदे श्लेष वक्रोक्तिपरि-पोषकः। पद्यमिदं नायकस्य मूर्च्छाख्या कामस्य नवमीं दशा व्यनक्ति। अत्र शार्दूलविक्रीडित वृत्तम् ॥६०॥

प्रोद्दीप्तविकारमात्रो नायक इति वदन् उद्घूर्णां भ्रमिं नाटयति।

इमा दशामवाप्त नायक तत्सखो मधुमङ्गलोऽपवार्य धैर्य धर्तुमुपदिशति **हन्तेति** — हन्त खेदे। कस्मात् विह्वल व्याकुलीभावं गतमात्मान त्व न रुणत्सि नियम्यसि। धीरो भवेति तात्पर्यम्। यत जिह्मा कुटिला दृष्टयो यासा ताभि किशोरिकाभिर्नवयुवतिभ्य कटाक्ष्यामहे कटाक्षस्य विषयता नीयामहे।

कृष्ण सावहित्थं विकार गोपायन्निव प्राह **सख इति** — कुटिलभ्रुवा आसा युवतीनां कौटिल्यस्य वैचित्रीभि भङ्गीभि विस्मित चकितोऽस्मि। भवतु तेन नः किम् —

---

प्रचण्ड प्रतापी मुझ पर क्रुद्ध हो पाचो भौंह रूपी कमानो पर तिरछी चितवन के पाच तीखे तीरो को चढ़ाकर एक साथ ही आघात करने को उद्यत है ॥ ६० ॥

( ऐसा कहकर कृष्ण मूर्च्छा का अभिनय करते हैं )

**मधुमङ्गल** — ( एक ओर ) बड़ा खेद है ! तुम विक्षुब्ध हो रहे हो अपने पर नियन्त्रण क्यों नहीं करते ? क्यो कि कुटिल दृष्टिवाली ये बालाएँ हम पर कटाक्ष फेंक रही है।

**कृष्ण** — (मन के भाव को छिपाते हुए ) सखे, मधुमङ्गल ! मैं इन रमणियों की कुटिल भङ्गिमाओ से चकित हो गया हूँ। जो कुछ भी हो, हमारा

god of love, Cupid, putting five arrows of their side-long glances simultaneously upon the five bows of their brows makes ready to strike me, whose valour is more ferocious than that of a lion (Siva)

*( pretends reeling )*

MADHUMANGALA (*aside*) Ah ! why can't you restrain yourself from being perturbed ? We are being hit by these young women with crooked glances.

KRṢNA (*concealing his feelings*) Friend Madhumangala ! I am amazed at the varied crookedness of these belles o'

पंक्तिकुम्भानां शुल्को द्विगुणीकृत्य पुनः पञ्चदशानामेव शतगुणीक्रियताम् ।

मधुमङ्गलः — सुणाहि, राअउलस्स विंद-चउट्ठअं । अहिआरिणो सव्व-विज्जागुरुणो दे कलाकोडिओ । संक्खाहिण्णस्स काअत्थस्स मे तत्तकोडिओ । सुवलपहुदीणं दण्डिआणं पसुवालाणं पसवइकोडित्ति । [ शृणु ! राजकुलस्य वृन्द-चतुष्टयम् । अधिकारिणः सर्वविद्यागुरोस्तव कलाकोटयः । संख्याभिज्ञस्य कायस्थस्य मम तत्त्वकोटयः । सुबलप्रभृतीनां पशुपालानां पशुपतिकोटयः इति । ]

---

प्रकृतमनुसरामः — कैतवेन कपटेन निह्नुतानां गोपिकानां हिरण्मयानां सुवर्णेन घटितानां भरितानां वा पंक्तिः दश कुम्भानां शुल्कः द्विगुणीकृत्य पुनः नवनीतकुम्भान् पञ्च मेलयित्वा सम्भूय पञ्चदशानामेव शतगुणीक्रियतां कैतवस्य कृते दण्डरूपेणेति भावः ।

एतमादेशं लब्ध्वा गणनां विधाय मधुमङ्गलो विज्ञापयति **शृणु इति** — अत्र गणितमाह विश्वनाथचक्रवर्त्ती — "दशकलशानां शुल्कस्य द्विगुणीकरणे विंशतिलक्षाधिकं कोटित्रयं तस्य प्रकटपञ्चकलशशुल्केन अशीतिलक्षमितेन मेलने कोटिचतुष्टयं तस्य शतगुणीकरणे वृन्दचतुष्टयं (वृन्दमब्जमिति) भवति ।"— इति गणनामाकलय्य तदुपरि घट्टकर्मचारिणः पारिश्रमिकं योजयन् तद्विभाजनव्यवस्थां ज्ञापयति — तद्यथा — राजकुलस्य गणितानुसारं वृन्दचतुष्टयम् — तदुपरि घट्टस्य अधिकारिणः सर्व (कपट) - विद्यागुरोः तव प्रमुखस्य कलाकोटयः नृत्यादिचतुःषष्टिकलाः प्रसिद्धाः, अतः कलापदमत्र चतुःषष्टिसंख्यावाचकम् । संख्याभिज्ञस्य गणितज्ञस्य कायस्थस्य लेखपालस्य मम

---

उससे क्या ! छल से छिपाये हुए दश सुवर्ण कलशों की चुंगी दुगुनी करके फिर पन्द्रह का ही (=छुपाये हुए १० तथा प्रत्यक्ष ५ घट का) सौ गुना करो ।

मधुमङ्गल — सुनो, चार सौ करोड़ तो राजकुल का है, यहाँ के अधिकारी, समस्त विद्याओं में निष्णात तुम्हारे लिए चौंसठ करोड़, गणित के जानकार हम कायस्थ का पचीस करोड़ तथा सुबल आदि दण्डधारी ग्वालों का ग्यारह करोड़ ।

curved eye-brows. Let it be so. What have we to do with it ? Toll-tax may be calculated by doubling the cunningly concealed ten gold jars and then multiplying hundred times the fifteen (including the openly carried five gold pots).

MADHUMAṄGALA : Listen ! The estate revenue would be four hundred crores. Sixty-four crores would be yours who are the chief and the master of all arts and crafts. Twenty-five crores would be mine who am a calculation expert belonging to the writers' class ; and eleven crores would go to Subala and others who are staff-bearers and herdsmen.

कृष्ण — सम्भूय वृन्दपञ्चकं सिद्धम्।

राधा — (स्मित कृत्वा) तुम्हाणं भाअणाइं ण दीस्संति । कहिं माइस्सति एत्तिआइ वित्ताइं ? [युष्माक भाजनानि न दृश्यन्ते। क्व मास्यन्तीयन्ति वित्तानि ?]

कृष्ण. — नर्मणा कृतमेतेन, कर्मणा स्वयमर्पय ।
हर्षादुदितवर्ष्मात्र, वित्तं हरिणलोचने ॥६१॥

---

तत्वकोटय पञ्चविंशतिकोटय, साङ्ख्यनये तत्वाना पञ्चविंशति । तत सुबलप्रभृतीना दण्डिकाना दण्डधराणा पशुपालाना पशुपतयो रुद्रा एकादश तत्सङ्ख्याका कोटय एव सम्भूय (६४+२५+११=१००) शतकोटय अर्थात् वृन्दमेक राजस्वोपरि घटितम् इति। [अहो उत्कोचप्रकार !]

तदनुमत्य कृष्ण प्राह **सम्भूयेति** — सम्भूय योगेन एकीकृत्य सङ्कलय्य वा वृन्दपञ्चक सिद्धम्।

विस्मयावहामिमा गणना फूत्कर्तुमना राधा स्मित कृत्वोपहसति **युष्माकमिति**— युष्माक भवत्सविधे भाजनानि पात्राणि न दृश्यन्ते — इयन्ति वित्तानि क्व मास्यन्ति सगृहीतानि भवेयु । अत्र परिहासो नाम नाट्याङ्गम्।

परिहास प्रतिषेधमान कृष्ण कार्यरूपेण शुल्कदानायाग्रह्णाति **नर्मणेति** — अये हरिणस्य लोचने इव लोचने यस्यास्तादृशि सुनयने । एतेन नर्मणा परिहासेन कृतमलमस्तु । इदानीं कर्मणा कार्यरूपेण वस्तुत अत्र उदित निश्चित वर्ष्म प्रमाण यस्य तत् वित्त द्रव्य स्वयमेव हर्षादर्पय देहि । अन्तर्गर्भितार्थस्तु अत्र व्रजे वित्त सुविदित उदित यौवनोद्भासि वर्ष्म वपु हर्षात्स्वय मह्यमर्पयेत्याकूतम्। "वर्ष्म देहप्रमाणयो"— इत्यमर । अत्र पद्यस्य परार्धे श्लेषालङ्कार । पद्यास्यमनुष्टुप वृत्तम् ॥६१॥

---

कृष्ण — सब मिलाकर तो वृन्द पञ्चक (५ सौ करोड=५ अरब) सिद्ध हो गया।

राधा — (मुस्कुरा कर) आप लोगों के पास बर्त्तन नहीं दिखाई दे रहे हैं, इतना धन कहाँ समायेगा।

कृष्ण — मृगलोचने ! इस परिहास को अब रहने दो। बताये हुए, निश्चित गणना के अनुसार देय द्रव्य राशि को प्रसन्नता पूर्वक स्वय देना कार्यरूप में परिणत करो। [ > इस व्रज में प्रसिद्ध सुन्दर शरीर को

KRSNA All told, it would be five hundred crores

RĀDHĀ *(smiling)* Your containers are not seen Where could so much of money be put in ?

KRṢNA : 61. Oh fawn eyed one ! enough of this joke, take action, and gladly pay of your own accord the said amount of money here on the spot (> Oh fawn-eyed one ! enough

**नान्दीमुखी** — (कृष्णान्तिकमासाद्य सासूयमिव) **मोहण ! अम्हअ भअवदीए सिणेहभाअणाणं उज्जुआणं एदाणं वालाणं कीस अलीअं चेअ पंत्तिकुंभाणं दाणं तुए वड्ढीअदि ?** [मोहन ! अस्माकं भगवत्याः स्नेहभाजनानां ऋजवीनामेतासां बालिकानां कस्मादलीकमेव पंक्तिकुम्भानां दानं त्वया वर्द्धयते ?]

कृष्णः — **नान्दीमुखि ! न कदाप्यलीकमिदम् । सत्यमेव पञ्चेमाः पञ्चदशकलसीविलासभाजः ।**

**नान्दीमुखी — णाअरिन्द, महाव्वदिणीए पव्वइआए परिअणो**

ततो नान्दीमुखी कृष्णस्य अन्तिकं समीपमासाद्य उपेत्य असूयां प्रकटयन्त्याह **मोहनेति** — अस्माकं भगवत्याः पौर्णमास्याः स्नेहभाजनानां प्रेमपात्राणां ऋज्वीनां प्रकृत्या सरलानां बालिकानामेतासां कस्मादलीकं मिथ्यैव पंक्तिकुम्भानां दशकलशीनां दानं शुल्कस्त्वया वर्द्धयते इति ।

कृष्णः प्रतिवक्ति **नेति** — न कदापि मनागपि अलीकमेतत् । सत्यम् इमाः पञ्च पञ्चदशकलसीनां विलासभाजः सौभाग्यवत्यः ।

तदाक्षिपन्ती नान्दीमुखी पुनः प्राह **नागरेन्द्रेति** — महाव्रतिन्याः तपस्विन्याः प्रव्रजितायाः त्यक्तसंसारक्रमायाः परिजनः मादृशो जनः निर्धारितं निश्चितमज्ञात्वा

---

हर्ष से स्वयं सौंप दो ] ॥ ६१ ॥

**नान्दीमुखी**— (कृष्ण के पास आकर, झिड़कती हुई सी) मोहन ! हमारी भगवती के स्नेहपात्र सीधी-सादी इन बालिकाओं के लिए तुम क्यों झूठे ही दश कलशों की चुंगी बढ़ा रहे हो ।

**कृष्ण** — नान्दीमुखि ! यह झूठ कभी भी नहीं है, सच में ये पाँचों गोपियाँ पन्द्रह कलसियाँ लिये हैं ।

**नान्दीमुखी**— नागरेन्द्र ! महाव्रतवती, संसार का परित्याग कर देने वाली पौर्णमासी के अनुयायी हम जैसे लोग किसी बात को निश्चित रूप से न जानते हुए

---

of this amorous pastime only in words. In action, voluntarily offer with pleasure your blooming person, to me).

NĀNDĪMUKHĪ : (*approaching Kṛṣṇa as though indignantly*) Mohana ! why do you falsely increase the toll-tax of the ten gold pots for these simple, innocent girls who enjoy the affection of our revered Paurnamāsī ?

KṚṢṆA : Nāndīmukhi : never is this false. In fact, these five belles possess fifteen pots.

NĀNDĪMUKHĪ : Illustrious citizen, persons like me who are the attendants of the pious recluse, Paurṇamāsī would not

मारिसो जणो णिद्धारिदं अजाणिअ ण क्खु विण्णवेदि । तहवि जइ मह वअणे संदिहाणोसि तदो सअ च्चेअ आअदुअ पच्चक्खं पेक्ख । [नागरेन्द्र ! महाव्रतिन्याः प्रव्रजितायाः परिजनो मादृशो जनो निर्धारितमज्ञात्वा न खलु विज्ञापयति । तथापि यदि मम वचने सन्दिहानोऽसि तदा स्वयमेव आगत्य प्रत्यक्षं पश्य ।]

( इति कृष्णेन सह राधामुपेत्य )

हला, एसो दुल्ललिदो गोउलिंद-णंदणो । स दिव्वं पि मह वअणं ण पत्तिआजेदि । ता प्पसीद । ईसि अंबरं उक्खिविअ णिअ-वक्ख-परेन्तं पेक्खावंती मोआवेहि हठिल्लसेअरस्स हत्थादो सह-परिवारं अप्पाणं । [हला, एष दुर्ललितो गोकुलेन्द्रनन्दनः । स दिव्यमपि मम वचनं न प्रत्येति । तत्प्रसीद । ईषदम्बरमुत्क्षिप्य निजवक्षःप्रान्तं प्रक्षापयन्ती मोचय हठिल्लशेखरस्य हस्तात् सपरिवारमात्मानम् । ]

---

न खलु (त्वां) विज्ञापयति सन्दिहानः शङ्कालुः । हलेति — राधे । दुर्ललितः धृष्टः मम दिव्यं शपथोक्तं श्रद्धेयं वचः न प्रत्येति विश्वसिति । तत्प्रसीद ईषत् किञ्चित् अम्बरं वस्त्रं उत्क्षिप्यापसार्य निजवक्षःप्रान्तं उरसः परिसरं प्रक्षापयन्ती दर्शयन्ती हठिलानां हठधर्मिणां शेखरस्य चूडामणेः हस्तात् सपरिजनं सखीसमेतमात्मानं मोचयेति प्रस्तौति ।

---

कभी नहीं कहते । यदि मेरी बातों पर फिर भी सन्देह बना ही हो तो आकर स्वयं प्रत्यक्ष देख लो ।

( ऐसा कह कर कृष्ण के साथ राधा के पास जाकर )

राधे ! यह धृष्ट गोकुल का राजकुमार हमारी शपथ पूर्वक कही बातों का भी विश्वास नहीं कर रहा है, तो क्षमा करना । ज़रा वस्त्र को हटा कर अपने वक्षःस्थल के परिसर को दिखाकर हठियों के शिरोमणि के हाथ से अपनी सहेलियों के सहित अपने को छुड़ा लो ।

---

say anything without knowing it definitely. If, however, you doubt my statement, come and examine it yourself. (*going to Rādhā with Kṛṣṇa*) Friend ! this spoilt (naughty) son of the king of Gokula does not believe even my solemn declaration. Therefore lift the garment a bit, and just showing the border of your breasts get yourself released along with your friends from the grip of this most obstinate person.

**सर्वाः** — (साभ्यसूयम्) अवेहि दुव्वुद्धिए, अवेहि। [अपेहि दुर्बुद्धिके! अपेहि।]

**नान्दीमुखी** — (स्मित्वा) कधं हिदकधणे वि कुप्पथ। [कथं हितकथनेऽपि कुप्यथ।]

**कृष्णः** — किन्नश्छिन्नम्। यदत्र काञ्चनरक्तिकमपि न परिहरिष्यति हरिः।

**विशाखा** — (स्वगतम्) पढमं कण्हस्स दुदिअं वुंदज्जेव[1] उवज्जुज्जंती दीवसीहाए अग्गिणो पूअणं आरंभिस्स। (प्रकाशम्) णाअरिंद, कहिं पंच घोअ-

---

अमुष्मै उपक्रमायासूयन्त्यः सर्वाः सहचर्यः नान्दीमुखीं भर्त्सयन्ति **अपेहीति** — दूरमपसर दुर्बुद्धिकेऽनर्थकारिणि। अपेहि अस्मात् प्रयासात्। असूयाया हेतुस्तावत्त्वमेवेतः अपसृत्य क्वचिन्निर्जने स्वस्यैव उरःप्रदेशमुद्घाटयेति भावः।

स्मित्वा नान्दीमुखी कथयति कथमिति – किमर्थं यूयं हितकथनेऽपि कुप्यथ? हितोक्तिस्तु हठादयं स्वयं कञ्चुकीमुन्मोच्य वक्षो द्रक्ष्यति कुचमर्दनं वा करिष्यति तदपेक्षया स्वयं प्रदेशमात्रप्रदर्शनेन तुष्येत् चेत्स धृष्टः इति साधीयसो विकल्पस्य प्रस्तावे किम्मयाऽपराद्धम् इति।

कृष्णः सान्त्वयति नान्दीमुखीं **किन्न इति** — नः किं छिन्नं यद्येता भवत्या वचनं न शृण्वन्ति, अस्माकं किं नष्टम् न किमपि, (यतः) हरिः हरत्यसौ इति काञ्चनस्य रक्तिकं माषस्याष्टमभागमपि न परिहरिष्यति त्यक्ष्यति, सम्पूर्णमेव देयमादास्यतीति भावः।

उपायान्तरं कल्पयन्ती विशाखा स्वगतं चिन्तयति – शुल्कत्वेन देयतया प्रथमं कृष्णस्य दूतीं नर्मकर्मघटिकां वृन्दामेवोपयुञ्जाना दीपशिखया अग्नेः पूजनमारप्स्ये – अत्र निदर्शनालङ्कारः। इति विचिन्त्य प्रकाशं सर्वश्राव्यं प्राह **नागरेन्द्रेति** — कथय,

---

**सभी गोपियाँ**— (चिढ़कर) रहने दो, अनर्थकारिणि! दूर हटो।

**नान्दीमुखी**— (मुस्कुरा कर) हित की बात कहने पर भी तुम लोग कोप क्यों कर रही हो।

**कृष्ण** — तो हमारा क्या बिगड़ा, इस बात पर हरि रत्ती भर भी सोना नहीं छोड़ेगा।

**विशाखा** — (मन में ही) पहले कृष्ण की दूती वृन्दा का ही उपयोग कर दीप-शिखा के द्वारा अग्निपूजन का प्रयत्न करती हूँ। (समक्ष) नागरेन्द्र! बताओ,

---

ALL : (*In irritation*) Begone, you, wicked woman, begone.

NĀNDĪMUKHĪ : (*smiling*) How is it that you get angry even at salutary advice?

KṚṢṆA : What do we lose thereby ? Hari will not remit even a gram of gold in this case.

VIŚĀKHĀ : (*aside*) To start with, I shall employ Kṛṣṇa's confidante Vṛndā herself (to be offered to Kṛṣṇa) and begin

---

1. 'सुङ्के' (= शुल्के) – इत्यधिकः पाठः क्वचित्।

घडिआओ कहिं[1] एत्तिअं घडिदं घट्टसुलुक्कं ? होदु । तथावि उवआरिणं राअकुमारं तुमं अवेक्खिअ एत्थ णिक्कअम्मि[2] अम्हेहिं णिअपिअसही वुंदा तुह अप्पिदा । [ ( स्वगतम् ) प्रथम कृष्णस्य दूर्तीं वृन्दामेगोपयुआना दीपशिखया अग्ने पूजनमारप्स्ये । ( प्रकाशम् ) नागरेन्द्र, कथय पञ्च घृतघटिका कथं एतावदघटित घट्टशुल्कम् ? भवतु । तथापि उपकारिण राजकुमार त्वामपेक्ष्य अत्र निष्क्रयेऽस्माभिर्निजप्रियसखी वृन्दा तुभ्यमर्पिता । ]

सुबल — ( सस्कृतेन )

> वृन्दपञ्चतये युक्तमेकवृन्दार्पणं कथम् ।
> संख्याविदां न नः शक्यं गोसंख्यानां प्रतारणम् ॥६२॥

घृतघटिका पञ्चैव कथमेतावद् अघटितमनुचित घट्टशुल्क भवतु स्यादित्यर्थ. । तथापि उपकारिण राजकुमारं त्वामपेक्ष्य त्वत्कृते अत्र शुल्कदानविषये निष्क्रये प्रत्याम्नायरूपेण अस्माभि वृन्दा तुभ्यमर्पिता ता गृहाणेत्यर्थ ।

गणनाधिकृत सुबल एतदभ्यन्तरे सस्कृतमाश्रित्याह **वृन्देति** — वृन्दाना पञ्चतये पञ्चाब्जे देये तत्स्थाने एकवृन्दार्पण एकस्या वृन्दाया अर्पण कथ युज्यते — इति शेष । एव सख्याविदा गणितज्ञाना गोसख्याना गवि पृथिव्या सख्या ख्यातिर्येषां, तेषा कायस्थाना — पक्षे गोसख्याना गोपाना न प्रतारण वञ्चन न शक्यम् । अत्र वृन्देति पदभङ्गिम्ना सङ्ख्यापदे च श्लेषालङ्कारप्रयुक्ता वक्रोक्ति ॥ पद्य नामानुष्टुब्वृत्तम् ॥६२॥

---

पाँच ही तो नवनीत के कलश, इतनी अधिक घाट की चुगी किस तरह हो जायगी । फिर भी राजकुमार ! तुम्हें उपकारी जन जानकर बदले में [ > छुटकारा पाने के लिए ] अपनी प्रियसखी वृन्दा को हम लोग तुम्हें सौंप रहे हैं ।

सुबल— पाँच वृन्द ( पाच सौ करोड़ ) के कर रूप में निर्णीत हो जाने पर एक वृन्द का देना कैसे ठीक है । सख्या के पण्डितो को ठगना हम ग्वालों के लिये आसान नहीं । [ > दुनिया भर में विख्यात इस कायस्थों को ठगना आसान नहीं ] ॥६२॥

---

woshipping the Fire with the flame of a lamp *(aloud)* Cleverest gentleman, How is it that while the *ghee* pots are five, the toll tax amounts to such an extraordinary sum ? Nevertheless, in consideration of your being a benevolent prince, we offer you our dear friend Vṛndā as ransom

SUBALA 62 *(In Sanskrit)* Where five Vrndas ( hundred crores ) are to be paid, how far is it proper to offer only one Vṛnda(ā) ? It is impossible for us cowherds, to deceive these calculation experts so well known on the earth

---

1 'कह' – इति पाठान्तरम् । 2 'णिक्कए' – इति पाठान्तरम् ।

ललिता — (रोषमिवाभिनीय) विसाहे, सुठ्ठु मुद्धासि ज लहुए इमस्सिं अत्थे गरुईए अप्पणो सहीए वुंदाए अप्पणं कादु इच्छेसि। [विशाखे ! सुष्ठु मुग्धासि यत् लघावस्मिन्नर्थे गुर्व्या आत्मनः सख्या वृन्दाया अर्पणं कर्त्तुमिच्छसि।]

मधुमङ्गलः — ललिदे ! चिट्ठदु एदं अलीअं माहप्पं। [ललिते ! तिष्ठत्वेतत् अलीकम्माहात्म्यम्।]

ललिता — वडुअ, सुणाहि – तित्तिस[1]कोडिसुराणं सआआदो सुरिंदो वरिट्ठो ज एसो सअकोडिहत्थो। तदो वि भअवतो हिरण्णगब्भो ज एसो दिपरद्धवेहओ। तदो वि देई लच्छी ज सव्वसंपत्तिणं ईसरी। तदो वि वुंदा जा किर लच्छीं वि तुच्छीकदुअ काए वि अइरुव्वसिरीए लुद्धेण विण्णुणा कामिद त्ति भअवदीए मुहादो सुणीअदी। [वटो ! शृणु – त्रयस्त्रिंशत्कोटिसुरेभ्यः

एतत्सर्वं कपटमसहमाना वरीयसी सखी ललिता रोषं प्रदर्शयन्तीवाह विशाख इति — सुष्ठु परमं मुग्धा सरलस्वभावासि यत् लघौ क्षुद्रेऽस्मिन् अर्थे शुल्कदानरूपे गुर्व्याः महत्याः सख्याः वृन्दाया अर्पणं कर्त्तुमिच्छसि।

प्राह मधुमङ्गल. तिष्ठतु दूरे आस्तामिदमलीकं माहात्म्यं मिथ्यागौरवमिति। मधुमङ्गलमाक्षिपन्ती पुनर्ललिता प्रतिवक्ति **वटो इति** — हे वटो चपलधूर्त। शृणु अवधारय — [पुराणप्रसिद्धमेतत् यत्] देवाः त्रयस्त्रिंशत्कोटिसंख्याकाः, तेषु वरिष्ठः

---

ललिता— (रोष का अभिनय सी करती हुई) विशाखे ! बड़ी पगली हो, जो कि थोड़ी सी इस चुंगी के लिये अपनी इतनी बड़ी सहेली वृन्दा को दे देना चाहती हो।

मधुमङ्गल— ललिते ! इस झूठी बड़ाई को रहने दो।

ललिता— धूर्त छोकरे। सुनो, तैंतीस करोड़ देवों से इन्द्र श्रेष्ठ हैं, क्योंकि इनके हाथ में शतकोटि (१; सौ करोड़, २, वज्र) है, उनसे भी श्रेष्ठ भगवान् ब्रह्मा हैं, क्योंकि ये द्विपरार्द्ध वैभव से सम्पन्न हैं, उनसे भी श्रेष्ठ हैं लक्ष्मी जो कि समस्त सम्पत्ति की ईश्वरी है, लक्ष्मी से भी बड़ी है वृन्दा,

---

LALITĀ : (*affecting anger*) Viśākhā : you are quite silly that you are ready to offer Vṛndā, your most valued friend, for such a paltry sum.

MADHUMAṄGALA : Lalitā, keep aside this false dignity.

LALITĀ : Dear chap, listen; god Indra is superior to thirty-three crores of gods; for, he possesses a hundred crores (<has his thunderbolt in his hand); to him is superior Hiraṇyagarbha (Brahmā, the Creator) who is a billionaire. Lakṣmī, the goddess of wealth is superior even

---

1. "तेत्तिस" – इति पाठभेदः।

सकाशात् सुरेन्द्रो वरिष्ठो यदेष शतकोटिहस्त । ततोऽपि भगवान् हिरण्यगर्भो यदेष द्विपरार्द्धवैभव । ततोऽपि देवी लक्ष्मी यदेषा सर्वसम्पत्तीनामीश्वरी, ततोऽपि वृन्दा या किल लक्ष्मीमपि तुच्छीकृत्य कयाप्यपूर्वश्रिया लुब्धेन विष्णुना कामितेति भगवत्या मुखात् श्रूयते ।]

**विशाखा** —( पदे निपत्य काकुमातन्वती ) सहि ललिदे, मुहरं मंतेसि तहवि तक्कालिअं दूसहदुक्खं परिहरिदुं एव्वं अजुत्तं वि कादु कामह्मि । ता प्पसीद । अणुमण्णेहि वुंदासमप्पणं । पुरोडासओग्घाणे तुण्णं पुणम्ह अत्ताणअं । [सखि ललिते ! मुखर मन्त्रयसे, तथापि तात्कालिक दु सहदु खं परिहर्तुमेवमयुक्तमपि कर्तुकामास्मि । तत् प्रसीद । अनुमन्यस्व वृन्दासमर्पणम् । पुरोडाशोद्घ्राणनेन तूर्णं पुनीम आत्मानम् ।]

---

सुरेन्द्र यस्य हस्ते शतकोटि पक्षे वज्रम् । ततोऽप्यधिक हिरण्यगर्भो ब्रह्मा यस्य वैभव परार्द्धद्वयमित । परार्द्धन्तु "लक्षलक्षकोटि ।" इद चरमसंख्या अष्टादशाङ्कपर्यन्तम् ।

ततोऽपि लक्ष्मी अधिका यत सा सर्वसम्पत्तीनामीश्वरी, ततोऽपि वृन्दा यस्या श्रीविभवेनाकृष्टो विष्णुर्लक्ष्मीमधरीकृत्य स्वीचकारेति भगवत्या पौर्णमास्या मुखात् श्रूयते- इति वृन्दाया माहात्म्यमवेहि ।

अत्रान्तरे कार्यसाधनप्रवणा विशाखा ललिताया पादयो निपत्यानुनयन्ती काकु-मार्त्तस्वरमातन्वती आह **सखि इति** — मुखर मन्त्रयसे वाचालतया ब्रवीषि सत्यमपि चेत् तात्कालिक ( कालाट्ठञ् ) वर्त्तमान घनावरोधरूप दु सहदु ख परिहर्तुमेव वृन्दार्पण-

---

जिसकी किसी असाधारण सुषमा पर लुब्ध हो, विष्णु ने लक्ष्मी को भी तुच्छ मानकर उसे अपनी प्रेयसी बना लिया, —भगवती पौर्णमासी के मुँह से ऐसा सुना गया है ।

**विशाखा** — (पैर पर गिरकर घिघियाती हुई ) सखि, ललिते ! तुम बड़ी वाक्पटुता से तो कह रही हो, फिर भी तात्कालिक असह्य दु ख को हटाने के लिए अनुचित होने पर भी करना चाहती हूँ , इसलिये मान जाओ, वृन्दा

to him inasmuch as she is the ruler of the entire riches of the world Then superior even to her is Vṛndā who, as related by the revered Paurnamāsī, was coveted by Lord Viṣṇu, who allured by her inextollable superb beauty disregarded even Goddess Lakṣmī

VISĀKHĀ (*falling down at her feet and changing her voice in a drawl*) Friend Lalitā, you advise so forcibly (sweetly). Yet I wish to do in this way even what is improper to ward off the imminent, intolerable distress

Therefore, be pleased to permit Vṛndā being offered

( ललिता स्मेरेव शिरो विनमय्य तूष्णीं तिष्ठति )

**विशाखा** — ललिदे ! विण्णादं दे आउदं, जं एक्कं दिअअं चेअ अणुमण्णेसि । [ललिते ! विज्ञातं ते आकूतं, यदेकं दिवसमेवानुमन्यसे । ]

**कृष्णः** — हन्त, नान्दीमुखि ! दृष्टमत्यद्भुतं भगवत्या ! ततः पृच्छ्यतामिदम्[1] कथमेताभिर्मत्कर्णयुगारूधताण्डवयोर्मकरकुण्डलयोः द्वन्द्वं न शुल्कितम् ।

रूपमयुक्तमनुचितमपि कर्त्तुकामाऽस्मि — तत्प्रसीद मम प्रस्तावमनुमन्यस्व, येन वयमित आत्मानं मोचयित्वा शीघ्रमेव यज्ञवाटमुपेत्य तत्र हव्यस्थपुरोडाशस्य उद्घ्राणेन गन्धग्रहणेनात्मानं तूर्णं सत्वरं पुनीम पवित्रतां नयेम — पुनीमेति पुनातेर्लिङि रूपम् ।

[ विशाखाकृतेनानुनयेन स्मेरा स्मितमुखी ललिता त्रपया शिरो विनमय्य तूष्णीं निश्शब्दं तिष्ठति ] आह च **ललित इति** – आकूतं हार्दभावः ।
कृष्णो नान्दीमुखीं शंसति **हन्तेति** — भगवत्या दृष्टमद्भुतं, एतासां विचित्रेयं कल्पना ज्ञाता — पृच्छ्यतामिदमेताः — मदीयं वस्तु वृन्दा, सा एव मह्यमर्प्येत तदा किन्तु मत्कर्णवर्तिनी मदीये कुण्डले एव शुल्करूपेण न दत्ते । मत्कर्णगतकुण्डलार्पणमिव वृन्दार्पणमस्तीति "अभवन्वस्तुसम्बन्धः उपमापरिकल्पक" इति लक्षणान्निदर्शना ।

---

के समर्पण करने की स्वीकृति दे दो, ताकि हव्य के गन्ध ग्रहण कर शीघ्र ही अपने को हम पवित्र कर लें ।

( ललिता कुछ मुस्कुराती हुई सी गर्दन झुकाये चुपचाप खड़ी रहती है । )

**विशाखा** — ललिते ! तुम्हारा अभिप्राय समझ गई, आज ही के दिन के लिए तुम्हें छूट चाहिये ।

**कृष्ण** — अहो नान्दीमुखि ! देख लिया आपने इस अति विचित्र चरित्र को । इनसे जरा पूछिये कि — इन लोगों ने मेरे दोनों कानों में झूलते मकराकार के कुण्डल के जोड़े को चुंगी के रूप में क्यों नहीं दे दिया ?

to Kṛṣṇa. Let us soon purify ourselves by smelling the sacrificial oblation ( = let us soon reach the place of sacrifice by freeing ourselves from the clutches of Kṛṣṇa ).

( *Lalitā stands silent with her head bent down, somewhat smiling* )

VIŚĀKHĀ : Lalitā ! I understand your meaning : you allow this only for a day.

KṚṢṆA : Ah Nāndīmukhī ! did you observe the most amazing thing ? Well then, it may be asked, why my own pair of ear-rings dangling from my ears was not offered by

---

1. "मिति" – अधिकः क्वचित् पाठः ।

नान्दीमुखी — कित्तिदाकित्तिदाइणि राहिए, अज्जुत्तं क्खु एदं ज वणमालिणो च्चेअ वुंदाये इमस्स सुलुक्कप्पणं। [कीर्तिदाकीर्तिदायिनि राधिके ! अयुक्तं खल्विदं यद्वनमालिने एव वन्दयासौ शुल्कार्पणम्।]

राधा — सहि वुंदे ! किंति तुह्नीं चिट्ठसि तूण्णं अप्पणो पक्खं उल्लासेहि । [सखि, वृन्दे ! किमिति तूर्णीं तिष्ठसि ? तूर्णमात्मनः पक्षमुल्लासय।]

(कृष्ण वृन्दावदनमवलोकयन् विलोचनकोण कूणयति)

वृन्दा — नागरेन्द्र ! कृतं निरर्थकं दृशास्ताडनेन यदियं वृन्दा वृन्दावनेश्वरीमनुवर्तते।

---

स्वीकुर्वाणा कृष्णस्य युक्तायुक्ति नान्दीमुखी राधां वक्ति **अयि इति** — कीर्तिदा एतन्नाम्नी वृषभानोः पत्नी तस्यै स्माने कीर्तिदायिनि राधिके ! अहो मन्यस्व यद्वनमालिने कृष्णाय वृन्दारूपेण शुल्कार्पणमयुक्तमसङ्गतमिति।

राधा वृन्दामेव किन्ते मत इति पृच्छति **सखीति** — तूर्णम् आत्मन पक्षं स्वत्वं मतमुल्लासय प्रकटयेति। [कृष्ण वृन्दामुखं पश्यन् स्वस्य नेत्रकोणं कूणयति चाल्यति सङ्केतार्थम्] तदुपरि वृन्दा प्राह **नागरेन्द्रेति** — दृशास्ताडनेन व्यर्थमेव नेत्रकूणनेन कृतमलम्, यतः इयं वृन्दा तु वृन्दावनेश्वरीं राधामनुवर्तते। वृन्दाया भङ्गया

---

[ > मेरी वृन्दा को मुझे ही चुंगी के रूप में देना, मानों मेरे दोनों कुण्डल मुझे ही कर रूप में देना है।]

नान्दीमुखी— कीर्तिदा (=अपनी माँ के) यश को बढ़ाने वाली राधिके ! वनमाली को चुंगी के रूप में वृन्दा को ही देना, यह तो सही में बड़ा ही अनुचित है।

राधा — सखि, वृन्दे ! चुप क्या खड़ी हो, शीघ्र अपना मत प्रकट करो।
(कृष्ण वृन्दा का मुँह देखते हुए आँख का कोना दबाते हैं )

वृन्दा — नागरेन्द्र ! आँख मारने वाली बात व्यर्थ है, क्योंकि यह वृन्दा वृन्दावनेश्वरी राधा के इशारे पर चलती है।

---

these ladies in lieu of the toll-tax due to me from them ?

NĀNDĪMUKHĪ · Rādhā, the bringer of fame to your mother, Kīrtidā by name ! it is, indeed, improper to pay the toll-tax by offering his own Vṛndā to Kṛṣṇa himself.

RĀDHĀ · Friend Vṛndā ! why are you standing silent (like this) ? Clarify your position at once.
*(Kṛṣṇa looks at the face of Vṛndā and contracts the corner of his eye)*

VṚNDĀ Chief of the citizens ! enough of your vain beating of the eyes, for this Vṛndā follows Vṛndāvaneśvarī, Rādhā.

**सर्वाः** — ( सोत्प्रासं विहस्य ) भअवदि लज्जे ! कहिं गदासि । प्पसीद, प्पसीद । [ भगवति लज्जे ! कुत्र गतासि ? प्रसीद, प्रसीद । ]

**वृन्दा** — सखि, वृन्दावनाधीश्वरि ! ममात्र काचिद्विज्ञप्तिरवाप्तावसरा वर्त्तते[1] ।

**राधा** — सहि वुन्दे ! कीदिसी एसा, भणीअदु ? [ सखि वृन्दे ! कीदृशी एषा ? भणतु । ]

**वृन्दा** — द्यूतकारसंसदोऽपि भूयिष्ठं घट्टपालगोष्ठी साधुभिरमितः श्लाघ्यते तदत्र न समञ्जसः । प्राञ्जलोऽयं जनः । विक्रयोऽपक्रमश्चेत् क्वचिदन्यत्र विक्रीयताम् ।

---

एवं युक्त्या राधार्पणस्यानुमोदनं श्रुत्वा सर्वाः सख्यः सोत्प्रासं सोल्लुण्ठमुपहस्य कियाश्चित्र-पोऽयं प्रस्ताव इति मत्वा लज्जादेवीमेवाकारयन्ति **भगवति लज्जे इति** — कुत्र गतासि प्रसीदेति ।

राधां सम्बोधयति वृन्दा **सखीति** — विज्ञप्तिर्निवेदनम् । अवाप्तावसरा समयोचिता । राधिकयाऽनुमता पुनराह **द्यूतेति** — [ भुवि विदितमेवं यत् द्यूतकाराणां संसत् कपटाचरणस्य धूर्त्ततायाश्च भूमिः किन्तु ] इयं घट्टपालगोष्ठी द्यूतकाराणां सभिकानां संसदोऽपि भूयिष्ठा धूर्ताचरणेऽतिवर्त्तमाना इति साधुभिः सुजनैः अमितः चतुर्दिक्षु श्लाघ्यते शस्यते, तत् एतस्मिन् विषये न अस्माकं समञ्जसः यदयं प्राञ्जलः सरलोऽयं मद्विधो जनः । विक्रयस्य शुल्केनात्मार्पणस्य उपक्रमः आरम्भश्चेद-न्यत्र क्वचित् विक्रीयताम् — नेदमुपयुक्तं स्थानमिति ।

---

**सभी गोपियाँ** — ( उल्लास के साथ हँसकर ) भगवति, लज्जे ! तू कहाँ चली गई हो, मान जाओ, अब तो लौट आओ ।

**वृन्दा** — वृन्दावन की स्वामिनी सखि, राधे ! इस समय अवसर के अनुरूप मेरा कुछ निवेदन है ।

**राधा** — सखि, वृन्दे ! वह क्या है, कहो ।

**वृन्दा** — घाट के अधिकारी महोदय की गोष्ठी जुआड़ियों के जमघट से भी बढ़ कर है ऐसा चारों ओर सज्जनों द्वारा प्रशंसित है । अतः

---

ALL : (*saracastically laughing*) Revered Shame ! where are you gone ? Have mercy please.

VṚNDĀ : Friend Vṛndāvaneśvarī ! I have a request, which is timely.

RĀDHĀ : Friend Vṛndā ! what is it ? please say.

VṚNDĀ : The association of the toll-gate keepers is highly extolled by good people all around, as one, more than

---

1. "बभूव" – इति पाठान्तरम् ।

कृष्ण — (सस्मितम्) सत्यममूरसम्भुक्ता एवाप्रतिमपूर्णलक्ष्मीभराः सुभ्रुवो राजकुलकार्यमर्हन्ति । वृन्दा [ लक्ष्मी ] तु विष्णुना चिरं सम्भुज्य निर्भरमपारेण वैभवेन रिक्तीकृता । तदलमेतया ।

राधा — (विहस्य) एदं क्खु 'अलाभादङ्गनात्यागस्तुरङ्गब्रह्मचर्यकम्'-

---

कृष्ण वृन्दावाक्यमुपहसन्निवाह सत्यमिति — अमू गोपबाला सत्य असम्भुक्ता अत एव अप्रतिम अनुपम [ न विद्यते प्रतिमा तुल्यता यस्य स अप्रतिम ] पूर्ण लक्ष्म्या शोभाया भर यासा तादृश्य एव सुभ्रुवो राजकुलकार्यमर्हन्ति, तदुपयुक्ता एव, वृन्दा ( लक्ष्मी ) तु विष्णुना चिर सम्भुज्य निर्भर नितान्तमेव अपारेण वैभवेन शोभातिरेकेण रिक्तीकृता नि शेषिता, तदलमेतया इति ।

तत्र राधिका सोपहासमाह एतदिति — एतत् खलु 'अलाभाद् अप्राप्तायां सुन्दर्यां अङ्गनात्याग = नापेक्ष्यते मया परित्यक्तेति कथन तुरङ्गब्रह्मचर्यकम् घोटका

---

यहाँ उचित नहीं है। हम सरल लोग हैं। सुभी के लिये यदि बेचने का ही उपक्रम हो तो कहीं दूसरी जगह जाकर बेचना चाहिये।

कृष्ण — (मुस्कुराते हुए) सचमुच सम्भोग से अपरिचित, अनुपम, पूर्ण सुषमा से सम्पन्न ये रमणियाँ ही राजकुल के लिये उपयुक्त हैं। विष्णु ने बहुत काल तक यथेच्छ उपभोग कर वृन्दा (लक्ष्मी) को तो असीम वैभव [ > अपार सौन्दर्य राशि ] से खाली कर दिया, इसलिये उसे तो रहने दो।

राधा — (हस कर) "न मिलने पर, नारी का परित्याग कर दिया", ऐसा कहना

---

the gang of gamblers We, who are plain people are misfit here So if the intention is to sell anything, (for paying the tax), it may be done elsewhere.

KRSNA (*smiling*) True only these belles who have not been enjoyed and are of incomparable beauty (excessive wealth) deserve to be the object of a royal family (to be sued in a court of justice) As regards Vṛndā (Laksmī), she was intensely and for a long time enjoyed by Visnu and was deprived of her immense beauty (inexhaustible wealth) So, I have no use of this Vṛndā

RĀDHĀ (*Laughing*) This is, indeed, what the wise say "Forced

त्ति धीरेहिं भणिअदि । [एतत् खलु 'अलाभादङ्गनात्यागस्तुरङ्गब्रह्मचर्यकम्'-इति धीरैर्मण्यते ।]

मधुमङ्गलः — ( जनान्तिकम् ) विसाहे ! णिच्चिदं तुम्हाणं घट्टदाणे अणुउलो हुविस्सं । जं काअत्थविज्जापारंगदोह्मि । ता देहि मे किंपि पारितोसिअं । [विशाखे ! निश्चितं युष्माकं घट्टदानेऽनुकूलो भविष्यामि, यत् कायस्थविद्यापारङ्गतोऽस्मि । तद्देहि मे किमपि पारितोषिकम् ।]

विशाखा — अज्ज ! णव्वं सक्करं दाइस्सं । [आर्य ! नव्यां शर्करां दास्यामि ।]

मधुमङ्गलः — विसाहे, णूणं परिहसिज्जामि । [विशाखे ! नूनं परिहस्ये ।]

विशाखा — भअवंतस्स सूरस्स सवामि । [भगवते सूर्याय शपामि]

---

यथा वडवाया अलाभे ब्रह्मचर्यं धारयन्ति तद्वदेवेदम्' – इति धीरैः विचारकैः भण्यते । लक्ष्मीमतिक्रम्य वर्तमाना वृन्दा न लभ्येत तदालमेतयेति भावः तुरङ्गब्रह्मचर्यसदृश एवेति ।

मधुमङ्गलः उत्कोचाभिपलोलुपोऽत्रान्तराले विशाखां साधयति **विशाख इति —** अहं घट्टदाने शुल्कग्रहणेऽनुकूलः सहायको भविष्यामि यतः अहं कायस्थविद्यायां गणनाक्रमे पारङ्गतः कुशलोऽस्मि । तद्देहि मे किञ्चित् पारितोषिकमिति ।

तमाश्वासयति त्वमस्माकं कार्यं साधयाहं पारितोषिकरूपेण तुभ्यं नव्यां शर्करां दास्ये । विशाखां साधयित्वा पारितोषिकविषये सत्यापितो बटुर्मधुमङ्गलस्ततः

---

तुच्छ तुरङ्गब्रह्मचर्य है", — ऐसा विचारकों का कहना है ।

**मधुमङ्गल —** ( एक ओर ) विशाखे ! मैं तुम लोगों के लिये चुंगी के लेन-देन में निश्चित ही सहायक बनूंगा, क्योंकि मैं गणना की कला में निष्णात हूँ । इसलिये मुझे कुछ तो पुरस्कार दो ।

**विशाखा —** आर्य ! तुम्हें नयी शर्करा दूंगी ।

**मधुमङ्गल —** विशाखे ! यह तो तुम हँसी कर रही हो ।

**विशाखा —** भगवान् सूर्य की शपथ ले रही हूँ ।

---

celibacy – giving up a woman when not available." !

MADHUMAṄGALA : Viśākhā, I shall certainly be favourable (friendly) to you in paying the toll-tax, for I am an expert in accountancy. So, give me some reward.

VIŚĀKHĀ : Friend, ( Venerable gentleman ) ! I shall give you fresh sugarcandy.

MADHUMAṄGALA : Viśākhā, I am, indeed, being ridiculed.

VIŚĀKHĀ : By the god Sun I promise you.

मधुमङ्गल — ( सहर्षं कृष्णमुपेत्य ) पिअवअस्स ! माणसमए पमदा-सअकोडी-रोस-भंजणे विअक्खणोम्हि ? दीपाअली कोदुए सुरही सअकोडी पुआवणे आचरिओ म्हि । तादिज्जउ अज्ज महामहूसवे मज्झ अणब्भत्थित-पुव्वा सअकोडी दक्खिणा । [प्रियवयस्य ! मानसमये प्रमदाशतकोटिरोषभञ्जने विचक्षणोऽस्मि। दीपावलीकौतुके सुरभिशतकोटिपूजाया आचार्योऽस्मि, तद्दीयतामद्य महामहोत्सवे मह्यमनभ्यर्थितपूर्वा शतकोटिदक्षिणा । ]

( कृष्ण स्मित्वा तूर्णीं तिष्ठति )

( अपवार्य ) विसाहे, 'मौनं सम्मतिलक्षणम्' त्ति जाणासि ज्जेअ, ता देहि प्पतिस्सुदं । [ विशाखे ! 'मौन सम्मतिलक्षणम्' इति जानास्येव, तद्देहि प्रतिश्रुतम् । ]

( इत्यञ्च [ अपलिं ] प्रसारयति )

---

किञ्चित्तोऽप्यवाप्तु कृष्णं साधयति **मानेति** — मानिनीनां मानसमये प्रणयकोपप्रसङ्गे प्रमदानां शतकोटीनां अब्जसदृशकानां ( अथवा प्रमदाना शतकोटिसमस्य वज्रवत्कठोरस्य ) रोषस्य भञ्जने भङ्गे विचक्षण पटुरस्मि । भगवतो रासलालाया शतकोटिप्रमदा अभूवन्निति प्रसिद्धि । पुनराह मौनेन वर्तमान कृष्ण वाक्य प्रतिश्रुतस्य स्वीकृतस्य दानायाभ्यर्थयन्नसौ वृन्दाया पुरत अञ्चल वस्त्रकोण प्रसारयति । अपलिमिति पाठभेद सुगम । **दीपा-वलीत्ति** — सुरभीणां गवाम् । अनभ्यर्थित पूर्वा पूर्वमयाचितेत्यर्थ ।

---

मधुमङ्गल — ( बड़े हर्ष से कृष्ण के पास जाकर ) प्रिय मित्र ! मान के समय सौ करोड़ मानिनियों के वज्रसदृश कोप को तोड़ देने में मैं बड़ा ही दक्ष हूँ। दीवाली पर्व पर शतकोटि सुरभि की पूजा का आचार्य हूँ, तो महामहोत्सव पर्व पर पहले कभी न माँगी हुई १०० करोड़ की दक्षिणा आज मुझे दे दो।

( कृष्ण मुस्कुरा कर चुप रह जाते हैं )

( धीरे से ) विशाखे ! मौन रहना स्वीकृति का लक्षण है, यह तो तुम

---

MADHUMANGALA ( *joyfully approaching Kṛṣna* )

Dear friend, where it is a matter of jealous anger ( *in women* ) I am very clever in smashing the thunderbolt like anger of a hundred crores of women On the Dīpāvalī festival I officiate as a high priest in worshipping a hundred crores of cows. So give me today on the occasion of this great festival a fee of a hundred crore ( *of gold coins* ), never requested for before

( *Kṛsna smiling remains silent* )

( *aside* ) Viśākhā, you know that 'Silence is an

**विशाखा** — ( स्मित्वा ) गेण्हीअदु, एसा सक्करा। [गृह्यातु एषा शर्करा]

( इति कर्परां समर्पयति )

**मधुमङ्गलः** — ( उच्चैर्विहस्य ) धुत्ते, चिट्ठ चिट्ठ णिक्किदं वो करिस्सं ( इति कृष्णान्तिकमासाद्य ) पिअवअस्स, लहुअम्मि कज्जे अलं विलंबेण, गेण्ह सुलुक्कं। [ धूर्त्ते ! तिष्ठ तिष्ठ। निष्कृतिं वः करिष्यामि, ( इति कृष्णान्तिकमासाद्य ) प्रियवयस्य ! लघुनि कार्ये अलं विलम्बेन, गृहाण शुल्कम्।]

**कृष्णः** — सखे, मधुमङ्गल ! मधुसूदनोऽस्मि, तदेषा राधिकाख्यां

विशाखा सस्मिता मधुमङ्गलाय शर्करेति कृत्वा कर्परां कपालखण्डं समर्पयति। शर्करा खण्डविकृतिः मधुरा, "शर्करा कर्परांऽशेऽपीत्यमरः"। अत्रापि श्लेषः। खण्डखाद्यं नव्यां शर्करां दातुं प्रतिश्रुत्य तत्स्थाने कर्परांशप्रदानेन विशाखायै कुप्यन् मधुमङ्गलः उच्चैर्विहस्य विशाखामाह **धूर्त्ते इति** — अयि वञ्चिके तिष्ठ क्षणं स्थिरा भव; ( अस्य वञ्चनस्य ) निष्कृतिं प्रत्यपकारं करिष्ये – इति कथयित्वा कृष्णस्य अन्तिकं सामीप्यमासाद्य प्राऽऽयाह **प्रियेति** — लघुनि स्वरूपे कार्ये अलं विलम्बेन, शुल्कं गृहाणेति।

एतावति कृष्णः प्राह **सखे इति** — अहं मधु सूदते हन्ति ( वस्तुतो मधुनाम्नो दैत्यस्य हन्ता ) अथवा सूदयति आस्वादयत्यसौ मधुसूदनः भ्रमरः अस्मि, अत एषा

---

जानती ही हो, तुमने जो कहा है वह तो दे दो।

( ऐसा कह कर आँचल ( अञ्जलि ) फैलाता है )

**विशाखा** — ( मुस्कुरा कर ) लीजिये, यह शर्करा है।

( ऐसा कह कर खपरैल की कङ्कड़ियाँ देती है )

**मधुमङ्गल** — ( अट्टहास कर के ) धूर्त्ते ! अच्छा ठहरो। इसका बदला तुम्हें दूँगा। ( कृष्ण के पास जाकर ) प्रिय वयस्य ! छोटे काम में विलम्ब ठीक नहीं। चुंगी ले लो।

**कृष्ण** — मित्र, मधुमङ्गल ! मैं मधुरसास्वादी ( =भ्रमर ) [ > मधु नामक दैत्य

---

indication of consent'. So, give me what was promised. [*He spreads out the hem of his garment (or palm) to receive what would be given.* ) ]

VIŚĀKHĀ : ( *laughing* ) Here is *Śarkarā*; take it ( *she offers him potsherds* ).

MADHUMAṄGALA : ( *Laughing loudly* ) Rogue, wait. I shall make you expiate for this. ( *He goes near Kṛṣṇa* ) Dear friend, enough of delay in such a small work. Extort the tax.

KṚṢṆA : Friend, Madhumaṅgala, I am Madhusūdana, ( Kṛṣṇa

गता भ्रमरी शुल्कार्थमादेया ।

वृन्दा —फुल्लेयं चम्पकलतैव सतृषो मधुसूदनस्योचिता ।

कृष्णः — वृन्दे ! तत्त्वानभिज्ञासि, राधा खल्वभिरूपा या विपरीता धारा माध्वीकमयी सम्पद्यते ।

राधिकाख्यां गता राधिकेति नाम्ना ख्याता, रेफेण अधिकेन आख्या यस्या सा द्विरेफपदवाच्या भ्रमरी भ्रमणशीला कामिनी शुल्कार्थमादेया गृहीतव्या । अत्रापि श्लेष एव । आदानौचित्यं तु उभयो. भ्रमरजातीयत्वात् साधर्म्येणावगन्तव्यम् ।

फुल्लेति — वृन्दा राधां सरक्षितुं मधुमाहिणो मधुसूदनस्य सतृष· लोलुपस्य कृते इयं फुल्ला विकसितयौवना चम्पकलता एव उचिता चम्पकेषु मधुप्राचुर्यादिति लोभयति ।

कृष्णस्तु वृन्दां बोधयति वृन्दे इति — त्वं तत्त्वस्य सारस्य अनभिज्ञा असि यत· राधा खलु एव अभिरूपा सुन्दरी अनुकूला च, या विपरीता अपि वर्णविपर्ययेणापि ( पक्षे विपरीता मानवशात् पराङ्मुखी अपि ) माध्वीकमयी मधु क्षरन्ती धारा एव सम्पद्यते — यत. प्रणयकोपञ्जता भामिनी सरसायते एव ।

---

का हन्ता ] हूँ। इस लिए अधिक रेफ वाली ( र + अधिका = राधिका ) नाम से प्रसिद्ध यह भ्रमरी चुंगी के रूप में ग्रहण के लिए उपयुक्त है।

वृन्दा — खिली हुई यह चम्पा की लता ही इस लुब्ध भ्रमर के लिये ठीक है । [ > नव विकसित यौवना यह चम्पकलता ही इस लोलुप मधुसूदन के लिये उपयुक्त है। ]

कृष्ण — वृन्दे ! तत्त्व की बात नहीं समझी हो। परम सुन्दरी राधा ही योग्य है, जो विपरीत होकर भी [ > पलट जाने पर भी = राधा = धारा ] मधुप्रस्रविणी धारा बन जाती है।

---

or a drone ). So this lovely woman, known as Rādhikā ( Rādhā or with an extra *refa*=bee ) is to be brought as toll tax.

VRNDĀ : Then, this blossomed Campakalatā, ( ( i ) a friend of Rādhā so named, ( ii ) a creeper so named ) alone is fit for this thirsty Madhusūdana.

KRSNA : Vrndā, you do not understand the true nature of things. Rādhā is surely suitable because even if she is cross = ( inverted = धारा ) she turns out a stream ( धारा ) of sweet honey.

चित्रा — गोउलवीरवरेण्ण, अप्पडिम-पुण्ण-लच्छीभराओ इमाओ त्ति सअं चेअ समत्थिदं, ता विंदपंचएण कहं अम्हाणं एक्कतमा गेण्हिदुं जुत्ता ?
[ गोकुलवीरवरेण्य ! अप्रतिमपूर्णलक्ष्मीभरा इमा इति स्वयमेव समर्थितम्, तद्वृन्दपञ्चकेन कथमस्माकमेकतमा गृहीतुं युक्ता ? ]

वृन्दा — हन्त, सखि चित्रे ! श्लाघ्यासि, यदेष विशृङ्खलः कोमलवाग्वल्लिपल्लवेन भवत्या स्तम्भितो गम्भीरवेदी स्तम्बेरमः ।

---

युक्त्यन्तरेण विजेतुं प्रयतमाना चित्राऽत्रान्तराले कृष्णमाह **गोकुलेति** — गोकुले ये वराः श्रेष्ठास्तेषु वरेण्य श्रेष्ठ ! स्वयमेव भवता समर्थितमङ्गीकृतं यत् इमाः सर्वा अपि अप्रतिमः असमः पूर्णः सर्वाङ्गीणः लक्ष्मीभरः शोभातिरेकः सम्पदतिरेकश्च यासां तादृश्यः सन्ति । एवं सति वृन्दपञ्चकेन पञ्चवृन्दमितशुल्केन कथमस्माकं ( निर्धारणे षष्ठी अस्मासु इत्यर्थः ) एकतमा त्वया गृहीतुं युक्ता, मूल्यवैषम्यादित्यर्थः ।

एवं निरुत्तरभावं नीतवती कृष्णमिति चित्रां प्रशंसती वृन्दाऽऽह **सखीति** — श्लाघ्या प्रशस्या त्वमसि यतः एष विशृङ्खलः अमर्यादः उन्मत्तः कोमला वाक् एव वल्ली रज्जुरूपा तस्याः पल्लवेन भवत्या गम्भीरवेदी दुर्वारमदः स्तम्बे रमते असौ इति

---

चित्रा — गोकुल के वीर वर ! ये रमणियाँ अनुपम सर्वाङ्गशोभा सम्पन्न हैं, [ > समग्र सम्पत्ति में असम हैं ] — ऐसा स्वतः आपने ही समर्थन किया है । तो इस वृन्दपञ्चक से हम लोगों में एक भी कैसे ग्रहण की जा सकती है ?

वृन्दा — हन्त ! सखि चित्रे ! तुम प्रशंसा के योग्य हो । क्योंकि अपनी कोमल वाणी रूपी लता के पल्लव से मदोद्धत इस उन्मुक्त हाथी को तुमने स्तम्भित ( = अवरुद्ध ) कर दिया ।

---

CITRĀ : Mighty warrior of Gokula ( pre-eminent among the heroes of Gokula ) ! you have yourself advocated that there ( five belles ) are full of incomparable beauty. Then, how is it proper to pick up even one of the five ( for your damn toll-tax ) ?

VṚNDĀ : Ah ! friend Citrā, commendable you are. This unrestrained, highly intoxicated elephant ( Kṛṣṇa ) has been checked by you by the twigs of the creeper-like tender speech of yours.

मधुमङ्गल — पिअवअस, सतगुणो सुलुक्कोत्ति एत्थ असक्खवाइणो सतसद्दस्स पंतिदहम्मि पज्जवसाय कुणतेहिं अम्हेहिं तस्स उज्जाणचक्कवट्टिणो सुठ्ठु अवरद्ध। [प्रियवयस्य ! शतगुण शुल्क इति अत्रासङ्ख्यवाचिनश्शतशब्दस्य पङ्क्तिदशके पर्यवसानं कुर्वद्भिरस्माभिस्तस्मै उद्यानचक्रवर्तिने सुष्ठु अपराद्धम्।]

कृष्णः — सखे ! साधु साधु, प्रियार्थं रसमाधुरीमुपभोजयन् कायस्थिका-रसवतीपौरोगवोऽसि। सत्यमसङ्ख्यान्येव वित्तानि चक्रवर्ति-वराणामभिप्रायेण क्रोडीकृतानि। तथा च स्मर्यते—

---

स्तम्बेरम (सप्तमी अङ्क) हस्ती त्वया स्तम्भित अवरुद्ध प्रकृति नीत। "एष स्तम्बेरम" इत्यत्र सारोपा गौणी लक्षणा दुर्वारत्वविशेषद्योतनरूपप्रयोजनवती रूपक-मुत्यापयति। गम्भीरवेदिनो हस्तिनो लक्षण यथा शालिहोत्रे—

"त्वग्भेदाच्छोणितस्रावान्मांसस्य व्यधनादपि।
सञ्ज्ञा न लभते यस्तु गजो गम्भीरवेदसौ" – इति।

मधुमङ्गल कृष्णमाह **प्रियवयस्येति** — 'शतगुण शुल्क" इत्यस्मिन्सदर्भे शतपदमसख्यस्य अगण्यस्य वाचि बोधक, तस्य शतशब्दस्य पङ्क्तौनां दशाना दशके पर्यवसान निर्णय कुवद्भिरस्मामि उद्यानपालस्य सुष्ठु बहु अपराद्धम् -- तस्य हानि कृतेत्यर्थ। °चक्रवर्त्तिने – इत्यत्र वैकल्पिकी चतुर्थी।

कृष्णो मधुमङ्गलस्य वचोऽनुमोदते **सख इति** — साधु साधु सम्यगाह, प्रियार्थं रसमाधुरीं भोजयन् कायस्थिका गणितरीति सा एव रसवती पाकक्रिया तस्यां पौरोगव अध्यक्षस्त्वमसि। "पौरोगव पाकाध्यक्ष" इति। तस्य चक्रवर्त्तिन अभिप्रायेण आयदेयलेखायां क्रोडीकृतानि आत्मसात्कृतानि लोपितानि वा। तत्र स्मृतिवाक्य स्मरति

---

**मधुमङ्गल** — प्रिय मित्र ! "शतगुण शुल्क" इसमें घाट की चुगी के प्रकरण में असख्यता अर्थ के बोधक शत शब्द की दश दश के दश दशक रूप अर्थ में ही समाप्ति करते हुए (= पूर्ण मानते हुए) हम लोगों ने उद्यान चक्रवर्ती की बहुत हानि की है।

**कृष्ण** — मित्र ! ठीक है, ठीक। अपने प्रिय जन को रस माधुरी का आस्वाद कराने वाले, गणित रूपी पाकशाला के तुम अध्यक्ष हो। चक्रवर्ती

---

MADHUMANGALA Dear friend, the word 'Sata' (hundred) in the phrase *'Sataguna'* (*a hundred times*) indicates an infinite number We, who limited it to a hundred literally, have really commited an offence towards the king of gardens

KRṢNA Well done ! friend, well done ! You are the superintendent of the royal kitchen of accountancy feeding friends with excellent sweets Indeed, innumerable

द्राघिष्ठे छद्मनि ज्ञाते प्रकृत्या गर्वशालिनाम् ।
अभ्युन्नतश्रियोग्राणां यथेष्टं दण्ड इष्यते ॥६३॥ – इति ।

ललिता — दंडेन विना क्खणं वि गोवाणं णत्थि ओलंबो, ता जुत्तं दंडग्गहणं । [दण्डेन विना क्षणमपि गोपानां नास्त्यवलम्बः, तद्युक्तं दण्डग्रहणम् । ]

कृष्णः — यद्यपि पञ्चभिरपि न शुल्कपर्याप्तिस्तथापि द्वितीयैव मम

---

द्राघिष्ठ इति — द्राघिष्ठे दीर्घतमे महति छद्मनि देयशुल्के कपटे ज्ञाते प्रकटतां गते सति प्रकृत्या स्वभावतः गर्वशालिनाम् अभ्युन्नतया श्रिया लक्ष्म्या शोभया च उग्राणां धृष्टानां कठिनां कृते यथेष्टं दण्डः इष्यते इति । अत्रानुष्टुप् वृत्तम् ॥६३॥

दण्डपदार्थमन्यथा गृहीत्वा ललितोपहसति दण्डेनेति — दण्डेन काष्ठदण्डेन लगुडेन विना क्षणमपि गोपानां नास्ति अवलम्बः आश्रयः, गोचारणे सर्वदैव दण्डस्यापेक्षितत्वात् – तद् युष्माकं (कर्त्तरि षष्ठी) दण्डग्रहणं लगुडधारणं युक्तमुचितम् । अत्र नर्मोक्तिः, कृष्णेन प्रयुक्तस्यापराधदण्डस्यान्यथालगुडार्थग्रहणाद्वक्रोक्तिरपि ।

ललितावाक्यमननुसन्धाय स्वार्थमेवानुसन्दधानः कृष्णः पुनराह यद्यपीति–द्वितीया

---

महाराज के अभिप्राय से तो सच में असंख्य धन ही हजम कर लिया गया। स्मृति में भी कहा है —

स्वभाव से गर्वीले, पर्याप्त लक्ष्मी [ > शोभा ] के कारण उद्दण्ड लोगों पर लम्बे अरसे ( = चिर काल ) से किये जा रहे कपट व्यवहार की जानकारी हो जाने पर मनचाहे दण्ड का विधान है ॥ ६३ ॥

ललिता — दण्ड ( = लाठी ) के बिना एक क्षण भी ग्वालों का सहारा नहीं है। इसलिए दण्ड ( लाठियां ) लिये रहना उचित है।

कृष्ण — यद्यपि पाँच से भी चुंगी की पूर्ति नहीं होती, तो भी द्वितीया ( = पत्नी

---

coins are comprised (in the word '*śata*') in the opinion of our great Emperor which have been dropped. It is said in the Śāstras :–

63. When persons arrogant by nature and violent with increased affluence (beauty) are detected practising fraud for a very long time, any amount of penalty (*daṇḍa*) may be imposed upon them.

LALITĀ  The cowherds feel themselves helpless without a club (*daṇḍa*) even for a moment. It is, therefore, proper to take resort to a club.

KṚṢṆA  Although all the five taken together are not adequate for the toll tax due from them, the second one (Rādhā)

रक्षणीया, या खलु चन्द्रलेखेवोन्मीलनक्षमा ।

राधा — ( सोत्प्रास विहस्य ) हन्त, देवदोवासणस्स कुसुम ओचिणंतीणं खञ्जणाच्छीण खेम क्खु वुदावण ओम्मदेण इमिणा एक्केण महाकलहिंदेण सव्व आक्कमिअ भअकर किद । केअल सेलिंदस्स उवसल्लमेत्त[1] ओलम्बणं आसी । ह्द्धी ! ह्द्धी ! एत्थ वि दाणिदारभदम्भेण वट्टपाडिदा आरद्धा, कस्स विण्णविस्सम्ह । [हन्त ! देवतोपासनार्थं कुसुममवचिन्वतीनां खञ्जनाक्षीणां क्षेम खलु वृन्दावनमुन्मदेनैकेन महाकलभेन्द्रेण सर्वमाक्रम्य भयङ्कर कृतम् । केवल शैलेन्द्रस्य उपशल्यमात्रमवलम्बनमासीत् । हा धिक् ! अत्रापि दानीन्द्रारम्भदम्भेन वर्त्मपातिता आरब्धा, कस्मै विज्ञापयिष्यामहे ।]

एका ललिता, द्वितीया राधेत्यभिप्राय या खलु चन्द्रलेखा इव प्रत्यह उन्मील्ने क्षमा यौवनाभ्युदयशीला । "लेखेवोन्मील्नक्षमा" इत्यश श्लोकचरणरूप अतोऽत्र वन्धस्तु वृत्तगन्धी ।

राधा सोत्प्रास सोल्लुण्ठन विहस्य खेद प्रकटयति हन्तेति — देवतोद्देशेन पुष्पाणामवचय कुर्वतीनां, खञ्जनस्य ईक्षणे इव ईक्षणे नयने यासां, तादृशीनां सूर्योपासिकानां कृते क्षेम निरपाय खलु वृन्दावनम् उन्मदेन उच्छृङ्खलेन एकेनैव महाकलभेन्द्रेण गजशावकप्रवरेण सर्व क्षेत्रमाक्रम्य भयङ्कर कृतमाकुलीकृतम् । (तदा) शैलेन्द्रस्य गिरिराजगोवर्धनस्य उपशल्यमात्र केवल आसन्नभूमि (जनानां कृते) अवलम्बनमाश्रय आसीत् । हा धिक कष्ट भो कष्टमिति वीप्सायां द्विरुक्ति । अत्रापि दानीन्द्रस्य घट्टपालस्य आरम्भ शुल्कादानप्रक्रम तस्य दम्भेन व्याजेन वर्त्मनि मार्ग पातिता अवस्थितिरन्तरायभूता आरब्धा । कस्मै एतत्कष्टकारण विज्ञापयिष्यामहे — न कोऽपि श्रोता इति त्रासजयो

---

ललिता, दूसरी राधा ) राधा ही हमें रखनी चाहिये, जो कि चन्द्रकला के समान सतत विकासशीला है ।

राधा — ( खिल्ली उड़ाती हुई, हसकर ) हन्त ! देवता की पूजा के लिए फूल चुनती हुई खञ्जनाक्षियों के लिए सुखप्रद वृन्दावन को एक उछृङ्खल हाथी के बच्चे ने रौंद कर भयङ्कर कर डाला । गोवर्द्धन गिरि की आसन्न भूमि

---

alone is to be preserved by me for she is capable of increasing in value (developing) like the streak of the Moon (on the second day of the lunar fortnight)

RĀDHĀ (*laughing sarcastically*) Alas ! The whole of Vrndavana (garden) which was safe for the wagtail eyed young women gathering flowers for the worship of gods has been attacked by an intoxicated chief of young elephants and rendered terrible Only the vicinity of the Govardhana mountain had remained as a (safe) resort (for us) Alas ! what a pity ! Here also

---

1 उवसण्णमेत्त' – इति पाठभेद ।

कृष्णः — नान्दीमुखि ! तव कर्णमधिरूढासां गुर्वी गिरामनर्गलता यदत्र सन्मार्गरक्षाप्रख्यातविशुद्धौ मय्यपि वर्त्मपातिता-परिवादकालिमाध्यास-साहसिकता । तदेनां दोर्दण्डयुगलेन गाढं पीडयामि ।

नान्दीमुखी — ( पुरोऽवस्थाय वारयन्ती ) सुवीर, महातावसीपरिआअस्स मह समक्खं अक्खमं क्खु एदं कुलबालापीडणं । [ सुवीर ! महातापसी-

निर्वेदः । अस्य राजपुत्रत्वात् । एतादृशं खेदावहं राधावचो निशम्य सोपालम्भमिव नान्दीमुखीमुद्दिश्याह कृष्णः तवेति — आसां गोपबालानां गिरां वाचां गुर्वी महती अनर्गलता निरङ्कुशता तव कर्णमधिरूढा श्रुता यद् अत्रास्मिन्प्रदेशे सन्मार्गरक्षायाः मार्गे पथिकानां यातायातं निरपायं यथा भवेत्तथा व्यवस्थायाः कृते प्रख्याता विशुद्धिस्तत्परता यस्य तादृशे मयि अपि वर्त्मपातितायाः मार्गावरोधस्य निमित्तेन यः परीवादो निन्दा तस्य अलीकाध्यासे मिथ्यारोपणे साहसिकता । तत् एतन्मिथ्यारोपदोषस्य कृते एनां राधां दोर्दण्डयुगलेन बाहुद्वयपाशेन गाढं रभसा पीडयामि इति ।

एवं कर्तुं प्रवृत्तस्य कृष्णस्य पुरः अवस्थाय आत्मानमुपस्थाप्य वारयन्ती नान्दीमुखी प्राह सुवीरेति — सुवीर अतिबलिष्ठ, वक्रतया शोभने कर्मणि

---

मात्र आधार थी । बड़े खेद की बात है, घट्टेश महोदय के इस व्यवसाय ( = चुंगी वसूली ) के बहाने यहां भी राह में रुकावट शुरू हो गई है । किसे कहें !

कृष्ण — नान्दीमुखि ! इनकी वाणी की भारी बढ़ती अनर्गलता तुम्हारे कान तक पहुँच गई, जो कि इस स्थान पर राहियों के आवागमन की व्यवस्था में मेरी तत्परता बहु विदित होने पर भी राह में "मैं रुकावट पैदा करने वाला हूँ" – ऐसे निन्दा के झूठे आरोप की इनकी हिम्मत ! अतः इसे (राधा को) अपने बाहुपाश से जकड़ लेता हूँ ।

नान्दीमुखी— (सामने खड़ी होकर रोकती हुई ) सुवीर ! महातापसी पौर्णमासी

---

waylaying has been started by the toll-gate chief's arrogant actions. To whom can we report (against Kṛṣṇa who is a prince) ?

KṚṢṆA Nāndīmukhī, did you hear their haughty unrestrained talk ? It is their effrontery to blacken me with the scandal of way-laying while I am spotless and well-known for guarding the good roads. So I shall squeeze her (Rādhā) tightly with my strong arms (as punishment ).

NĀNDĪMUKHĪ : (*standing before and preventing Kṛṣṇa from embracing Rādhā* ) Brave man, it is certainly improper to press

परिवारस्य मम समक्षमक्षम खल्वेतत् कुलबालापीडनम् ।]

कृष्ण — गोष्ठमहेन्द्रकुमारश्चूडामणिरसि मुहुरहंयूनाम् ।
कथमुन्मदयुवतीनामुपेक्षिताहेऽद्य दर्पकोष्माणम् ॥६४॥

ललिता — कण्ह ! सलक्ख कधेसि, एत्थ णावरज्झसि तुमं । घट्टीदेईए क्खु एसो अपुव्वो को वि प्पसादो जेण सक्कुलकुमालो धुत्तधुरीणाण वि सुट्ठु विम्हावणी कधनविज्ञ इत्ति अज्झविदो सि । [कृष्ण ! श्लक्ष्ण

---

विक्रमिन् । महातापस्या पौर्णमास्या परिवारस्य मम समक्ष कुलबालाया पीडनम् अक्षममयोग्य खलु ।

तदा कृष्ण सदर्पमाह गोष्ठेति — गोष्ठस्य व्रजस्य महेन्द्रकुमारो राजपुत्र, मुहु पुनश्च अह यूनां चूडामणि अग्रगण्य अस्मि । एव सति कथमहम् उन्मदानां युवतीनां दर्पकस्य क्षुद्रस्य गर्वस्य उष्माण तीक्ष्णत्वम् उपेक्षिताहे प्रतीकारं विना सोढा — न क्वचिदपीत्यर्थ । अथवा अहयूनाम् दर्पगरिष्ठाणां चूडामणि प्रमुख — "अहङ्कारवानहयु स्यात्" इत्यमर । दर्पोष्माणमिति व्यञ्जनया यौवनोद्गमवशादुद्भूतं मान्मथविकारम् । उपेक्षिताहे इति उपपूर्वकस्य ईक्षतेर्लृटि रूपम् अनद्यतनभविष्यत्कालगमक किमपि रहस्य व्यनक्ति । अत्र गर्व सञ्चारी भाव । आर्या जाति ॥६४॥

मर्यादामतिक्राम्यत कृष्णस्यास्थाने गर्वोक्ति निशम्य ललिता वक्रोक्त्या तं हेपयितु यतमानाऽऽह कृष्णेति — त्व श्लक्ष्ण पेशल कथयसि (यत ) अत्र बालोपपीडने त्व नापराध्यसि न तवात्र दोष इत्यर्थ । घट्टीदेव्या शुल्कादानस्थानकस्य अधिष्ठात्र्या

---

परिवार के मेरे समक्ष सत्कुलीन बालिका को सताना उचित नहीं।

कृष्ण — मैं व्रज का राजकुमार उस पर भी नव युवकों का मूर्धन्य हूँ, [ > घमण्डियों का सरताज़ हूँ ] इन उन्मत्त युवतियों की गर्वीली गरमाहट भला कैसे भूल जाऊँ (सहन करूँ) ॥ ६४ ॥

ललिता — कृष्ण ! सच कह रहे हो, इसमें तुम्हारा कोई अपराध नहीं, इस घाट की देवी का ही ऐसा कोई अनुपम अनुग्रह है जो कि सत्कुलीन बालक होने पर भी तुम धूर्तों के मुखिया को भी अच्छी तरह चकित

---

tightly (embrace) a girl of a noble family in the presence of myself who belongs to the retinue of that great ascetic (Paurnamāsī)

KRṢNA 64 I am a son of the chief of cowpens (cowherds) and then a leader of the proud youth How can I overlook the heat of arrogance of these intoxicated women ?

LALITĀ Kṛsna, you speak frankly You are not at fault in this It is only an extraordinary favour of the Goddess of the toll-gate that you, though born of a noble family,

कथयसि, अत्र नापराध्यसे त्वम्। घट्टीदेव्या एवैव अपूर्वः कोऽपि प्रसादः येन सत्कुल-कुमारोऽपि धूर्तधुरीणामपि सुष्ठु विस्मापनीं काञ्चनविद्यां झटित्यध्यापितोऽसीति।]

कृष्णः— (साटोपम्)

घट्टाधिराजमवमत्य विवादमेव
यूयं यदाचरथ शुल्कमदित्समानाः।
मन्ये विधित्सथ तदत्र गिरेस्तटेषु
दुर्गेषु हन्त विषमेषु रणाभियोगम् ॥ ६५ ॥

देव्या एव एष अपूर्वः कोऽपि विलक्षणः प्रसादः अनुग्रहः येन सत्कुलस्य कुमारो-ऽभिजातोऽपि त्वं धूर्तेषु कितवेषु धुरीणानामग्रगण्यानामपि सुष्ठु सम्यक् विस्मापिनीं विस्मयकारिणीं काञ्चन अवर्णनीयां विद्यां कलां झटिति स्वल्पेनैव कालेनाध्यापितः असि। न त्वं निसर्गतो दुष्टः कुलीनत्वात् परन्तु घट्टाधिकारमवाप्य तन्महिम्ना धूर्तता त्वयि समापन्नेति त्वं न दुष्यसि, अधिकार एवात्र कारणम्। अत्र विपरीतलक्षणा।

विलासैकबद्धमनस्कः कृष्णो ललिताकृतमधिक्षेपमवमत्य साटोपं स्वाशयमेव विवृणुते घट्टाधिराजमिति — घट्टाधिराजमवमत्य तिरस्कृत्य शुल्कम् अदित्समानाः दातुमनिच्छन्त्यः यूयं यत् विवादमेव आचरथ तेनाहं मन्ये यद् अत्र विषमेषु नतोन्नतेषु अत एव दुर्गेषु दुर्गमेषु गिरेस्तटेषु रणाभियोगम् हस्ताहस्ति केशाकेशि विग्रहं विधित्सथ कर्तुमिच्छथ। श्लेषेण स्वाभिप्रायं सङ्केतयसे विषमेषोः कन्दर्पस्य पञ्चबाणस्य रणाभियोगम् रतिसङ्गरव्यापारं विधित्सथेत्याकूतम्। अत्र श्लेषालङ्कारः। मन्ये इत्यनानुमानम्। प्रसादगुणः, वैदर्भीरीतिः, वसन्ततिलका चात्र वृत्तम्। अत्र हरिभावस्य विलासे दशमः घट्टाख्यो विशेषः मधुररसपोषकः॥६५॥

---

कर देने वाली कोई विद्या (= कला) थोड़े ही दिन में पढ़ा दिये गये हो।

कृष्ण — (अकड़ कर) घाट के अध्यक्ष की अवहेलना कर, चुंगी न देने की इच्छा रखती हुई तुम लोग जो केवल विवाद ही कर रही हो, इस से तो यही समझ में आ रहा है कि इन विषम (= ऊबड़-खाबड़) दुर्गम पहाड़ियों में हाथा-पाई [ >कन्दर्पलीला ] पर उतारू हो गई हो ॥ ६५ ॥

---

have been quickly taught some art which would astonish even the foremost among the cunning !

KṚṢṆA : 65. Alas ! disregarding the king of the toll stations you, who do not want to pay the toll-tax and only resort to argument, want to engage yourselves, I think, in a battle here, in the uneven, impassable declivities of this mountain ( *by double entendre* : in a love-battle ),

राधा — मोहण ! केत्तिअ सहिस्सह्म ? ज "अतिनिर्मथनादग्निश्चन्दनादपि जायते" त्ति वअण प्पमाण, ता एत्थ अम्ह दुपण ण देअ । [मोहन ! कियत्सहिष्यामहे यद्—'अतिनिर्मथनादग्निश्चन्दनादपि जायते' इति वचन प्रमाणम्, तदत्रास्मद्दूषण न देयम् ।]

कृष्णः — अपटुभ्रमकारिणीभिराभिः
कुटिनाटीभिरलं प्रसीद देवि ।
वितराय धनानि वा मदीया-
न्यनुतिष्ठातनुसङ्गरक्रियां वा ॥६६॥

---

अत्रान्तरे मधुरया गिरा राधिका सयुक्तिक कृष्ण बोधयति **मोहनेति** — हे मोहन कृष्ण मनोहारिन् । कियत्तव व्यतिक्रम सहिष्यामहे यत सहिष्णुताया अप्यास्ति अवधि । तत्रोदाहरति — चन्दनादपि शीतलधर्मिण चन्दनकाष्ठादपि अतिनिर्मथनाद् भृश घर्षणात् अग्निर्निष्पद्यते इति वचनमत्र प्रमाणम् । तत् अत्र एव जाते सति चन्दनवत् शैत्येन त्वदनौचित्य सहमाना वय यदधुना उग्रत्व यद् धारयेम तदा अस्मद्दूषण अस्मभ्य दुर्व्यवहाराय दोष न देय । यत त्वमेव तादृशव्यवहारस्य कृते दोषभाक् अस्मद्रोषोद्दीपकत्वात् । अत्र नीतियुक्त वच शिक्षानाम नाट्यालङ्कारणमुपस्थापयति ।

तदुक्तिमुपेक्ष्य पुनरपि रतिलालस स्वाभिलाष विशदीकुरुते कृष्ण **अपटु°–इति**– अपटूनामचतुराणा जनाना मनसि भ्रमकारिणीभि मिथ्याबोधमुद्भावयन्तीभि आभि युष्मदाश्रिताभि कुटिनाटीभि कौटिल्यस्याभिनयपरिपाटीभिरलम् । न साध्य साधयिष्यन्त्येता कुटिलसरण्य, यत नाहमपटु, अपि तु परमपटु भवदीयचापलाभिज्ञ, अत कौटिल्य विहाय हे देवि ! प्रसीद प्रसन्ना भव । त्व मदीयानि धनानि शुल्कदेयानि अद्य अधुना वितर देहि, वा विकल्पे, धनप्रदान नाभिप्रेतञ्चेत् अतनु अस्तोक सङ्गरक्रिया युद्धव्यापारमनुतिष्ठ – युद्धाय सज्जा भव । श्लेषेण तु अतनो. मदनस्य सङ्गरक्रिया रतिलीलाम् अनुतिष्ठ कुरु इति हार्दं तात्पर्यम् ।

---

राधा — चितचोर ! हम लोग कितना सहन करेंगी, क्योंकि अधिक रगड़ से चन्दन से भी अग्नि पैदा हो जाती है, यह वचन प्रमाण है। यदि अब ऐसा होजाय (= हमें रोष आजाय) तो हमें दोष मत देना ।

कृष्ण — मूर्खों को चक्कर में डाल देने वाली इन कुटिल चालों का अभिनय रहने दो, देवि ! कृपा करो चाहे, मेरे निर्धारित द्रव्य को दे दो, या तो

---

RĀDHĀ Mohana (*Kṛṣna*) ! How much can we tolerate ? "Even a piece of sandalwood, when subjected to too much of friction, produces fire" as an authoritative saying goes. Well then, we are not to blame in this matter

KṚṢNA 66 Enough of these cunning postures which may mislead only the naive Be pleased, my lady. Either shell out

वृन्दा — त्वं महासांयुगीनोऽसि संयुगे ख्यातिमागतः ।
योद्धुं ततस्त्वया सार्धं क्षमन्तामबलाः कथम् ॥६७॥

कृष्णः — काननचरि ! स्वरूपानभिज्ञाऽसि ।

पश्योन्नतश्रोणिरथा मतङ्गज-
क्रमोज्ज्वलाः सुष्ठु पदातिशोभनाः ।

---

अत्र अनुनयो नाम नाट्यलक्षणम् । श्लेषालङ्कारः, माधुर्यं गुणः, पाञ्चाली रीतिः । पद्येऽस्मिन् मालभारिणी वृत्तम् — "विषमे ससजा यदा गुरू चेत्सभरा येन तु मालभारिणीयम्" इति छन्दोमञ्जरी ॥६६॥

प्रस्तावममुमाक्षिपन्ती वृन्दा तावदाह त्वमिति — हे कृष्ण ! त्वं महासांयुगीनः महासंयुगे महति रणे साधुः क्षमः असि, परञ्च संयुगे रणे रतिक्रमे च ख्यातिमागतः । अतस्त्वया सार्धं एताः अबलाः सुकुमारतराः कथं योद्धुं क्षमन्तां न कदापि — यतस्त्वदनुरूपास्तु प्रौढाः प्रगल्भाः प्रमदा एव, महान्तो योद्धारो वा, नैता इति । अत्रानुष्टुप् वृत्तम् ॥६७॥

वृन्दोक्तिमाक्षिपन् नैता अबलाः परं महती खलु सबला सेनेति तासां सेनाङ्गानि उपपादयति कृष्णः पश्येति — अयि काननेषु चरतीति काननचरी तत्सम्बुद्धौ हे वनचारिणि ! सम्बोधनमिदं सरलप्रकृतिरवबोधनाय साभिप्रायमतोऽत्र परिकराङ्कुरालङ्कारः । स्वस्य रूपस्य अनभिज्ञाऽसि — कथमित्याह त्वं पश्य — अमूः त्वया अबलेति प्रोच्यमानाः वस्तुतः कामस्य चमूः सेना एव । कीदृश्य एताः इत्याह चारुणि चमूरूणां मृगाणां लोचनानीव लोचनानि यासां ता मृगलोचनाः उन्नताः श्रोणयः नितम्बभागा एव रथा यासां ताः,

---

घनघोर लड़ाई के लिये तैयार हो जाओ, [ > अनङ्ग की सरभस क्रीडा के लिये सन्नद्ध हो जाओ ] ॥ ६६ ॥

वृन्दा — तुम बहुत बड़े योद्धा हो, युद्ध करने में गौरव (= प्रतिष्ठि) पा चुके हो, इस लिये तुम्हारे साथ युद्ध करने में ये अबलायें भला कैसे समर्थ होंगी ॥ ६७ ॥

कृष्ण — वनचारिणि ! अपने रूप को नहीं समझ सकी हो ।
देखो, उन्नत नितम्ब भाग जैसे रथ से युक्त, मतवाले हाथियों की अनियन्त्रित चालों वाली, सुसज्ज पैदल चलने वाली सेना से सुशोभित,

---

the coins as desired by me or carry on a big battle, (*by double entendre* : battle of love).

VṚNDĀ : *67. You are a great warrior and have earned reputation as such in battle. How can the weaker sex fight you ?*

KṚṢṆA : Dear forester ! you have no idea of yourself. Look 68. These are the divisions of Cupid's army in the *form of charming fawn-eyed women, who, with their*

कामस्य चञ्चत्कचभारचामरा-
श्चमूरमूश्चारुचमूरुलोचनाः ॥६८॥

**राधा** — णाअर ! दिट्ठं कुलबालिआविमोहण इद घट्टीन्दजल, ता पुण अल विस्थारेण, सहीसणाहा जण्ण वेदिअ चलिदम्हि । [ नागर ! दृष्टं कुलबालिकाविमोहनमिदन्ते घट्टेन्द्रजालम्, तत्पुनरल विस्तरेण, सखीसनाथा यज्ञवेदीं चलितास्मि । ]

अपि च मतङ्गजानां क्रम गतिस्तेनोज्ज्वला सशक्ता । 'क्रम शक्तौ परिपाट्याम्' इति विश्वकोष । सुष्ठु समीचीनतया पदै अतिशोभना, पक्षे पदातिभि पादचारिभिः सैनिकै शोभना । चञ्चन्त लम्बमाना कुटिला कचभारा केशपाशा एव चामरा यासां ता, चामरेण तासां सैनाधिपत्य गम्यते । तात्पर्य तु – एता श्रोणिरूपरथै सनाथा, स्वयं गतिसाम्याद्गजरूपा, पदातिशोभना एव सेनाङ्गै सज्जा स्वस्य सेनाप्रमुखत्व चामरदोलनेन प्रकटयन्त्य सर्वथा मदनस्य सेना एव । कथमेता अबला उच्यन्ते ?

अत्र साङ्ग रूपकमलङ्कार । उत्तरार्धे चोपमालङ्कार । रम्येण वृत्त्यनुप्रासेन उपस्कृत माधुर्यगुणवान् पाञ्चालीरीत्या वसन्ततिलकावृत्तेन निबद्धोऽयं बन्ध ॥६८॥

कृष्णोक्तिमसहमाना राधा यावत् स स्वोक्ति समाप्नोति तदनन्तराल एव अलमलमत परं न वय श्रोतुकामा इत्यभिप्राय रयापयति **नागरेति** — विशेषण सोल्लुण्ठम् । कुलबालिकानां विमोहनं समाकर्षकमिद तव इन्द्रजाल मायाविधान भल पर्याप्तरूपेण दृष्टम्, पौन पुन्येन तथाकरणेन विस्तरेण अल – त्व विरम – अत्र वारणार्थे तृतीया । अह तु यज्ञवेदीं चलितास्मि । श्लोकार्धे क्वचिदिय राधोक्ति, उपात्तक्रमस्तु साधीयानेव ।

---

लहराती घुँघराली लटों वाले चामर धारण किये ( = नितम्बिनी गज-गामिनी, सुभग चरणयुक्त सुकेशी ) ये मृगलोचनायें कामदेव की सेनायें हैं । ॥ ६८ ॥

**राधा** — नागर ! कुलीन बालाओं को फुसलाने वाले तुम्हारे इस घाट के मायाजाल को देख लिया, इसे अब फिर मत फैलाओ । सहेलियों के साथ यज्ञ वेदी की ओर जा रही हूँ ।

plump hips as chariots and curls of hair as *chowries* (insignia of royalty) brilliant with the gait of elephants, have their excellent feet as the well-equipped infantry (*padāti*)

RĀDHĀ Gentleman ! I have seen through it this toll gate of yours is a trick to tempt girls of noble families So, enough of this prolixity of words Here I am off with my friends to the place of sacrifice

कृष्णः — घूर्णिताक्षि ! घनघट्टकरेण शीघ्रमाघ्रातासि, कथं चलने प्रभवितासि ?

चम्पकलता — किं क्खु भोअराअस्स अहिआरी होसि जं करदाणेण आराहणिज्जो तुमं ? [ किं खलु भोजराजस्याधिकारी भवसि यत्करदानेनाराधनीयस्त्वम् ? ]

कृष्णः — चम्पकलते ! भोगरागस्याधिकारी तथ्यमस्मि, तथापि

---

कृष्णः पुनरपि रटति घूर्णिताक्षीति -- कृतककोपं व्यञ्जयन्ती अत एव घूर्णिते तरले अक्षिणी नयने यस्यास्तादृशि ! त्वं घनः महान् घट्टस्य करः शुल्कम् तेन आघ्राता स्पृष्टा अधमर्णतया असि, अतः कथं चलने प्रभविता समर्थासि । प्रभवितेति लुटि रूपम् ।- श्लेषेण घनस्य घनश्यामस्य घट्टः निविडो यः करः पाणिस्तेनाघ्राता परामृष्टाऽसि - आघ्राणक्रियोपयोगेन करस्य गजशुण्डात्वमारोप्यते । अत्र श्लेषानुप्राणितम् गम्यरूपकम् । चलने प्रस्थाने चापले चेत्यर्थः ।

अत्र प्रसङ्गे चम्पकलता कृष्णमधिक्षिपन्त्याह किं खल्विति - भोजराजस्य कंसस्य अधिकारी अधिकारे स्वाम्ये वर्तमानः कर्मचारी त्वम् ।

तत्र कृष्णः प्रत्याह - श्रुतिसाम्येन भोजराजेति पदं विपरिणमय्य भोगे रागः रुचिर्यस्य सः भोगरागस्तस्य अधिकारी स्वामी तथ्यं नूनमस्मि तथापि करदानद्वारा

---

कृष्ण — आँखें तरेरने वाली ! बड़ी राशि वाली घाट की चुंगी के रूप में अभी-अभी ग्रहण की गई हो [ > घनश्याम के मज़बूत हाथों में पड़ गई हो ] हिलने में कैसे सफल हो सकोगी ।

चम्पकलता — तुम क्या भोजराज कंस के अधिकारी हो, जो चुंगी देकर तुम्हें सन्तुष्ट किया जाय ।

कृष्ण — चम्पकलते ! भोगराज का स्वामी तो हूँ ही, तथापि चुंगी चुका कर प्रसन्न करने के प्रयत्न से मैं बहुत खुश नहीं हूँ (-= मुझे परम सन्तोष

---

KRṢṆA : Dear girl of whirling eyes ! you have been presently held for the heavy toll-tax (< *felt by my strong hand*). How dare you walk ?

CHAMPAKALATĀ : Are you, indeed, an officer of the king of Bhoja dynasty ( Kamsa ) that you are to be propitiated by paying the tax ?

KRṢṆA : I am, no doubt, an officer entitled to enjoyment (*bhoga*-a pun of the sound). All the same, I am not very much satisfied with your entertainment in the shape of paying

नातीव तुष्टिर्मम करदानेनाराधने, ततः प्रयत्ननिगूढान् काञ्चनकुम्भानेव स्पर्शयन्तु भवत्यः ।

ललिता — हंत, मुद्धाविडंबणचादुरीगव्विद, पेक्ख इमाओ विअड्ढप्पअराओ गोट्ठजुअदिवल्लिओ रण्णो घट्टदान कट्टिअ सलील चलंति ता उज्जाणचक्कवट्टिणं गदुअ फुक्कारेहि । [हन्त, मुग्धाविडम्बनचातुरीगर्वित! पश्य इमा विदग्धप्रवरा गोष्ठयुवतिवल्ल्य राज्ञो घट्टदान कर्त्तित्वा सलील चलन्ति, तदुद्यानचक्रवर्तिन गत्वा फूत्कुरु ।]

कृष्ण — भुजविक्रमिणा मया कथं वा
तव हेतोरपि फूत्कृतिर्विधेया ।

---

शुल्कप्रदानमात्रेण आराधने मम अतीव तुष्टि सन्तोषो न । तत प्रयत्नेन निगूढान् आच्छादितान् काञ्चनकुम्भान् सुवर्णकलशान् अध्यवसायेन कुचानेव स्पर्शयन्तु मह्य प्रतिपादयन्तु इति । "स्पर्शन प्रतिपादनम्" – इत्यमर । अत्र साध्यवसानातिशयोक्तिरलङ्कार ।

एव प्रस्तुतवन्त कृष्ण ललिताऽऽह हन्तेति – मुग्धानां युवतीनां विडम्बने या चातुरी तया गर्वित ! पश्य त्वयि प्रेक्षमाणेऽपि इमा विदग्धप्रवरा चतुरेषु वरिष्ठा गोष्ठयुवतीनां वल्ल्य गोप्य राज्ञ घट्टदान कर्त्तित्वा अप्रदाय सलील हेल्या चलन्ति । अत उद्यानस्य चक्रवर्त्तिनमधिपतिं गत्वा फूत्कुरु तद्विरुद्ध सरोष ब्रूहि ।

अहमेवाल तत्र शुल्कादानविषये किं राज्ञ निवेदयमिति स्वस्यैव विक्रम ख्यापयन्नाह कृष्ण भुजेति — भुजयो विक्रम अस्यास्तीति भुजविक्रमी तादृशेन मया तव हेतो त्वद्विषये अपि ललनाजनमधिकृत्य फूत्कृति राजनिवेदन कर्त्तव्या । द्विपानां गजाना

---

नहीं होगा ) इस लिये प्रयत्न पूर्वक छिपाये गये सुवर्ण कुम्भों को ही आप सब दे दें [ > स्पर्श करने दें ]।

ललिता— भोली भाली बालाओं को सताने की चतुराई के बारे में गर्व करने वाले ! देखो, चतुर शिरोमणि, ये व्रजवल्लभायें राजा की घाट की चुंगी को कतर कर (=न देकर) बड़ मज़ा में (= बडी आसानी से) जा रही हैं । उद्यान चक्रवर्ती के यहां जाकर यह सब फूँको (=रोओ)।

कृष्ण — तुम्हारे लिये भी बाहु पराक्रमी मुझे भला क्यों चीखना पड़ेगा ।

tax You may, therefore please give me the gold pots so carefully hidden by you

LALITĀ You are proud of your skill in vexing innocent girls, now see these very clever slender cowherd women cutting out payment of tax freely go away Then go and yell before the King of gardens

KRSNA 69 Why should I, with the prowess of my arms, go

**राधा** — हन्त सहीओ ! किदं परिस्समावणोदणं ता तु तुरिअं उक्खिवध णिअं गग्गरिअं । [ हन्त सख्यः ! कृतम्परिश्रमापनोदनं, तत्त्वरितमुत्क्षिपथ निजां गर्गरिकाम् । ]

**कृष्णः** —सखे सुबल ! सम्भृतेनावष्टम्भकुम्भिकापञ्चकेन सत्वरं घट्टचत्वरं त्वया परिष्क्रियताम् । मया पश्चादत्र पञ्चमी धारयिष्यते यतः पुन्नागप्रियाऽसौ ।

---

सर्वमेतद्विलासं वाचां मुधाऽऽमनन्ती राधा सखीः सम्बोधयति **हन्तेति** — कृतं जातं श्रमापनोदनम् — तत् त्वरितं निजां स्वां स्वां गर्गरिकां नवनीतघटीमुत्क्षिपथ स्वशिरसि निधाय प्रचलत इति ।

गन्तुरुत्कां ससखीं विलोक्य, राधां तदवरोधाय प्रकारान्तरं कल्पयन्कृष्णः सुबलं प्रेरयति **सख इति** — सम्भृतेन सम्यक् धृतेन अवष्टम्भः सुवर्णः तद्घटितानां कुम्भिकानां पञ्चकेन सत्त्वरं घट्टचत्वरं परिष्क्रियताम् प्रसाध्यताम् । मया पश्चादत्र त्वयि गते सति आशु पञ्चमी राधेति धारयिष्यते अत्रैवावरोत्स्यते यतः पञ्चमी तु पुन्नागस्य तन्नाम्नः कुसुमस्य, पक्षे पुंसु नागस्य कुञ्जरस्य प्रिया तस्मिन् बद्धस्पृहा भवति । पञ्चमीति पदेन पुन्नागशब्दस्य सान्निध्यात् श्रावणशुक्लपञ्चमीत्यर्थं गृहीत्वा पञ्चमी-महोत्सवं धारयिष्यते निर्वेक्ष्यत इति चक्रवर्त्तिनः । तन्मते पुन्नागा महासर्पाः तत्सम्बन्धात् नागपञ्चमीति प्रसिद्धेः । पुन्नागः प्रियः यस्याः सा इति पुन्नागप्रिया । कुम्भान् हे सुबल त्वं नय, पञ्चमीमहमानेष्यामीति हृदयम् ।

---

**राधा** — सहेलियों ! थकावट मिटा ली गई, अब शीघ्र ही अपनी अपनी गगरी उठाओ ।

**कृष्ण** — मित्र सुबल ! पाँचों सुवर्ण कलशियों को संगृहीत कर ( = अच्छी तरह रखकर ) शीघ्र ही घाट के चबूतरे को सुसज्जित करो । बाद में यहां मैं पाँचवीं ( पञ्चालिका इस राधा ) को सम्भाल लूँगा, क्योंकि पुन्नाग (१. पुष्प २. कृष्ण) इसे प्रिय है, [ > यहां नागपञ्चमी मनाऊँगा, क्योंकि पुन्नाग ( १. कृष्ण २. सर्प ) इसे प्रिय है ]

---

RĀDHĀ : Ah friends ! we have enough recuperated ourselves. So, lift your pots quickly (and start).

KṚṢṆA : Friend Subala ! the courtyard of the toll-gate station be decorated by you with the five gold vessels filled with fresh *ghee*. Then this fifth day (i.e. Nāgapañcamī) will be observed by me since it is dedicated to great serpents *( Punnāga )*.
(*Obliquely,*) the fifth one ( Rādhā ) will be detained by me, for she is fond of ( or loved by ) the distinguished person ( in me = Kṛṣṇa )

**सुबल** — ( परिक्रम्य ) ललिदे, भारदुक्खप्पदाओ घट्टघर लभेमि तुम्ह कुम्भिआहो, ता सुह चलदु होदीओ। [ ललिते ! भारदुःखप्रदा घट्टगृह लाभयामि युष्मत्कुम्भिकास्तत् सुखं चलन्तु भवत्य । ]

**ललिता** — ( सावज्ञस्मितमवलोक्य ) हद्धी, अरे चिह्लाअ-चदुरिआ-चोर-चक्कवट्टीलीलामच्च ! सइदाए वि ललिदाए को खु णीसज्झणो तिण वि परिहरिदुं अज्झवस्सदि ? [ हा धिक ! अरे चिह्लातचातुर्य चोरचक्रवर्तिलीलामात्य ! शयिताया अपि ललिताया क खलु निस्साध्वस तृणमपि परिहर्त्तुमध्यवस्यति ? ]

**सुबल** — ( सशङ्क परावृत्य ) पिअवअस्स, एक्कोहं कध कुम्भपञ्च

सख्युर्वचन स्वीकृत्य तथा कर्त्तुमुद्यत सुबल ललितामाह **भारदु खेति** — भारेण दु खं प्रददातीति भारदु खप्रदा इमा युष्मत्कुम्भिकास्ता अह घट्टगृह तावत् लम्भयामि ( लभतेर्णिच् ) प्रापयामि, अतो भारमुक्ता सुखमनायास चलन्तु भवत्य ।

सुबल प्रति अवज्ञया स्मितेन च दृष्टिपात कुर्वता ललिता भर्त्सयति **हा धिक्** इति— बभूव कश्चन प्रसिद्धो लोके चिह्लातनामा चोर तस्य चातुर्यवन्त ये चोरास्तेषा चक्रवर्त्तिन प्रमुखस्य लीलामात्य क्रीडासचिव ! शयिताया अपि ललिताया किमुत जाग्रत्या क खलु निस्साध्वस निर्भय स्याद्य तृणमपि परिहर्त्तुं किमुत सुवर्णकुम्भिका अध्यवस्यति मनसि चिन्तयिष्यति—तथा कर्त्तुं तु दूरे आस्तामिति भाव ।

भीरु स सुबल स्वीयमसामर्थ्यं बुध्यन् कृष्णमुपयन्नाह **प्रियवयस्येति** —

---

**सुबल** — ललिते ! बोझ से कष्ट देने वाली आप लोगों की गगरियाँ घाट तक मैं पहुँचा दे रहा हूँ तो आप लोग आराम से चलें।

**ललिता** — ( अवहेलना युक्त मुस्कान के साथ सुबल को देखकर ) खेद के साथ, अरे ! चिह्लात नाम के चोर की तरह चतुर चोर चक्रवर्ती के क्रीडामन्त्रिन् ! कौन ऐसा निर्भीक है जो ललिता के सो जाने पर भी उसका तृण भी चुराने की सोच सकेगा।

**सुबल** — ( सङ्कोच से झेंपता हुआ मुड़कर ) प्रिय मित्र ! मैं अकेले पाँच घड़ों को कैसे

---

SUBALA (*walking about*) Lalita these pots of yours which cause you weariness with their weight I shall carry to the toll gate so that you may walk comfortably

LALITĀ (*looking with a contemptuous smile*) Fie upon you ! you the pleasure companion of the king of expert theives ( Cillata ) ! Can one dare attempt to steal even a blade of grass of Lalitā even while she is asleep ?

SUBALA (*turning back in hesitation*) Dear friend how can I

द्विपदर्पहरस्य को हरेर्वा
हरिणीवृन्दविमर्दने प्रयासः ॥ ६९ ॥

राधा — किं कादव्वं हरिणा जं सरहसं बलिदा पुरदो ललिदा।
[ किं कर्तव्यं हरिणा यत् सरभसं वलिता पुरतो ललिता। ]

कृष्णः — पङ्कजाक्षि ! निष्टङ्कित[1]मवधार्यताम् —

विद्योतसे कल्पलतेव कामदा
भ्रूकार्मुकं भूरि धुनोषि चायतम्।

---

दर्पस्य हरः तादृशस्य गजमददलनस्य हरेः सिंहस्य श्लेषेण कृष्णस्य हरिणीनां मृगीणां तदध्यवसितानां कोमलाङ्गीनां विमर्दने धर्षणे कः प्रयासः यत्नः, अर्थात् न कोऽपि — अनायाससाध्योऽयं विषय इति। अत्रोत्तरार्द्धे श्लेषः साध्यावसानातिशयोक्तिश्च। प्रसादो नाम गुणः। वैदर्भी रीतिः। कोमला वृत्तिः। अत्र वियोगिनी वृत्तम् ॥६९॥

हरेः सामर्थ्यमधिक्षिपन्ती राधा प्राह किमिति — हरिः किं करिष्यति यतः पुरतः सरभसं धृष्टतया ललिता वलिता अस्ति वेष्टमाना संरक्षन्ती तिष्ठतीत्यर्थः। अत्र वाक्यास्योत्तरार्द्धे "रहसं वलिदा पुरदो ललिता (= रभसं वलिता पुरतो ललिता) इति तोटकवृत्तचरणानुबन्धि, अत एवात्र गद्यबन्धो वृत्तगन्धी। सरहसं वलिता — इति प्राकृतांशस्य सरहेण शरभेन सिंहघातिना जन्तुना संवलिता युक्ता संरक्षितेति तात्पर्यम् — तेन चात्र श्लेषः।

कृष्णः प्रत्याह पङ्कजाक्षीति — हे कमलनयने ! निष्टङ्कितं निश्चितम्। पाठभेदे तिष्ठ विरम कितवं रहस्यमवधार्यताम्। विद्योतस इति — कल्पलता इव कामदा

---

हाथियों के मदोन्मत्त दम्भ को दलित करने वाले सिंह को हरिणियों के झुण्ड को रौंदने में भला कौन कठिनाई है ? [ > कोमलाङ्गियों के मर्दन करने में हरि (कृष्ण) को क्या कठिनाई है ] ?

राधा — हरि से क्या होना जाना, क्योंकि सामने सबल (प्रचण्ड) रूप से संरक्षिका ललिता विद्यमान [ > सिंहमर्दक शरभ से सुरक्षित ] है।

कृष्ण — स्पष्ट रूप से निर्णय किया जाय।

मनचाही वस्तु को देने वाली [ > रति सुख दायिनी ] कल्पलता के

---

and complain to the King only for your sake? What exertion does a lion (Hari i. e. Kṛṣṇa), capable of humbling the haughtiness of an elephant, need for crushing a herd of does?

RĀDHĀ : What can a lion do when Lalitā is there to protect (> is well-protected by a *Śarabha*)?

KṚṢṆA : Lotus-eyed one! it must be clearly decided —

70. You shine like the heavenly wish-yielding tree, and

---

1. "तिष्ठ विरम०" इति पाठभेदः।

इत्यर्थपुञ्जं मम देहि पुष्कलं
किम्वा सखीभिः सह सुष्ठु विग्रहम् ॥ ७० ॥

ललिता — (कुटिल विलोक्य) गोविआहारसङ्खचूडारमद्दणेण विक्खाद-विक्कमोसि ता जुत्ता विग्गहाहिलासुअदा । [गोपिकाहारशङ्खचूडोपमर्द्दने विख्यात-विक्रमोऽसि, तद्युक्ता विग्रहाभिलाषुकता ।]

---

ईप्सितदायिनी, पक्षे काम मनोजरस ददात्यसौ त्व विद्योतसे भासि, परञ्च कामोद्दीपनाय आयत दार्घं भ्रूरेव कार्मुकं धनु भूरि वारम्वारं धुनोषि चालयसि । इति मम तुष्टये इति शेष । तदथ पष्ठी । पुष्कल प्रचुर अर्थपुञ्जं धनसमूहं देहि — यत सखीभि युष्माभि सार्धं विग्रहो युद्ध किं वा सुष्ठु शोभनो भवेत् । अथवा त्व सखाभि युता सुष्ठु सम्यक् विग्रह युद्ध देहि, रणाय सज्जीभव । आकूतन्तु यत भ्रूभङ्गैर्मम मनोभव समुद्दीपयसि अत सखीभि सह सुष्ठु शोभन विग्रहं कलेवर म देहि इति ।

अत्र श्लेषालङ्कार । प्रसादो गुण । अत्र इन्द्रवंशा नाम वृत्त — "स्यादिन्द्रवंशा यदि चेत्ततौ जरौ"— इति लक्षणात् ॥७०॥

कृष्णम्प्रति कुटिल नर्मणा तिर्यगवलोकयन्ती ललिता प्रतिवक्ति **गोपिकेति** — गोपिका हरत्यसौ इति गोपिकाहार (अण् प्रत्यय) स चासौ शङ्खचूड तन्नामा दैत्यपक्षी तस्य हनन कृष्णेन कृतमासीदिति वार्त्ताऽनानुसन्धेया । तस्य शङ्खचूडस्योपमर्दनेन विख्यातविक्रमोऽसि त्वमत विग्रहे युद्धे अभिलाषुकता तव युक्ता समीचीनैवास्ति । पक्षे गोपिकानां हारा मुक्तावल्य शङ्खोपकल्पिता चूडा मौल्य तदुपमर्दनेन धर्षणेन इति श्लिष्टोऽर्थ ।

---

समान जगमगा रही हो, विशाल भौंह की कमान को बार-बार कँपा रही हो । अत मेरी चुंगी की प्रचुर धन राशि दो, क्योंकि सहेलियों के साथ युद्ध कहीं शोभा देता है ? (अथवा युद्ध के लिये तैय्यार हो जाओ) [ > सुन्दर शरीर समर्पण करो । ]

ललिता — (तिरछे देखकर) गोपियों के हरण कर्त्ता शङ्खचूड (नामक दैत्य) के मार डालने से, [ > गोपियों के हार तथा शङ्ख की बनी चूडामणि के प्रति उद्धत व्यवहार करने से ] तुम्हारी बहादुरी विख्यात है, अत युद्ध [ > शरीर ] के लिये तुम्हारा लालायित होना उचित है ।

— — —

you brandish time and on the exceedingly large brow-bow of yours So, pay me either the entire heap of coins due to me or will an affray with friends become you ! or offer a fair battle (also *vigraha* = beautiful body) along with your friends

LALITĀ (*with a cunning look*) Right, it is quite apt for you to desire a battle, who have become renowned for your vain claims of valour in looting the necklaces, conch diadems of the cowherd women (or killing the yākṣa, Sankhā cuda, the abductor of cowherdessess).

आहरिस्सं ता इमेहि वअस्सेहिं सद्धं सअं च्चेअ सण्णिहेहि । [ प्रियवयस ! एकोऽहं कथं कुम्भपञ्चकमाहरिष्यामि ? तदेभिर्वयस्यैः सार्धं स्वयमेव सन्निधेहि । ]

कृष्णः — सखे ! सुबलोऽपि सुष्ठु दुर्बलोऽसि, यदेष ललितायाः फल्गुभिरेव मटस्फटिभिस्त्वमुच्चाटितः ।

सुबलः — ( सनर्मस्मितमपवार्य ) पिअवअस्स, अलं वअणमेत्तसुलहेण दप्परासिणा, सुट्ठु पच्चक्खीकिदविक्कमोसि । [ प्रियवयस्य ! अलं वचनमात्र-सुलभेन दर्पराशिना, सुष्ठु प्रत्यक्षीकृतविक्रमोऽसि । ]

जं तस्सिं दिअहे राहिआए सद्धं वट्टंतुहिं कीलाजूदेहिं कूडेण जअं

एकः अहं कथं पञ्चकुम्भकं पञ्चानां कुम्भानां समूहं आहरिष्यामि नेतुं समर्थः स्याम् — अतः मधुमङ्गलादिभिः सह स्वयमेवैतानुद्धृत्य नयेति ।

कृष्ण उपहसन्नाह सखे इति — नाम्ना सुबलोऽपि सुष्ठु दुर्बलः असि — तत्र हेतु-माह यदेष त्वं ललितायाः फल्गुभिः निस्सारैः मटस्फटिभिः आटोपवचनैः उच्चाटितः अपसारितः भयं प्रापितः । मटस्फटिरिति देशी आभीरीभाषाप्रयोगः ।

रहस्यं तथ्यञ्च स्मारयन् सखिमनुचितमुपदिशति कृष्णं सुबलः प्रियवयस्येति — अलं वारणार्थे तृतीया — दर्पराशिः गर्वस्तोमस्तु वचनमात्रेण सुलभो भवति — कार्यान्वये तु दुष्कर एव अतः वाचा दर्पेणालम् । तत्र पुरावृत्तं स्मारयति — यत् तस्मिन् अतीते कस्मिंश्चन दिवसे राधिकया सार्द्धं वर्तमाने प्रचलति क्रीडाद्यूते कूटेन मिथ्यैव कपटेन

---

ले जा सकूँगा । इस लिये इन सखाओं के साथ आप ही खुद रख आइये ।

कृष्ण — मित्र ! सुबल ( नाम ) होते हुए तुम खूब दुर्बल हो, जो कि ललिता के झूटमूठ की फटकारों से ही भयभीत हो गये ।

सुबल — ( विनोदी मुस्कुराहट के साथ, एक ओर ) प्रिय मित्र ! वाणी मात्र से सुलभ इस महादम्भ को रहने दो । तुम्हारी बहादुरी अच्छी तरह देखी जा चुकी है, जो कि उस दिन राधिका के साथ चल रही द्यूत क्रीडा में

---

alone carry five pots? Please, therefore, come along with these freinds.

KRṢṆA : Though named strong (=Subala) you are very weak; for you are violently shaken merely by the empty threats of Lalitā.

SUBALA : (*humorously smiling, aside*) Dear freind, enough of this excessive pride, easy to display in words. Your valour is well-demonstrated: that day when you were with Rādhā gambling in a sportive game of dice, you

उग्घुसिअ ललिदाए आअट्टिदमुरलिओ तुमं कोत्थुअसगोवणं कुणंतो सुम्हेर-मुहीहिं कडक्खिज्जंतो सकादलो तुण्णं सवुत्तो आसि । [यत्तस्मिन् दिवसे राधिकया सार्द्धं वर्त्तमाने क्रीडाघूरे कृष्णेन उद्घुष्टे ललितयाकृष्टमुरलीकस्त्वं कौस्तुभ सङ्गोपनं कुर्वन् सुस्मेरमुखीभिः कटाक्षविषयीक्रियमाणः शङ्काकुलस्तूर्णं संवृत आसीः ।]

कृष्णः—मृषावादवैज्ञानिक! मौनं भज, महासमीरणस्य मे विक्रमधाटी-परिस्पन्दलवारम्भे[1] रम्भेव केय वराकी ललिता ।

---

आत्मनः जयम् उद्घोष्य प्रकाश्य ललितया ताम्बूलापनयनकोपवशात् आकृष्टा मुरली वेणुर्यस्य स त्वं कौस्तुभस्य मणेः सङ्गोपनं कुर्वन् सुतरां स्मेराणि उपहसितानि मुखानि यासां ताभिः सखीभिः कटाक्षाणां तिर्यग्विलोकितानां विषयीक्रियमाणः शङ्काकुलः अपायशङ्कितः सन् तूर्णं त्वरितमेव संवृत निलीन आसीः । तदानीं क्वासीत्ते विक्रमः, सर्वदैव ललिता-प्रभृतिभिः पराभूत, अतः मा मुधा शौर्याडम्बरं वृथा' इति उपदिष्टं नाम नाट्यालङ्करणमत्र सन्निवेशितम् ।

मदमत्तः कृष्णस्तद्वचः पराभूय सुमुखमधिक्षिपति **मृषावादेति**—मृषा मिथ्या यो वादः तस्य वैज्ञानिक विज्ञानकुशल ! मौनं भज । महासमीरणस्य वेगवत्तरस्य वायोः मे विक्रमस्य या धाटी बलादाक्रमणपरिपाटी तस्याः परिस्पन्दस्य सञ्चालनस्य लवेन अंशतोऽपि आरम्भे प्रक्रमे सति रम्भा कदलीस्तम्भ इव का इयं वराकी तपस्विनी निस्सहाया ललिता इति गर्वोक्तिः ।

अत्र "रम्भे रम्भे" इत्यस्य पृथगर्थत्वे स्वरव्यञ्जनसंहतेरावर्त्तनाद्यमकालङ्कारः । "लवा रम्भे रम्भे" इत्यस्य गद्यखण्डस्य शिखरिणीवृत्तांशत्वादुत्कलिकागन्धिता ।

---

कपट से जय का उद्‌घोष करने पर ललिता द्वारा खींची जाती हुई मुरली वाले तुम कौस्तुभ मणि को बड़ी सतर्कता से बचाते, हँसती हुई रमणियों के कटाक्ष का विषय बनते, दुविधा में घबराये हुए तुरन्त लुक गये।

कृष्ण — चापलूसी में चतुर! चुप रहो। प्रबल वेगवान् वायु के समान मेरे विक्रम (बहादुरी) के बलात् आक्रमण की परिपाटी के ज़रा सा स्पन्दित हो जाने पर कदली की तरह यह ललिता बेचारी क्या है? (प्रचण्ड वायु के हल्के झकोरे की आशङ्का मात्र से कदली काँप उठती है।)

fraudulently declared your victory and Lalitā snatched away your flute Then, *filled with dread you hid your* gem, *Kaustubha* with care and when you were subjected to side long glances of these smiling belles you quickly concealed *yourself from there*

KRSNA Shut up you expert liar! What is this wretched Lalitā like a plantain tree when commences just a hint of my windlike assault?

---

1 'परिस्पन्दनारम्भे' इति पाठभेदः ।

**ललिता** — विसाहे, तं अम्ह् प्पिअसहीभादुअं सिरीदामजोइंदं वंदेहि, जेण पराणामेण वलिट्ठं मारुदं णिज्जिदीकदुअ महारंभाणं गोईणं गोट्ठी उप्फुल्ली किदा । [ विशाखे ! तमस्मत्प्रियसखीभ्रातरं श्रीदामयोगीन्द्रं वन्दस्व येन प्राणायामेन बलिष्ठं मारुतं निर्जितीकृत्य महारम्भाणां गोपीनां गोष्ठी उत्फुल्लीकृता । ]

**विशाखा** — ( सस्मितम् ) ललिदे । साहु[1] किं पि सुमारिदं तुए । [ ललिते ! साधु[1] किमपि स्मारितं त्वया । ] ( इति संस्कृतेन )

---

ललिता किमपि पूर्ववृत्तं स्मारयन्ती विशाखां सम्बोधयति **तमस्मदिति** — श्रीदामा नाम कृष्णस्य बालनर्मसखो गोपः योगीन्द्रः हठयोगिप्रमुखः तं वन्दस्व प्रणम येन प्राणानामायामेन नियन्त्रणेन बलिष्ठं तीव्रतमं मारुतं वायुं निर्जितीकृत्य नियम्य महारम्भाणां उत्सवशालिनीनां गोपीनां गोष्ठी मण्डली उत्फुल्लीकृता कष्टादुन्मोच्य प्रसन्नतां नीता ।

अत्र श्लेषवैभवात् योगः उपायस्तद्वान् योगी येन सामादिषु चतुर्षु प्रकृतोपयोगिनं दण्डं प्राणायामेन बलप्रयोगेण मा मा इति रुतं क्रन्दनमिति मारुतं निर्जितीकृत्य समाप्येति द्वितीयार्थनिष्पत्तिः । कस्मिंश्चित्प्रसङ्गे गोपिका निर्विशमानाः केनापि उन्मुक्तभावेन धर्षिता मा मा इति कुर्वाणाः श्रीदाम्ना संरक्षिता इत्यवधेयम् ।

ललितोक्तिमनुमोदमाना विशाखा साधु ततोऽप्यधिकमुत्कर्षं स्मारयति **किमपीति**— किमपि किञ्चिदेव उत्कर्षस्योल्लेखस्त्वया कृतः । ततोऽप्यधिकमभूत् किन्तदित्याह संस्कृतेन

---

**ललिता**— विशाखे ! अपनी प्रिय सखी के भाई उस योगिराज श्री दामा को दुहाई दो, जिसने प्राणायाम के द्वारा प्रबल मारुत को [ >मा, मा = मत मत — इस रुत=ध्वनि को ] पराजित कर उत्सव मना रही गोपियों की गोष्ठी को प्रफुल्लित कर दिया था ।

**विशाखा** — ( मुस्कुराती हुई ) ललिते ! किसी अच्छी सी बात का तुमने स्मरण करा दिया । ( संस्कृत के माध्यम से )

---

LALITĀ : Viśākhā ! Bow to the great *yogīn* Śrī Dāmā, the brother of our dear friend, who, by deep breathing exercises, had completely subjugated the powerful Māruta ( the god of wind ) and gladdened the assembly of the entertaining milk-maids. ( *Māruta* = *mā mā ruta*, the cries of negation=please do not ).

VIŚĀKHĀ : ( *smiling* ) You have, Lalitā, reminded of something fine :

---

1. क्वचित् "साधु"-इति नास्ति ।

**श्रीदामचन्द्राङ्कितपूर्वकायं भाण्डीरपूर्वाचलमाश्रयन्तम् ।**
**कृष्णाम्बुदं तत्र विलोक्य वृन्दा स्मेरेयमासीच्चपला सखी नः ॥७१॥**

**अर्जुन** — (सस्कृतेन)

**अत्र नः सवयसां गणान्तरे जीयते जयति वा न कः सखा ।**
**तत्र गोष्ठसुदृशां किमागतं किङ्गतं[1] वदत वो मदप्लुताः ॥७२॥**

---

**श्रीदामेति** – श्रीदामा एव चन्द्रस्तेन अङ्कित कायस्य पूर्वभाग यस्य तादृश, भाण्डीराख्यस्य वटस्य पूर्वगिरिमाश्रयन्त कृष्णरूपम् अम्बुद मेघ विलोक्य न अस्माक सखी चपला सदा कृष्णस्योत्कर्षमामनन्त्यपि क्वचिदस्माकमप्युत्कर्षं पश्यतीति तादृशी वृन्दा स्मेरा प्रसन्नानना आसीत् । अस्माकमेव तस्मिन् प्रसङ्गे विजयोऽभूदिति पूर्ववृत्तस्मरणात्स्मरणमलङ्कार । अत्र वृत्तमिन्द्रवज्रा ॥ ७१ ॥

विशाखास्मारिते प्रसङ्गे जयाजये किं भवतीनामित्याक्षिपन् अर्जुन प्रतिवदति

**अत्रेति** — अत्र न अस्माक सवयसां समानवयस्कानां सुहृदां गणान्तरे समूहमध्ये क सखा जीयते पराजय लभते जयति वा न वा तत्र गोष्ठसुहृदां किमागत किं लब्ध, किं व

---

श्री दामचन्द्र को कन्धे पर चढ़ाये हुए, [ > अनुपम चन्द्रहार से सुशोभित वक्षस्थल ] [ < चन्द्रहार के निशान युक्त वक्षस्थल वाले या मयूर पख पर आँख जैसी सुन्दर रेखाओं के निशान से सुशोभित शिर वाले ], भाण्डीर वृक्ष की पूर्व वाली पहाड़ी पर स्थित घनश्याम को देख कर उस समय हमारी यह चपला सखी वृन्दा मुस्कुरा उठी थी ॥७१॥

**अर्जुन** — (सस्कृत के माध्यम से)
व्रज में हम समवयस्कों (=हमजोलियों) की मण्डली में कौन सखा हारता या जीतता नहीं है। उसमें तुम व्रज की रमणियों का क्या आया या क्या गया – बडी गर्वीली बनने वाली तुम बताओ तो ? ॥७२॥

---

71 Seeing Krsna (there on the Mt Govardhana) with the front of his body decked with an excellent pendent of his necklace while reclining on the lofty banyan tree named Bhandira like a cloud recumbent on the eastern mountain, our friend (this Vrndā) flirting like lightning was all smiles

ARJUNA 72 In this society of our friends which friend wins and which loses is a matter in which, tell me you insolence-intoxicated women! what is it that you, Vraja belles gain or lose?

---

1 'कारण' – इति पाठभेद ।

कृष्णः -- ( राधामवेक्ष्य )

**दातुमिच्छसि न काञ्चनानि चेच्चातुरीं मनसि काञ्चनाश्रिता ।**
**गौरि गैरिकविचित्रितोदरीं त्वं ततः प्रविश भूभृतो दरीम् ॥७३॥**

( इति राधामावृणोति )

**ललिता** — ( मध्यमासादयन्ती ) **रअणारिअ, सुणाहि । माहुरीमाहप्पेहिं पाअ-पउम-पफंस-सोहग्गभाअत्तणं अत्तणो अमण्णिउण संकाउलेण णिअघरा-**

युष्माकं गतं नष्टमिति हे मदप्लुताः गर्वभरभरिता यूयं वदत । किं गतमित्यत्र कारणमिति पाठे हेतुं वदत - इत्यर्थः । जयपराजयविषये अस्मद् - मण्डलीसदस्यत्वं हेतुः न तु श्रीदाम्नः युष्मद्भ्रातृत्वमतः वृथा युष्माकं मद इति तात्पर्यम् । पुणरीती पूर्ववत् । रथोद्धता वृत्तम् ॥७२॥

सर्वमिदं वाकोवाक्यमप्रासङ्गिकमिति कृत्वा राधाबद्धैकलालसः स्वीयमेव रटनमावर्त्तयन् राधामेवक्षमाणः कृष्णः पुनर्ब्रूते **दातुमिति** — काञ्चन कामपि चातुरीं मनसि आश्रिता त्वं, हे राधे । काञ्चनानि शुल्कत्वेन देयानि चेत् यदि दातुं न इच्छसि तदा हे गौरि सुन्दरि ! गैरिकादिभिः धातुभिः विचित्रितं विविधरङ्गैः रञ्जितम् उदरं मध्यभागः यस्यास्तादृशीमिमां भूभृतः गिरेः दरीं कन्दरां त्वं प्रविश येन सुखं निर्विशेवहि । शुल्कं देहि धनरूपेणान्यथा तद्व्यतिहारेणात्मनो देहं मे भोगायार्पयेति साम्रेडं निरूपमुदीरयतो नायकस्य धृष्टत्वं धीरललितत्वमात्रमभिव्यनक्ति, अस्याः रतियाच्ञायाः ह्यत्वे सहृदयाः प्रमाणम् । अनवीकृतत्वं तु स्फुटमेव ।

अत्र पूर्वार्धे "काञ्चना - काञ्चना" इत्यस्यावृत्तेर्यमकम्, परार्धे च "तोदरीं तोदरीम्" इत्यत्रापि पादान्तयमकम्, "गौरि-गैरि" इत्यत्र वृत्त्यनुप्रासः । अत्र स्थाने रथोद्धता वृत्तम् । प्रसादगुणः रीतिश्च वैदर्भी ॥७३॥

एवं ब्रुवन् साहसिक्येन राधामावृणोति दोर्भ्यामाच्छादयति कृष्णः । व्यवहारममुमयुक्तं मन्वाना ललिता राधाकृष्णयोर्मध्ये आसादयन्ती आत्मानं स्थापयन्ती कृष्णं भर्त्सयति

---

कृष्ण — ( राधा की ओर देखकर ) किसी चतुराई को मन में लेकर यदि तुम्हें का धन न देने की इच्छा हो, तो गोरी ! पहाड़ की गैरिक आदि धातुओं से रञ्जित मध्यभागवाली कन्दराओं में तुम प्रवेश करो ॥७३॥

( ऐसा कह कर कृष्ण राधा को घेर लेते हैं )

ललिता — रतिलम्पट ! सुनो, इसके मनोहर रूप की माधुरी के प्रभाववश चरणकमल से भी सम्पर्क के सौभाग्य की पात्रता अपनी न समझकर आशङ्का

---

KRSNA : ( *looking at Radha* )
73. If you, resorting to some shrewd move in the mind, do not wish to pay gold coins, then, fair women ! enter the mountain cave the interior of which is beautifully painted with mineral pigments (*He encloses Radha*).

LALITA : ( *intervening* ) You lusty fellow ! listen. Our beloved friend, Radha, is treated with veneration even by her

वट्टिदि-मेत्त-किदत्थमण्णेण भत्तुणा वि दुरादो साअरं वंदिज्जतीए । [ रतनारीक ! शृणु, माधुरीमाहात्म्यै पादपद्मस्पर्शसौभाग्यभाक्त्वमात्मनोऽमत्वा शङ्काकुलेन निजगृहावस्थितिमात्रकृतार्थम्मन्येन भर्त्रापि दूरत सादर वन्द्यमानाया ]

( इत्यर्धोक्ते राधिका साभ्यसूय ललितां पश्यति )

( स्मित्वा ) आकोमारं पुरिस-जण-परिमल-कणिआ-महिण्ण-सव्वंगाए जाए अम्ह प्पिअसहीए अगाइ सेवापज्जुस्सुएण वि मजुलाणं

---

**रतनारीकेति** — रता नार्या येनेति रतनारीकस्तत्सम्बुद्धौ हे रतिलम्पट शृणु । अस्या राधाया वपुषो माधुरी पेशलत्वलावण्यादिगुणघटिता या रम्यता तस्या माधुर्या माहात्म्यै गौरववशात् पादपद्मयो स्पर्शस्य यत् सौभाग्य तद् भजतालि सौभाग्यभाक् तस्य भाव सौभाग्यशालित्वमात्मन अमत्वा पादपद्मस्पर्शऽप्यनधिकारिता स्वस्य मन्वानेन शङ्काकुलेन अत एव इय मे गृहेऽवतिष्ठतीत्येतावदेव ममाल सौभाग्यमिति आत्मान कृतार्थमन्येन भर्त्रापि दूरतोऽङ्गस्पर्श विना वन्द्यमानाया ( इत्यर्धोक्तौ राधा स्वोत्कर्ष शृण्वती ललितां साभ्यसूय पश्यति ) आकौमार यौवनारम्भादारभ्य पुरुषजनस्य परिमल गन्ध स्पर्शजयस्तस्य कणिकया लेशेनाप्यनभिज्ञ सर्वाङ्गमाचरणचूड यस्यास्तान्दया अस्मत् प्रियसख्या राधाया अङ्गानि मञ्जुलानां रमणीना सेवापर्युत्सुकेन तासां सुषमाभिवर्धनरूपोपकारकरणे सुतरा-

---

से प्रभावित, अपने घर में जिसकी स्थिति मात्र से ही अपने को कृतार्थ मानने वाले पति से भी दूर से ही सादर वन्दना की जाने वाली,

( इस तरह आधी बात पर ही राधा ललिता को आखें तरेरती है )

बचपन से ही पुरुष के तनिक सुवास [ > सम्पर्क ] से भी नख से शिख तक अपरिचित, रमणियों की सेवा करने के लिये उतावला मनोहर नव यौवन भी विमूढ़ सा सहम कर हमारी

---

husband who, not considering himself fit for the good fortune of having a touch of her lotus like feet in all her majestic sweetness, is full of misgivings about his own deserts and considers himself happy by her mere residence in his house

*[ At this stage of her half-spoken speech Rādhā looks at Lalitā as though in anger at denigrating her husband in her presence ]*

*( smiling )* Her entire body is stranger to even a particle of men's fragrance and her limbs have not been properly developed, as it were, out of fear by the

णअज्जोव्वणेण सज्झसादो विअ मंथरीभविअ अज्ज वि णिब्भरं ण परिसीलिदाइं, ताए महासदी-कुलचक्कवट्टिणीए इमाए अंगस्स पेक्खणे वि किदज्झवसाओ जणो महासाहसिआणं धुरंधरो भणीअदि, किं उण फंसणेण, ता अवेहि । [ आकौमारं पुरुजन-परिमलकणिकानभिज्ञसर्वाङ्गाया यस्या असत्प्रियसख्या अङ्गानि सेवापर्युत्सुकेनापि मञ्जुलानां[1] नवयौवनेन साध्वसादिव मन्थरीभूयाऽद्यापि निर्भरं न परिशीलितानि, तस्या महासतीकुलचक्रवर्तिन्या अस्या अङ्गस्य प्रेक्षणेऽपि कृताध्यवसायो जनो महासाहसिकानां धुरन्धरो भण्यते, किम्पुनः स्पर्शनेन, तदपेहि । ]

( सर्वाः स्मितं कुर्वन्ति )

मुत्सुकेन सताऽपि नवयौवनेन साध्वसादिव मा तावदस्या अङ्गानि स्पृष्टानि स्युरिति भयादिव मन्थरीभूय अमन्थरेणापि नवयौवनेन प्रसह्य मन्थरतां गतेन अद्यापि अतिक्रान्तेऽपि कौमारे निर्भरं स्वैरं यथेच्छं न परिशीलितानि । एतादृश्या महासतीनां कुलस्य वृन्दस्य चक्रवर्तिन्याः मूर्ध्नि स्थितायाः अङ्गस्य एकमात्रस्यापि प्रेक्षणेऽपि दूरतोऽवलोकने अपि कृताध्यवसायः विहितमतिः मनोव्यापारमात्रेणापि जनः महासाहसिकानां धृष्टतमानां धुरन्धरोऽग्रणीः भण्यते किम्पुनः स्पर्शनेन — तदपेहि दूरमपसर ।

अत्र भणितिगतवक्रता मनोहारिणी — माधुरीमाहात्म्यमिति वचनेनालौकिकसौन्दर्यशालिता, शङ्काकुलेनेति प्रभुता, दूरतो वन्द्यमानाया इति कथनेन परिणीताया अपि अभुक्तता, पुरुषजनेनेत्यनेन केनाप्यपरामृष्टता, यौवनेन मन्थरीभूयेति कथनाल्लघु लघु यौवनोद्गमेन प्रथमयौवनावस्था इति वस्तूनि व्यज्यन्ते । येन सर्वथेयं तवोपभोगाय समुचिता इति वस्त्वन्तरं उद्दीपनञ्च ध्वन्यते । अत्रोत्प्रेक्षालङ्कारः । मन्थरीभूयेति च्वेः साभिप्रायत्वात्प्रत्ययगतवक्रता ।

गद्यबन्धेऽस्मिन् माधुर्यं गुणः, पाञ्चाली च रीतिर्थगम्भीरिमा मृद्वीकासदृशः पाकः । अत्र नायिकाया गुणोत्कर्षख्यापनात् विलोभनं नाम नाट्याङ्गम् ।

---

जिस प्रिय सखी राधा के अङ्गों को अभी तक प्रगाढ परिशीलन (=सम्पर्क) नहीं कर सका है, उस महासती समूह में मूर्धन्य राधा के अङ्ग को देखने के लिये भी प्रयास करने वाला मनुष्य बहुत बड़े साहसिकों का अग्रणी कहा जाता है। स्पर्श की बात ही क्या है। इस लिये दूर हो जाओ।

( सब मुस्कराती हैं )

blooming Youth though anxious to serve her (> beauties). That man, who thinks of even gazing at, let alone touch, this queen of the highly chaste women, is considered the foremost among the greatest of adventurers. Therefore, be gone.

*( All smile )*

1. मञ्जुना – इति पाठभेदे स्वरपदस्य विशेषणम् ।

मधुमङ्गलः — ( विहस्य ) ललिदे, अलं इमिणा गव्वभारेण, पुच्छिज्जउ अप्पणो प्पियसही गंधव्विआ जाए दुव्वासस्स मुणिणो मुहादो अम्हपिअ-वअस्सस्स आकोमारं अच्चरिआ बह्मचरिअ-माहुरी सअं च्चेअ आअण्णिदा। [ ललिते ! अलमेतेन गर्वभरेण, पृच्छ्यतामात्मन प्रियसखी गान्धर्विका यया दुर्वाससो मुनेर्मुखाद् अस्मत्प्रियवयस्यस्याकौमारमाश्चर्यब्रह्मचर्यमाधुरी स्वयमेवाकर्णिता। ]

सुबलः — ललिदे, सच्चावेदि एसो मणिपुत्तओ, ता पत्तिआएहि। जं महावीरव्वदो पिअवअस्सो णारीण गणादो भाएदि। [ ललिते ! सत्यापयत्येष मुनिपुत्रक, तत्प्रतीहि, यन्महावीरव्रतोऽपि प्रियवयस्यो नारीणां गणाद् बिभेति। ]

अर्जुनः — ऑ विण्णादं ! अदो च्चेअ इमाणं कडअसद्दमेत्तेण संभमाउलो

---

मधुमङ्गल **विहस्येति** — गर्वभारेण दर्पाधिक्येन। गान्धर्विका राधा। अस्मत् प्रियवयस्यस्य कृष्णस्य। आकौमार कुमारावस्थात। आश्चर्यमिति भावाभिव्यञ्जकं क्रियाविशेषणम्। ब्रह्मचर्यस्य स्त्रीप्रसङ्गवैमुख्यस्य माधुरी। आकर्णिता श्रुता।

सुबल **ललित इति** — सत्यापयति सत्यत्व प्रमाणयति। महावीर हनूमान् तस्याखण्डितब्रह्मचर्यव्रतमिव व्रत नियम यस्य स। गणात् इति बिभ्यते योगे पञ्चमी।

अर्जुन **आमिति** — विस्मये। आसां नारीणां कटकशब्दमात्रेण नूपुरादि-

---

मधुमङ्गल — (हँसते हुए) ललिता ! इस अत्यधिक गर्व को रहने दो। तुम अपनी इस प्रियसखी राधा से ही पूछ लो जिसने महर्षि दुर्वासा के मुख से हमारे प्रिय मित्र कृष्ण की कुमारावस्था से ही आश्चर्यजनक ब्रह्मचर्य के कारण मधुरिमा को स्वय सुनी है।

सुबल — ललिता, यह मुनिपुत्र (जैसा सत्यवादी) मधुमङ्गल अपने कथन को प्रमाणित कर रहा है। इसकी बात पर विश्वास करो, क्योंकि यह हमारा मित्र कृष्ण हनूमान् जी की तरह व्रत धारण किये हुए महिला-मण्डली से भयभीत रहता है।

अर्जुन — हा, हा ! मुझे मालुम है। यही कारण है कि स्त्रियों के कङ्कण की आवाज़

---

MADHUMANGALA Lalitā, enough of this excessive pride You may ask your dear friend, Rādhā (= Gāndharvikā) who hereself, heard from the lips of the sage, Durvāsas, about the sweetness of our friend's life of amazing celibacy right from his boyhood

SUBALA Lalitā, this son of a sage (= Madhumangala ironically) proves the veracity of his statement So believe him Though avowed as Hanumat for celibacy, our dear friend, Krsna fears the bevy of women

ARJUNA Oh ! I understand That is why several times did I

भविअ कंपंतो पुलइदंगो मए वारं वारं दिट्ठोत्थि । [ आँ, विज्ञातम् ! अतएवासां कटकशब्दमात्रेण सम्भ्रमाकुलो भूत्वा कम्पमानः पुलकिताङ्गो मया वारं वारं दृष्टोऽस्ति । ]

कृष्णः — ( स्मितं कृत्वा ) ललिते ! नात्र विप्रतिपत्तिस्ते श्रेयसी, यतः समानधर्मणोः साधकयोः सहवाससौहार्दमाधुरी झटिति महाव्रतसिद्धये साधु कल्पते ।

राधा — ( दृगञ्चलं साचि विक्षिपन्ती सावहेलं किञ्चित्परावृत्य ) णाअर, सावसेसा ण क्खु तुम्ह चावलमाहुरी, ता अलं पिट्ठपेसेण । [ नागर ! सावशेषा न खलु युष्मच्चापलचातुरी, तदलं पिष्टपेषेण । ]

---

भूषणानां रवेणापि । सम्भ्रमाकुलो विह्वलः सन् । पुलकितानि अङ्गानि यस्य सः पुलकिताङ्गः रोमाञ्चितगात्रः ।

कृष्णः **ललित इति** — विप्रतिपत्तिः आशङ्का अन्यथाकल्पनम् । श्रेयसी प्रशस्यतरा । समानधर्मणोः तुल्यव्यवसाययोः साधकयोः व्रतचारिणोः सहवासजन्यं यत् सौहार्दं तस्य माधुरी झटिति शीघ्रमेव महाव्रतस्य कठोरनियमस्य सिद्धये साधु सम्यक् कल्पते परिणमति । सिद्धये इत्यत्र "क्लृपि सम्पद्यमाने" इत्यनेन चतुर्थी ।

अत्रान्तरे राधा दृगञ्चलम् अपाङ्गं साचि तिर्यक् विक्षिपन्ती सावहेलं अवज्ञां आविष्कुर्वती किञ्चित्परावृत्य मुखं परिवृत्याह **नागरेति** — युष्मच्चापलस्य चातुरी सावशेषा न परिपूर्णतां गता । तदलं पुनः पुनः तदेव कथनरूपेण पिष्टस्य पेषणेन । पिष्टपेषणं नाम चूर्णीकृतस्य धान्यस्य पुनः चूर्णनव्यापारः ।

---

मात्र से घबराकर काँपते हुए, भय से रोमाञ्चित होते हुए मैंने कृष्ण को अनेक बार देखा है ।

कृष्ण — ( मुस्कराते हुए ) ललिता ! इस सम्बन्ध में तुम्हारी आशङ्का ठीक नहीं है ; कारण समान लक्ष्य रखने वाले दो साधकों के सहवास से जन्य मित्रता की मधुरिमा चटपट महाव्रत की सिद्धि में सहायक होती है ।

राधा — ( तिरछे कटाक्ष करती हुई, अवज्ञा दर्शाती हुई कुछ मुड़कर ) हे चतुर ! तुम्हारी चपलता की चातुरी में अब कुछ भी शेष नहीं रह गया (= सब चालें हो चुकीं ) ; तो उसी घिसीपिटी बात से क्या लाभ है ?

---

happen to see him perturbed by the mere sound of bracelets and trembling with his body shaken.

KṚṢṆA : ( *smiling* ) Lalitā ! Your objection here is not fair; for, the sweet friendliness of dwelling together of two aspirants of similar object is deemed conducive to the quick accomplishment of the great vow.

RĀDHĀ : ( *looking obliquely and turning back a little, contemptuously* ) Clever man ! nothing remains, indeed, of your mercurial dexterity. Then, please, no more of your vain repetition ( *lit.* grinding the ground flour ).

कृष्ण — (अपवार्य) वृन्दे ! पश्य पश्य ।

**नर्मोक्तौ मम निर्मितोरुपरमानन्दोत्सवायामपि**
**श्रोत्रस्यान्ततटीमपि स्फुटमनाधाय स्थितोद्यन्मुखी ।**
**राधा लाघवमप्यसादरगिरा भङ्गीभिरातन्वती,**
**मैत्रीगौरवतोऽप्यसौ शतगुणं मत्प्रीतिमेवादधे ॥७४॥**

राधाया वाचि प्रतिषेधे सत्यपि आभ्यन्तरं भाव विवृण्वन् वृन्दामपवार्य अन्यैरश्रूयमाण यथा स्यात्तथा कृष्ण वस्तुस्थितिं वर्णयति **नर्मोक्ताविति** — नर्मोक्तौ प्रणयप्रलापप्रसङ्गे मम निर्मित वचसि अथवा निर्मितो जात उरुपरम [१] यो महानन्दस्तस्य उत्सव सुखानुभव यस्या सा तादृश्या सत्यामपि, मद्वच श्रवणाय श्रोत्रस्यान्ततटीं कर्णकुहरं स्फुट परिलक्ष्यमाणरूपेण अनाधाय अपार्श्यापि उद्यन्मुखी स्थिता औत्सुक्यवती राधा असादरं अवज्ञया उक्तानां गिरां वाचां भङ्गीभि परम्पराभि लाघव तुच्छतामातन्वती द्योतयन्ती मैत्र्या सौहार्दस्य गौरवत महिम्ना मत्प्रीतिं शतगुण एव आदधे कल्पितवती ।

अत्र बहुश सासूयवचसां प्रयोगेऽपि तत्सहनपूर्वक प्रात्याधिक्य नायकगत नायिकाविषयकम् 'अपराधसहस्रेणाप्यविचाल्यप्रेमरूप' प्रणय गमयति । नायिकायास्तु नायकवच सु स्फुटतयानवधानकथनादत्र "इष्टे वस्तुन्यप्यनादररूप मानगर्वद्योतक बिब्बोक एव । चन्द्रावल्याद्यन्यप्रणयिन्यपेक्षया अस्या तदीयताख्यापक मैत्रीगौरव सविशेष राधायामिति विज्ञेयम् ।

अत्र नायिकाया स्वभावस्य यथावद्वर्णनात्स्वभावोक्ति । अत्र माधुर्यप्रसादौ गुणौ । मध्यमपाञ्चाली च रीति । वृत्तञ्च शार्दूलविक्रीडितम् ॥७४॥

---

कृष्ण — (एक ओर हो) वृन्दे ! देखो, देखो,

*प्रणयालाप के समय मेरी बातों से जनित प्रभूत परमानन्द की सुखानुभूति भी करती हुई, कर्ण कुहरों को स्पष्ट रूप से न लगा कर भी उत्सुकता के साथ खड़ी हुई, आदररहित वचन की भङ्गिमाओं से तुच्छ बनाती हुई, यह राधा मित्रता की महिमा से भी सौ गुनी अधिक मेरी प्रीति को बढ़ा ही रही है ॥ ७४ ॥*

KRSNA (*aside*) Vrndā, see, see !

74 Despite the fact that my endearing speech has produced in her an excellent festive joy, Rādhā stands with her face lifted up, apparently without directing even the tip of her ear lobe towards it Nevertheless, even by betraying the levity of her disrespectful speech by roundabout phrases, Rādhā has increased my love (for her) hundred times even the dignity of friendship

१ निर्मितोऽनुपमानन्दो – इति पाठान्तरम् छन्दोभङ्गाच्चिन्त्यम् ।

( राधिका किञ्चिद्विहस्य ललितायाः कर्णमूले लगति )

ललिता — कह्न ! गोउले विक्खादगुणो तुमं जुअराओसि त्ति अम्हे तुण्हि वट्टाजइ, सांपदं सीमूल्लंघणे पउत्तो सि तदो अम्हे कीस अप्पणो कज्जं उवेक्खिस्सह्म । [ कृष्ण ! गोकुले विख्यातगुणस्त्वं युवराजोऽसीति वयं तूर्ष्णीं वर्त्तामहे, यदि साम्प्रतं सीमोल्लङ्घने प्रवृत्तोऽसि तदा वयं कस्मादात्म-कार्यमुपेक्षिष्यामहे । ]

अर्जुनः — किं तं कज्जं तुम्हाणं जं उवेक्खद्ध ? [ किं तत् कार्यं युष्माकं यदुपेक्षध्वे ? ]

ललिता — गोवेहिं[1] णिअ-वुंदावणस्स संरक्खणं ज्जेव, इदो अवरं किं कज्जं । [ गोपेभ्यो निजवृन्दावनस्य संरक्षणमेव, इतोऽपरं किं कार्यम् ? ]

कृष्णमुद्दिश्य ललिताऽऽह कृष्णेति — गोकुले समग्रे विख्यातगुणः लीला-प्रवणत्वरूपो गुणः यस्य सर्वतः विज्ञातोऽस्ति तादृशः युवराजः व्रजराजनन्दनः त्वमसीति हेतोः वयं तूर्ष्णीं वर्त्तामहे न किञ्चिद् ब्रूमः, परन्तु यदि त्वं सीमोल्लङ्घने मर्यादातिक्रमे प्रवृत्तः तदाऽस्माभिः त्वद्व्यवहारमुपेक्ष्य स्वस्य कार्यस्य अनुसन्धानं कर्त्तव्यमेव ।

किन्तत् युष्माकं कार्यमिति पृच्छन्तमर्जुनं निजस्य आत्मनो वृन्दावनस्य गोपेभ्यः संरक्षणरूपकार्यं निवेदयन्तीं ललितां प्रति "अहो वृन्दावनरक्षणं युष्मत्कार्यम् भवत्यः एतत्करिष्यन्तीति" उपहासेन हुमिति रवं कुर्वन् गर्वेण शिरो धुन्वन् अवहेलामर्जुनः प्रकटयति ।

( जरा सा हँस कर राधा ललिता के कान के पास कानाफूसी करती है )

ललिता — कृष्ण ! गोकुल में विख्यात गुणवाले तुम राजकुमार हो, इसी लिए हम लोग चुप्पी लगाये हैं, अब यदि सीमा लाँघने पर ही उतारू हो, तो हम लोग कैसे अपने कार्य की उपेक्षा कर सकेंगी।

अर्जुन — आप सब का वह कौन सा कार्य है जिसकी आप उपेक्षा कर रही हैं ?

ललिता — ग्वालों से अपने वृन्दावन को बचाना ही, इसके सिवा और कौन काम है !

*( Radhā laughs a little and clings to the root of Lalitā's ear )*

**LALITĀ :** Kṛṣna ! we behave quietly knowing that you are a prince well-known for your qualities in Gokula. Now, if you are bent upon crossing the limits of decency, why should we neglect our own work ?

**ARJUNA :** What is the work of yours which you are neglecting ?

**LALITĀ :** Only protecting our own Vṛndāvana from the cowherds. What else ?

1. "गोरेहिन्तो" – इति पाठान्तरम् ।

(अर्जुन सावहेलं विहस्य हुङ्कृतिं कुर्वन् मूर्धानमाधुनोति)

विशाखा — (सस्मितमुपसृत्य) ललिदे, गोउलजुअदी-उल-चक्कवट्टिणी अम्ह पिअसही आणवेदी। [ललिते! गोकुलयुवतीकुलचक्रवर्तिनी अस्मत्प्रियसखी आज्ञापयति।]

ललिता — किं तं? [किन्तत्?]

विशाखा — सव्वे गव्विदा गोवा लदंकुरपुजभजणदक्खाणं गाइणं लक्खकोडिओ रक्खन्ता, फलेहिं कुक्खिंभरिणो, पुप्फपल्लवेहिं मिहो णेवच्छआरिणो सुइर अम्ह वुंदावणस्स विद्धंसणं कुणंति, ताअ णिट्टकिदं[1] कधेहि एदे इदो वा विरमेंदु किंवा करं देन्तु। [सर्वे गर्विता गोपा लताङ्कुरपुञ्जभञ्जनदक्षाणां गवां लक्षकोटी रक्षन्त, फलैः कुक्षिम्भरा, पुष्पपल्लवैर्मिथो नेपथ्यकारिण सुचिरं वृन्दावनस्य विध्वंसनं कुर्वन्ति, तन्निष्टङ्कितं[1] कथय, एते इतो वा विरमन्तु, किं वा करं ददतु।]

---

तावदेव विशाखा गोकुलयुवतीनां मुख्यायाः राधाया आज्ञां श्रावयति **सर्वे गर्विता इति** — स्वाभिमानमत्ता गोपा लताङ्कुराणां पुञ्जानां गुच्छकानां भञ्जने उत्पाटने दक्षाणां गवां लक्षकोटीं रक्षन्त, अपि च स्वयं फलैः कुक्षिम्भरा उदरपूरणे रता, परञ्च पुष्पैः पल्लवैश्च नेपथ्यकारिण वसनाभूषणैः प्रसाधनपरा सुचिरं बहोः कालात् वृन्दावनस्य विध्वंसनं कुर्वन्ति। तत् अत एव निष्टङ्कितं निःशङ्कं कथय एतान् (तदनिष्टम् तां महतीं क्षतिं कस्मै कथये विज्ञापयेयम् — इति पाठभेदे)। जातं तज्जातमधुनाऽपि एते गोपा इतः वृन्दावनात् विरमन्तु, अथवा करं ददतु। प्रत्यारोपेणाऽयं विनयप्रकारः।

---

(अर्जुन अवहेलना के साथ हँस कर हूँ हूँ करता हुआ माथा हिलाता है)

**विशाखा** — (मुस्कराती हुई पास आकर) ललिते! गोकुल की रमणियों में शिरोमणि हमारी सखी ने आदेश दिया है।

**ललिता** — वह क्या है?

**विशाखा** — लताओं के किसलयों को छिन्न भिन्न करने में पटु, १ लाख करोड़ गायों को बहोरते फलों से पेट भरने वाले, मिल जुल कर फूलों और पल्लवों से सजावट करने वाले सभी गर्वीले ग्वाल बहुत दिनों से वृन्दावन का

---

(*Arjuna laughs contemptuously and uttering the sound 'Hum' — a sound of defiance — shakes his head*)

VISĀKHĀ (*approaching with a smile*) Lalitā! our beloved friend, Rādhā, the queen of the tribe of Gokula women, commands —

LALITĀ What is that?

VISĀKHĀ All insolent cowherds tending a hundred thousand crores of cows engaged in destroying the cluster of creepers and shoots filling their bellies with fruits and

---

1 तदनिष्टं कस्मै कथये — इति पाठभेदः।

**मधुमङ्गलः** — (सामर्षम्) वीवरीदवादिणि ! मुणिव्वदिणी होहि । अधवा थोअं पि तुम्हाणं दूषणं णत्थि, पिअवअस्सस्स कारुणिअदा ज्जेव एत्थ अणत्थआरिणी संवुत्ता । जाए डाहिणाए अडाहिणाणं तुआरिसीणं तत्थ वुंदावणे प्पवेसो प्पसाईकिदो, ता ण क्खु अजुत्तो पलावो । [ विपरीतवादिनि ! मुनिव्रतिनी भव । अथवाल्पमपि युष्माकं दूषणं नास्ति, प्रियवयस्यस्य कारुणिकता एवात्रानर्थकारिणी संवृत्ता, यया दक्षिणयाऽदक्षिणानां त्वादृशीनां वृन्दावने प्रवेशः प्रसादीकृतः, तद्ध खलु युक्तः प्रलापः । ]

**चम्पकलता** — अज्ज, अणज्जोसि तुमं, जं अपज्जालोइअ मोहं

---

अमुना प्रत्यादायारोपेण क्षुब्धः मधुमङ्गलः प्राह **विपरीतेति** — स्वयं यूयं करापेक्षया अधमर्णास्तद्विपरीतं स्वस्योत्तमर्णत्वं विभाव्य अस्मान् अधमर्णान् वदसीति विपरीतवादिनि हे विशाखे मुनिव्रतिनी भव मौनं भज; मा वृथा जल्प । स्वोक्तमेवाक्षिपन् पुनराह **अथवेति** — अस्मिन् *मिथ्यावादप्रागल्भ्ये युष्माकं गोपिकानां दूषणं* अल्पमपि नास्ति, यतः प्रियवयस्यस्य मृदुप्रकृतेः कृष्णस्य कारुणिकता दयाभाव एवात्र युष्माकं धृष्टत्वेऽनर्थकारिणी विपरीतफलप्रदा संवृत्ता जाता यथा कारुणिकतया दक्षिणतया युष्मच्छन्दानुवर्तिन्या वृत्त्या अदक्षिणानां दाक्षिण्यशून्यानां त्वादृशीनां तुच्छानां सर्वथाऽयोग्यानां वृन्दावने प्रवेशः प्रसादरूपेणानुमतः । अतः अवधेहि - अयं प्रलापः अयुक्त अनुचित एव ।

मधुमङ्गलमाक्षिपन्ती चम्पकलता प्राह **आर्येति** — आर्येति औपचारिकं

---

उजाड़ कर रहे हैं। इस लिये इनसे स्पष्ट कह दो। (पाठभेद—यह अनर्थ मैं आखिर किससे कहूँ ?) ये यहां से चले जायँ या कर दे दें।

**मधुमङ्गल** — (ईर्ष्यायुक्त रोष के साथ) उल्टा बोलने वाली ! चुप हो जाओ। ठीक है ठीक, तुम लोगों का तनिक भी दोष नहीं है। हमारे प्रिय मित्र की कृपा ही यहां अनर्थकारिणी हो गई, जिस सौजन्य के कारण तुम जैसी उच्छृङ्खल औरतों का वृन्दावन में प्रवेश स्वीकृत कर लिया गया। अब यह प्रलाप अनुचित ही है।

**चम्पकलता**—महाशय ! तुम बड़े अभद्र हो । क्योंकि बिना सोचे विचारे बहुत

---

decorating one another with flowers and sprouts have been devastating our Vṛndāvana garden for a long time. So tell them clearly that either they should desist from doing so (>or whom should I complain), or pay the tax.

MADHUMAṄGALA : *( angrily )* you speak pervertedly, shut up. Or it is none of your fault. It is the kindness of our beloved friend, Kṛṣṇa who, out of courtesy, favoured the entry of such discourteous persons like you into Vṛndāvana, that has turned out to be disastrous in this case. *It is, therefore, no use lamenting it now.*

CAMPAKALATĀ : Sir ( *ārya* – ironically ) I you are a mean

जप्पेसि[1]। [ आर्य ! अनार्योऽसि त्वम्। यदपर्यालोच्य मोघ जल्पसि। ]

ललिता — ( संस्कृतेन )

शृणोति नायं शतशोऽपि घुष्टं न संस्मरत्यात्मदृशापि दृष्टम्।
श्रुतिस्मृतिभ्यां निजलोचनाभ्यां हीनं ततस्त्वं सखि माक्षिपामुम्॥ ७५॥

विशाखा — सहि णंदिमुहि, अवि किं सो किर पियसहीए महाहिसेअ

---

सम्बोधनम्। वस्तुतस्तु त्वमनार्य अशिष्ट एवासि यत अपर्यालोच्य तथ्यातथ्यविवेचन विना मोघ निष्फल वृथा जल्पसीत्यर्थ।

मधुमङ्गलस्य मौढ्यं सर्वथा अपरिहार्यम्। अय वज्रमूर्ख आक्षेपानर्ह इति उद्घोषयति ललिता शृणोतीति — अय जडो मधुमङ्गल शतशो नैकधा घुष्टमुच्चैरुक्त न शृणोति कर्ण कुरुते, न वा आत्मनो दृशा स्वचक्षुषा दृष्ट सस्मरति। एव श्रुतिस्मृतिभ्यां निजलोचनाभ्यां हीन असौ तत हे सखि! महामूढममु मा आक्षिप व्यर्थत्वादिति। अत्र श्रुतिस्मृतिपदयो श्लेष। अत्र पूर्वार्ध पादान्त्यानुप्रास। पद्यमिद प्रथमचरणत्रय उपेन्द्रवज्रया घटितम् चरमञ्च इन्द्रवज्रया — एवमुपेन्द्रेन्द्रवज्रयोर्मेलनादुपजातिवृत्तघटितम्। प्रसादो गुण, रीतिश्च वैदर्भी॥७५॥

राधाया उत्कर्षं प्रतिष्ठापयन्ती मधुमङ्गलस्योक्तिं खण्डयन्ती विशाखा पुनराह

---

बकवास करते हो।

ललिता — ( संस्कृत के माध्यम से ) यह मधुमङ्गल सैकड़ों बार ज़ोर से चिल्लाने पर भी नहीं सुनता है, अपनी आँखों से देख लेने पर भी न स्मरण करता है। इस लिये श्रुति स्मृति और अपने लोचनों स हीन इसकी भर्त्सना मत करो॥ ७५॥

विशाखा — सखि, नान्दीमुखि ! प्रिय सखी राधा के महाभिषेक का वह महोत्सव

---

fellow, for you are prating in vain without properly thinking

LALITĀ ( *In Sanskrit* )

75 Friend ! he does not listen though loudly spoken to hundreds of times nor does he remember what has been witnessed by his own eyes Thus he is deprived of hearing ( *Sruti* = Veda ) as well as memory ( *Smrti* = traditional law ) and his own eyes Do not therefore insult the poor fellow

VISĀKHĀ Friend Nāndimukhi ! do you remember the grand

---

1 जम्पसि — इति पाठान्तरम्।

महूसवो तुए सुमरीअदि ? [ सखि नान्दीमुखि ! अपि किं स किल प्रियसख्या महाभिषेकमहोत्सवस्त्वया स्मर्यते ? ]

**नान्दीमुखी** — विसाहे, को क्खु सो पराणी भुवणे होदि जेण सो महूसवो वि विसुमरिदुं पारीअदि । [ विशाखे ! कः खलु स प्राणी भुवने भवेत् येन स महोत्सवोऽपि विस्मर्तुं पार्यते ! ]

**चित्रा** — णंदिमुहि, अच्छिहिं पच्चक्खीकिदो वि सो महूसवो लोउत्तरदाये कण्णं मे उत्तरलेदि ता सुणावीअदु । [ नान्दीमुखि ! अक्षिभ्यां प्रत्यक्षीकृतोऽपि स महोत्सवो लोकोत्तरतया कर्णं मे उत्तरलयति तत् श्रावयतु । ]

**नान्दीमुखी** — चित्ते ! सुणाहि, इमाए वुंदाए गदुअ भअवदी विणत्ता[1]

---

**सखि इति** — नान्दीमुखी गरिमशालिनीति कृत्वा तां सम्बोधयति । स विलक्षणः प्रियसख्या राधाया वृन्दावनराज्ये दिव्यैर्जनैः कृतः महाभिषेकमहोत्सवः किं नाम स्मर्यते इति ।

नान्दीमुखी विशाखां प्रति सम्बोधयति कः खलु स प्राणी सचेतनः भुवि स्यात् येन तादृशोऽलौकिको महोत्सवः अपि विस्मर्तुं पार्येत — न कोऽपीत्यर्थः । तस्य महोत्सवस्य भव्यत्वं स्मरन्ती चित्रा नान्दीमुखीं तद्वर्णनाय प्रार्थयते **नान्दीमुखीति** — अक्षिभ्यां प्रत्यक्षीकृतः पुरा स्वयं दृष्टोऽपि स महोत्सवः लोकोत्तरतया अद्भुतत्वात् तद्विस्तरं श्रोतुं कर्णम्मे उत्तरलयति पर्युत्सुकीकरोति । कर्णयोः द्वित्वेऽपि जातावेकवचनप्रयोगो वामनसम्मतः । तत् श्रावयतु इति ।

चित्रां सम्बोध्य सर्वान् चमत्कर्तुं नान्दीमुखी पूर्ववृत्तं वर्णयति **शृणु इति** —

---

क्या तुम कभी स्मरण करती हो ?

**नान्दीमुखी** — विशाखे ! संसार में वह कौन जीव है, जो उस महोत्सव को भी भुला सकता है ?

**चित्रा** — नान्दीमुखि ! आँखों से देखा हुआ भी वह महोत्सव लोकोत्तर होने के नाते मेरे कान में लहर पैदा कर रहा है, अतः उसे सुनाओ।

**नान्दीमुखी** — चित्रे ! सुनो, इस वृन्दा ने जाकर भगवती पौर्णमासी को विज्ञापित

---

festival of the great coronation of our beloved friend, Rādhā?

NĀNDĪMUKHĪ : Viśākhā ! who could be that person in the world *who could afford to forget even that grand festival ?*

CITRĀ : Nāndīmukhi ! the extraordinariness of that great festival, though seen by me with my own eyes, makes my ears crave for listening to it. So please narrate it.

NĀNDĪMUKHĪ : Citrā ! listen. This Vṛndā went to revered

---

1 विण्णा - इति पाठभेदः ।

हंत जोएसरि ! वुंदावणरज्जे अहिसिंचिज्जउ राही, जं आगासे असरीरिणी वाणी एव्वं पअडं अम्हाणं पुरदो आदिट्ठवदि त्ति । [ चित्रे ! शृणु, अनया वृन्दया गत्वा भगवती विज्ञप्ता, हन्त, योगेश्वरि ! वृन्दावनराज्येऽभिषिच्यतां राधा, यदाकाशे अशरीरिणी वाण्येवं प्रकटमस्माकं पुरतः आदिष्टवतीति । ]

वृन्दा — ( स्वगतम् ) मुकुन्दस्य निदेशादाकाशवागपदेशेनाहमार्यामुदयोजयम् ।

नान्दीमुखी — तदो महातापसीए भअवदीए आहूदाओ पंच देईओ समाअदाओ । [ ततो महातापस्या भगवत्या आहूता पञ्च देव्यः समागताः । ]

---

अनया वृन्दया गत्वा भगवती पौर्णमासी विज्ञप्ता प्रोक्ता विशप्ता इति पाठे शपथपूर्वकं कथिता 'हे योगेश्वरि ! वृन्दावनस्य राज्ये राधा अभिषिच्यतामिति', यतः आकाशे अशरीरिणी दिव्या वाणी एवं राधाभिषेकाय प्रकटं स्फुटमस्माकं पुरतः आदिष्टवती ।

तच्छृण्वती स्वकृतापदेशं स्मरन्ती वृन्दा स्वगतमाह – तत्र नासीत् काप्याकाशवाणी, वस्तुतस्तु मुकुन्दस्यायमभवदादेशः, तं मुकुन्दनिदेशमाहोतुं तत्र आकाशवाणीमिषेण मया भगवती प्रणोदिताऽऽसीदिति ।

नान्दीमुखी आह तत इति — एवं भगवती प्रणोदिता सती, तया पञ्च देव्योऽभिषेकाय आमन्त्रिताः । ताश्च समायाताः ।

अत्र "आहूता पञ्चदेव्य" इति स्रग्धराखण्डः वृत्तानुगन्धी ।

---

किया कि योगेश्वरि ! वृन्दावन के राज्य पर राधा का अभिषेक करें, क्यों कि आकाश से दिव्य वाणी ने स्पष्ट रूप से हम लोगों के सम्मुख ऐसा आदेश दिया है ।

वृन्दा — (मन ही मन) मुकुन्द के आदेश से आकाश वाणी के नाम का उल्लेख करते हुए मैंने भगवती पौर्णमासी को उद्युक्त किया ( = अभिषेक के काम में लगाया ) था ।

नान्दीमुखी— तो महातपस्विनी भगवती के द्वारा बुलाई गई पाँचों देवियाँ आ गईं ।

---

Paurnamāsī and requested her, "Great Yoginī, Rādhā be coronated as the Queen of Vṛndāvana, because the incorporeal voice from the void clearly so ordered in our presence"

VṚNDĀ : (*aside*) It was under the instructions of Kṛṣṇa that I urged the revered lady on the plea of the incorporeal voice to execute this work.

NĀNDĪMUKHĪ : Then five goddesses invited by the great ascetic, the Revered Paurṇamāsī, arrived.

अर्जुनः — काओ क्खु ताओ । [काः खलु ताः ?]

वृन्दा — देवी प्रसिद्धा खलु देवकीसुता
या कंसमाक्षिप्य जगाम केवलम् ।
भानोः कलत्रे तनया च पञ्चमी
गङ्गा तु या मानसपूर्विका स्मृता ॥७६॥

चित्रा — तदो तदो । [ततस्ततः।]

नान्दीमुखी — तदो कणिट्ठाए मत्तंडमहीसीए भणिदं – भअवदि, अणदिक्कमणिज्जं तुम्ह सासनं णिचिदं क्खु अम्हेहिं सिरे गहिदं, किंतु कहिं महिट्ठा

---

जिज्ञासुरर्जुनः पृच्छति काः खलु ताः पञ्च देव्योऽभूवन् इति । तमुत्तरं दित्सुः वृन्दा आह देवीति — भुवि देवी योगमायेति प्रसिद्धा देवक्याः पुत्री या एकानंशाख्या कंसम् आक्षिप्य तद्धस्तात्परिभ्रश्यमाना केवलमाकाशं गता – सा खल्वेका; भानोः सूर्यस्य कलत्रे पत्नीद्वयं संज्ञा च छाया चेति द्वे, तस्यैव सूर्यस्य तनया यमुना, परञ्च पञ्चमी गङ्गा या मानसेतिपदेन पूर्वं संयोज्या मानसगङ्गेति । अत्र इन्द्रवंशा वृत्तम् ॥७६॥

पुनर्नान्दीमुखी प्राह तत इति — एतासां पञ्चदेवीनामागमनानन्तरं कनिष्ठया द्वितीयया मार्तण्डमहिष्या सूर्यपत्न्या छायाख्यया भणितं 'भगवति ! युष्मच्छासनं भवदीया आज्ञा अनतिक्रमणीयं नोल्लङ्घनीयमिति कृत्वा शीर्षे गृहीतं स्वीकृतं, किन्तु (तत्राखि

---

अर्जुन — ये कौन-कौन थीं ?

वृन्दा — भूमण्डल में विख्यात देवी देवकी-सुता (एकानंशा नाम से प्रसिद्ध) जो कंस के हाथ से छटक कर आकाश में चली गई थीं, सूर्य की संज्ञा और छाया ये दोनों पत्नियां तथा पुत्री (यमुना), एवं पाँचवीं मानसगङ्गा के नाम से जो जानी जाती हैं ॥ ७६ ॥

चित्रा — आगे तब क्या हुआ ?

नान्दीमुखी — इसके बाद सूर्य की छोटी पत्नी छाया ने कहा — भगवति ! अनुल्लङ्घनीय आपका आदेश शिरोधार्य तो अवश्य कर लिया, किन्तु कहाँ तो महा

---

ARJUNA : *Who were they ?*

VṚNDĀ : 76. The well-known goddess, the daughter of Devakī who flew to the sky slipping from the hands of Kaṁsa, the two wives of the god Sun — Sañjñā and Chāyā, and his daughter Yamunā, and Mānasa-Gaṅgā as the fifth.

CITRĀ : Then !

NĀNDĪMUKHĪ : Then Chāyā, the junior wife of the Sun said, "Revered lady ! inviolable is your com- Is

एसा वच्छा राही, कहिं वा सोलहकोहमेत्तं वित्थिण्णं एदं वुंदावणरज्जं ति ण[2] सुट्ठु पसीदइ मे हिअअं। तदो भअवदीए विलोइदमुही देई एक्काणंसा ससिदुं पउत्ता। [ततो कनिष्ठया मार्त्तण्डमहिष्या छायया भणितम् – भगवति! अनतिक्रमणीय युष्मच्छासनम् निश्चित खल्वस्माभि शीर्षे गृहीत किन्तु क्व महिष्ठा एषा वत्सा राधा कुत्र वा षोडशक्रोशमात्रविस्तीर्णमिद वृन्दावनराज्यमिति, न सुष्ठु प्रसीदति मे हृदयम्, ततो भगवत्या विलोकितमुखी एकानशा शसितु प्रवृत्ता।]

(इति सस्कृतेन) सखि, सवर्णे[1] समाकर्णय।

---

काचन विचिकित्सा) एषा वत्सा राधा महिष्ठा महागौरवशालिनी क्व, क्व च तस्याः कृते केवल षोडशक्रोशविस्तीर्ण वृन्दावनस्य लघीयो राज्यम् इति सुष्ठु प्रचुरतर न प्रसीदति मोदते चेत। नकारलोपे पाठे – प्रकर्षेण सीदति खिद्यते मे हृदयम्।

अत्र सूर्यस्य महिषीद्वयमेव पुराणेषु प्रसिद्धम्, अत्रापि चोक्तम्, तत्रातिशयार्थिन इष्ठन्प्रत्ययस्य प्रयोगश्चिन्त्य — कनीयस्या महिष्येति साधीयान् भवेत्प्रयोग। एवमेव पाठान्तरे प्रपूर्वकपद्लृधातो हर्षार्थे रूढत्वे सत्यपि खिद्यत्यथ प्रसिद्धिविरुद्ध कविभिरनादृत प्रयोगोऽप्रयुक्तत्व नाम दोषमुपस्थापयति। न सुष्ठु प्रसीदति इति पाठेऽर्थ सुलभ। एवं शङ्कमाना बोधयितु छाया, भगवती एकानशा प्रेक्षितवती, एव सञ्ज्ञया प्रणोदिता एकानशा तां छायां समाधत्ते **सखि इति** — सवर्णे स्वसमाने सखि! छाया सवर्णेति छायाया नामान्तरम्। समाकर्णय कथ वृन्दावनस्य राधाया अनुरूपता **आम्नायेति** — हे

---

गौरवशालिनी वत्सा राधा और कहाँ केवल सोलह कोश के विस्तार वाला यह वृन्दावन राज्य? यही सोचकर मेरा हृदय पूर्णतया प्रसन्न नहीं हो रहा है। इसके पश्चात् भगवती द्वारा अपने मुँह की ओर देखी गई एकानशा बोलने लगी। (संस्कृत के माध्यम से) सखि, समानरूपे[1] (> सवर्णा = सूर्यप्रिय छाया) अच्छी तरह सुन लो।

---

certainly borne by us on our head (= obeyed in all humility), but what comparison is there between dear Rādhā, the greatest of women, and the kingdom of Vṛndāvana *the extent of which is only sixteen Krośas* (= 32 miles) *My heart is not, on this account,* very much pleased" Then having been looked at by her holiness Paurṇamāsī, Ekānamśā started extolling Vṛndāvana thus "Friend Savarṇā! listen!"

---

[1] सन्तुष्ट – क्वचित् पाठभेद।

आम्नायाध्वरमन्त्रतीर्थतपसां स्वर्गाखिलस्वर्गिणां
सिद्धीनां महतां द्वयोरपि तयोश्चिच्छक्तिवैकुण्ठयोः ।
वीर्यं यत्प्रथते ततोऽपि गहनं श्रीमाथुरे मण्डले
दीव्यत्यत्र ततोऽपि तुन्दिलतरं वृन्दावने सुन्दरि ! ॥७७॥

सुन्दरि ! आम्नायानां वेदशास्त्राणां यत्कर्त्तव्याकर्तव्यद्योतनरूपं वीर्यं, अध्वराणां यज्ञादीनां यदलौकिकफलप्रापकत्वरूपं वीर्यं, मन्त्राणाम् असाध्यसाधकत्वरूपं यद्वीर्यं, तीर्थानां शुचिस्थानानामुपाध्यायानां वा पावकत्वरूपं दिग्दर्शकत्वरूपं वा यद् वीर्यं, तपसां यत् पुण्यार्जनोपायतारूपं वीर्यं, स्वर्गादीनां वा यत्सुखप्राप्तिकरणत्वरूपं वीर्यं, तत्र वसतामखिलस्वर्गिणां यद् दुःखासम्भिन्नं सुखसत्तादिमत्त्वं वीर्यं, सिद्धीनामणिमादीनामसाधारणशक्तिप्रदायित्वरूपं यद् वीर्यं, महतां योगिनां यच्चित्तवृत्तिनिरोधजन्यसमाधिसुखघटकत्वं वीर्यं, तयोः विलक्षणयोः द्वयोः चिच्छक्तेः अविद्याऽस्पृष्टैकान्तिकानन्दप्रवाहसत्त्वमयत्वं तथा च वैकुण्ठस्याकुण्ठत्वं नित्यत्वं कल्याणगुणवत्त्वादि रूपं यद् वीर्यं प्रथते लोके ख्याप्यते तस्मात् समग्रवीर्यस्तोमात् गहनं गभीरतरशक्तिसम्भानं वीर्यं माहात्म्यं श्रीसम्पन्ने माथुरे मथुरापरिसरवर्त्तिनि मण्डले प्रदेशे वर्त्तते, ततः माथुरमण्डलापेक्षयाऽपि तुन्दिलतरं सविशेषं पुष्टं महामहिमशालित्वं अत्र वृन्दावने दीव्यति प्रकाशते जृम्भते — इत्यवेहि । अतः यद्यपि आयामे वृन्दावनस्य लघुत्वं भायात् किन्तु महिम्नि सर्वतोऽतिरिच्यते इति सर्वथा महिष्ठाया राधायाः कृते वृन्दावनराज्यं समीचीनमेव ।

अत्र उत्तरोत्तरोत्कर्षख्यापनात् सारालङ्कारः, वृन्दावनस्य याथातथ्येन भव्यत्वप्रतिपादनादुदात्तालङ्कारश्च । सर्वोपमानापेक्षयाधिक्यवर्णनाद् व्यतिरेकालङ्कारश्च । माधुर्यं गुणः । पाञ्चाली च रीतिः । वृत्तञ्च शार्दूलविक्रीडितम् ॥७७॥

---

सुन्दरि ! वेद-शास्त्र, यज्ञ, मन्त्र, तीर्थ, तप, स्वर्ग, और स्वर्ग के समस्त निवासी की सिद्धियाँ, सिद्धिसम्पन्न महात्मा, चित् शक्ति और वैकुण्ठ इन दोनों की भी जो पृथक्-पृथक् शक्ति सुविख्यात है, उससे भी गम्भीरतर महिमा की सम्पदा मथुरा मण्डल में जगमगा रही है, और मथुरा से भी कहीं अत्यधिक महिमा इस वृन्दावन में दीप्यमान है ॥७७॥

---

77. In the province of Mathurā shines a power more intense than the combined power of the Vedas, sacrifices, sacred incantations, holy places and penances; that of heaven and of all the dwellers of Heaven; that of the eight great superhuman faculties and also that of both the God's energy of knowledge and Vaikuṇṭha, the abode of Śrī Nārāyaṇa. But, fair lady ! a power vaster and much more intense than that of the Mathurā shines in Vṛndāvana.

चित्रा — तदो तदो। [ततस्ततः।]

नान्दीमुखी — तदो हरिसुप्फुल्ले सअलजणे णिअदंत-दिव्वकुसुम-वरिसं गअणं पेक्खिअ भाणुणदिणीए भणिदं - भअवदि, इदो आअन्तु पज्जुस्सुआ वि तुम्ह अणामंतणेण सक्किदहिअआ दिव्वमजुसिआए अणुगदा पिअसही एसा सरस्सई अंबरे विलंबइ। ता आआरीअदु त्ति विण्णत्ताए भअवदीए सादरं आआरिदा विरिंचिपुत्ती तत्थ प्पविसिअ दिव्वं मंजुसिअं उग्घाडेंदी भणिदुं पउत्ता। [ततो हर्षोत्फुल्ले सकलजने निपतद्दिव्यकुसुमवर्षं गगनं प्रेक्ष्य भानुनन्दिन्या भणितम् — भगवति! इत आगन्तुं पर्युत्सुकापि युष्मदनामन्त्रणेन शङ्कितहृदया दिव्यमञ्जूषिकयाऽनुगता प्रियसख्येषा सरस्वत्यम्बरे विलम्बते, तदाकार्यतामिति विज्ञापितया भगवत्या सादरमाकारिता विरिञ्चिपुत्री तत्र प्रविश्य दिव्यां मञ्जूषिकामुद्घाटयन्ती भणितुं प्रवृत्ता।] (इत्यर्धोक्ते)

---

नान्दीमुखी ततो हर्षेति — सकले जने हर्षेण प्रफुल्ले उपस्थिते सति निपतन् दिव्यानां कुसुमानां वर्षं यस्मात्तादृशं गगनं प्रेक्ष्य भानुनन्दिन्या यमुनया भणितं, भगवति! इत (सप्तम्यन्तस्तसि) इह आगन्तुं पर्युत्सुका सत्यपि युष्मदनामन्त्रणेन "अनाहूतो न गच्छेत्" इति नियमात् शङ्कितहृदया गन्तव्यं न वेति सन्दिहाना, दिव्यया मञ्जूषिकया पेटिकया अनुगता सम्पन्ना प्रियसखी एषा सरस्वती अम्बरे आकाशे विलम्बते किङ्कर्त्तव्यतामूढा सती विरमति, तत् आकार्यतां सप्रश्रयं समाहूयतां साऽस्य स्मिन्नुत्सवे इति विज्ञापितया भगवत्या सादरं समाहृता विरिञ्चेः ब्रह्मदेवस्य पुत्री सरस्वती तत्रोत्सवमण्डपं प्रविश्य दिव्यां मञ्जूषिकाम् उपायनपेटिकामुद्घाटयन्ती भणितुं प्रवृत्ता सन्दिशति स्म। अत्र "उद्घाटयन्ती भणितुं प्रवृत्ता"- इति गद्यांशं इन्द्रवज्राचरणघटितो वृत्तगन्धी।

---

चित्रा — आगे क्या हुआ?

नान्दीमुखी— जब सभी लोग अत्यन्त हर्षित हो रहे थे, उसी समय दिव्य पुष्पों की वर्षा करते हुए आकाश की ओर देख कर सूर्यपुत्री ने कहा - भगवति! यहां आने के लिए अत्यन्त उत्सुक होने पर भी आपके द्वारा न बुलाने के कारण सकोचवश यह हमारी प्रियसखी सरस्वती दिव्य मञ्जूषा लिये आकाश में ही रुकी हुई है। अतः उसे भी बुला लें। इस तरह

---

CITRĀ Then!

NĀNDIMUKHI Thereafter, when all the people assembled there were exultant with joy, R Yamunā, the daughter of the Sun, seeing the sky showering heavenly flowers said, "Your holiness! in the absence of invitation from you my dear friend, Sarasvatī, with a celestial casket

वृन्दा — (निर्भरोत्सुक्येन नान्दीमुखीवाचमाच्छिद्य, सदर्पम्)

पार्श्वीं पद्मभुवः स्रजं प्रणयिनी सौवर्णपट्टं शची
रत्नालङ्करणं कुबेरगृहिणी छत्रं प्रचेतःप्रिया ।
द्वन्द्वं चामरयोः प्रभञ्जनवधूः स्वाहा दूकूलद्वयं
धूमोर्णा मणिदर्पणं सरभसं मत्पाणिना प्राहिणोत् ॥७८॥

---

नान्दीमुख्या वर्णनक्रमं श्रुत्वा वृन्दा निर्भरेणातिशयेन औत्सुक्येन परिप्लुता मध्य एव आच्छिद्य स्वयं सदर्पमग्रे कथनीयं वर्णयति पार्श्वीमिति — तस्या पेटिकायां किं किमुपायनं यया यया प्रहितमित्याह — पद्मभुवः ब्रह्मदेवस्य प्रणयिनी सावित्री राधायाः कृते पार्श्वीं दिव्यकमलग्रथितां स्रजं मालां, शची देवराजस्येन्द्रस्य पत्नी सौवर्णं हेमघटितं पट्टं दुकूलं सिंहासनं वा, कुबेरगृहिणी ऋद्धिः रत्नालङ्करणं मणिखचितभूषणं, प्रचेतःप्रिया वरुणस्य पत्नी असिक्नी छत्रं, प्रभञ्जनवधूः वायोः पत्नी अञ्जना चामरयोः द्वयं, स्वाहा अग्नेः पत्नी दुकूलद्वयम् अधोवस्त्रमुपरितनञ्च = शाटीचण्डातकं, धूमोर्णा यमराजस्य महिषी मणिदर्पणं मुकुरं मणिमयं मुकुरं सरभसं विलम्बो मा भूदिति सत्वरं मत्पाणिना मद्द्वारा उपहाररूपेण प्राहिणोत् प्रेषितवती । पद्येऽस्मिन् समुच्चयार्थकस्य चकारादेरभावात् प्राहिणोदित्यस्य प्रत्येकं कर्तृपदेन समानान्वयादेरनन्वयस्य साफल्यम् । अत्र दानद्रव्यवर्णने राधायां सर्वदेवीनां स्नेहातिशयं महाभिषेकानुमतत्वं राधाया गौरवम् व्यनक्ति । एतादृशेषु महोत्सवेषु सर्वासां समुचितोपायनसमर्पणं समुदाचारः; अतः प्रकृतिरेव समीचीना प्रवृत्तिं दिशति । वैदर्भी रीतिः प्रसादगुणघटिता । वृत्तम् शार्दूलविक्रीडितम् ॥७८॥

---

चित्रा — तदो तदो। [ततस्तत।]

वृन्दा —ततश्च —

स्वर्वाद्यध्वनिडम्बरे श्रुतिहरे गम्भीरयत्यम्बरं
गायत्यम्बुदभाजि तुम्बुरुमुखे गन्धर्ववृन्दे मुदा।
नृत्यत्यप्सरसां गणे च गगने राधाभिषेकोत्सवं
कर्त्तुं ताः सुरसुभ्रुवः सरभसं भव्यास्तमारेभिरे ॥७९॥

वृन्दा पुनराह स्वर्वाद्येति — श्रुतिं श्रवणं शब्दान्तरग्रहणं हरति तादृशे तारस्वरेण वाद्यमाने स्वर्वाद्यानां दिव्यानां पटहानकदुन्दुभीनां ध्वने डम्बरे स्तोमे अम्बरं गगनं गम्भीरयति सति (यस्य च भावेन भावलक्षणमिति सति सप्तमी), अपि च तुम्बुरुर्दिव्यगायकः मुखे प्रधानत्वेन वर्त्तमानो येषु तेषां गन्धर्वानां वृन्दे मुदा हर्षातिरेकात् अम्बुदानां मेघपटलीनामन्तवर्त्तिनि भूत्वा गायति सति, गगने व्योम्नि अप्सरसां गणे नृत्यति सति तास्तत्रोपस्थिता सुरसुभ्रुवः पञ्च देव्यः भव्या राधाया अभिषेकोत्सवं कर्त्तुम् आरेभिरे प्राक्रमन्त।

अत्र यद्यप्युत्सवस्यास्य वृन्दया प्रत्यक्षदृष्टत्वं, तथापि अपरोक्षार्थऽपि पूर्ववृत्तव्यावर्णने "आरेभिरे" इत्यत्र लिट् प्रयोगः साधुरेव। वर्ण्यस्योदात्तत्वानुरूप माधुर्यगुणसवलित पाञ्चालीरीत्यनुबन्धनं समीचीनञ्च वृत्तं शार्दूलविक्रीडितम् ॥७९॥

---

की पत्नी (असिक्नी) ने छत्र, वायु की पत्नी (अञ्जना) ने दो चामर, स्वाहा (अग्नि प्रिया) ने दो दुकूल तथा यमराज की पत्नी धूमोर्णा ने मणिदर्पण मेरे हाथों अतिशीघ्र पहुँचाने के लिये भेजे हैं ॥७८॥

चित्रा — फिर क्या हुआ?

वृन्दा — और इसके बाद —

दिव्य वाद्यों के बड़े ज़ोर के (कानों को जप्त कर देने वाले) ध्वनि समूह से आकाश गूँज उठा, तुम्बुरु प्रमुख गन्धर्व समूह बादलों के पार प्रसन्न होकर गाने लगे, आकाश में अप्सराओं का समूह नाच उठा,

---

jewellery, the wife of Varuna, this royal parasol, the wife of god Wind, this pair of chowries, Svāhā, a pair of silk garments and Dhūmornā, a mirror studded with gems"

CITRĀ Then?

VṚNDĀ 79 And then, as the tumult of heavenly musical instruments, pleasing to the ears, began to deepen the sky; as the assemblage of Gandharvas with Tumburu as their chief, hidden behind the clouds, started singing with joy, and as the troupe of *Apsarās* started dancing

( इति नान्दीमुखीमुखमवेक्ष्य, सलज्जम् )

चित्रा*— तदो तदो । [ ततस्ततः । ]

नान्दीमुखी — तदो पेख्खंतम्मि एव्व साणंदं वइंद-णंदणे भअवदीए णिदेसेण ताहिं भुअणपाअणतरंगिणीसंगिणीहिं देईहिं तुम्हेहिं सहिहिं सद्धं पूरअ पट्टोवरि णिविसिदाए राहिए दिव्वमहोसहिरसामिअपूरिदेण मणि-कुंभ-णिउरंवेण महाहिसेअं कुणंतीहिं वुंदावणरज्जस्स आहिपच्चं अप्पिदं ।

[ ततः प्रेक्षमाण एव सानन्दं व्रजेन्द्रनन्दने भगवत्या निदेशेन ताभिर्भुवनपावनतरङ्गिणी-सङ्गिनीभिर्देवीभिः युष्माभिः सखीभिः सार्द्धं पुरतः पट्टोपरिनिवेशिताया राधाया दिव्य-महौषधिरसामृतपूरितेन मणिकुम्भनिकुरम्बेन महाभिषेकं कुर्वतीभिर्वृन्दावनराज्यस्याधि-पत्यमर्पितम् । ]

---

तत इति — इदं महोत्सवमहः व्रजेन्द्रनन्दने माधवे सानन्दं प्रेक्षमाणे सति भगवत्याः पौर्णमास्या निदेशेन ताभिः, भुवनानि पावयतीति पुनाना तरङ्गिणी नदी गङ्गा तया सङ्गिनीभिः समेताभिर्देवीभिः युष्माकं सखीभिः सार्द्धं पुरतः समक्षं पट्टोपरि सिंहासने निवेशितायाः समासीनाया राधायाः दिव्यानां महौषधीनां रसः अमृतञ्च अथवा रस एवामृतं तत्पूरितेन मणिजटितानां कुम्भानां निकुरम्बेन समूहेन महाभिषेकं कुर्वतीभिः राधायै वृन्दावनस्य राज्यस्य आधिपत्यं समर्पितम् ।

---

और [ परमानन्दित हो ] बड़ी शीघ्रता के साथ ये पाँचों भव्य सुर-रमणियों ने राधा का अभिषेक महोत्सव प्रारम्भ कर दिया ॥७१॥

( नान्दीमुखी की ओर देख कर लजाती हुई, फिर क्या हुआ ? )

चित्रा* — तो फिर ?

नान्दीमुखी — आनन्द पूर्वक व्रजेन्द्रनन्दन कृष्ण देख रहे थे, और भगवती पौर्णमासी के आदेश से सम्मुखस्थ पीठ पर विराजमान राधा का दिव्य महा औष-धियों के रस रूपी अमृत से पूर्ण मणिमय कुम्भों से महाभिषेक करती

---

in the sky, those heavenly women, of beautiful eye-brows, began to perform the Coronation ceremony of Rādhā in all eclat.

CITRĀ* : ( *looking at Nāndīmukhī, bashfully* ) Then, what next ?

NĀNDĪMUKHĪ : Then as the Prince of Braja, Kṛṣṇa was joyfully witnessing, Rādhā, seated on the throne, was offered the sovereignty of the kingdom of Vṛndāvana by those five goddesses associated with the world-purifying rivers, who, along with you and their friends, had performed, as directed by Her holiness Paurṇamāsī, the Coronation Ceremony consecrating Rādhā by

---

**V. L.* — VṚNDĀ — continues instead of Citrā's query, which is omitted.

**चम्पकलता** — ( सरोमाञ्चम् ) तदो तदो । [ ततस्ततः । ]

**नान्दीमुखी** — तदो हत्थं उक्खिविअ सरस्सईए सरस्सई प्पआसिदा- 'एदं तं सोअंधिअं दामं जं सिणहेण अम्माए साइत्तीए प्पहिदं' त्ति सुणिअ देईए एकाणंसाए तं गेण्हिअ गोउलाणंदस्स कंठे णिक्खित्तं । तदो णम्म-सुम्हेर-मुहीए मिहिरदुहिदिआए वाहरिदं – अम्महे धम्मविह्मारणे कम्मठदा बंधुजणसिणेहाणं, जेहिं विअक्खणा वि अविआरिअ पअट्टंति त्ति समाअण्णिअ विंझवासिणीए भणिदं – 'जउणे, का क्खु तुए अविआरा दिट्ठा पउत्ती' त्तं सुणिअ जमुणाए भणिदं देई, अम्ह वहिणीए राहिआए सोअंधिअमाला कीस

---

**ततो हस्तमिति** — हस्तमुत्क्षिप्य उद्यम्य ( घोषणाया. प्रकारे हस्तोत्तोलनं सार्वजनिकविज्ञापनगमकम् ) सरस्वत्या सरस्वती वाणी प्रकाशिता उच्चैरुद्घुष्टा यदिदं तया हस्ते धृतं सौगन्धिकं दिव्यसौरभसमन्विताना कुसुमानां दाम माल्यं यत्स्नेहेन अम्बया सावित्र्या प्रहितमिति श्रुत्वा देव्या एकानंशया गोकुलानन्दनस्य कृष्णस्य कण्ठे निक्षिप्तम् । ततः नर्मणा आनन्दोपहासेन स्मेरमुख्या स्मितवदनया मिहिरः सूर्यस्तस्य दुहित्र्या यमुनया व्याहृतम् उक्तम् अहो इति विस्मये । बन्धुजनेषु स्नेहाना प्रेमप्रवृत्तीना धर्मस्य कर्त्तव्यस्य विस्मारणे कर्मण्यता क्रियाशालिता ( कियती ) यत् यै स्नेहैः विचक्षणा पटवोऽपि अविचार्य किं कुत्र कथं कर्त्तव्यम् इति विवेकमकृत्वैव कार्येषु प्रवर्त्तन्ते — इति यमुनया कृतमाक्षेपमबुद्ध्यमाना विन्ध्यवासिनी देवी पृष्टवती यत् का खलु यमुने

---

हुई, तुम सभी सहेलियों के साथ भुवन पावनी गङ्गा के सङ्ग की सभी देवियों द्वारा वृन्दावन राज्य का आधिपत्य राधा को समर्पित किया गया ।

**चम्पकलता** — ( रोमाञ्चित हो ) तब आगे क्या हुआ ?

**नान्दीमुखी** — इसके बाद हाथ से सङ्केत करके सरस्वती बोली, "इस अनुपम सुगन्धित माला को अम्बा सावित्री ने भेजा है", ऐसा सुनकर देवी एकानशा ने उसे लेकर गोकुलानन्द कृष्ण के गले में डाल दिया । इस पर विनोदमयी मधुर मुसकान करती हुई सूर्यपुत्री यमुना ने कहा, "अहो

---

sprinkling water from the jewelled vessels blended with nectarlike juice of the highly efficacious herbs.

CAMPAKALATĀ : ( *thrilled* ) And then ?

NĀNDĪMUKHĪ : Then, with her hand raised Sarasvatī spoke, "This is that fragrant garland sent by my mother Sāvitrī out of affection for Rādhā." Hearing this, goddess Ekānamśā took it and put it on the neck of Kṛṣṇa, the Joy of Gokula. Then the daughter of the Sun, R. Yamunā spoke with a sportive smile on

तुए अप्पभादुणो दिण्ण त्ति सुणिअ विहसंतीए देईए हरिकंठादो चारुहारेण सद्धं उत्तारिअ तं दिव्वसोअंधिअमालं णिक्खिवंतीए संसिदं – 'अई, गेण्ह अप्पणो मालं' त्ति । [ ततो हस्तमुत्क्षिप्य सरस्वत्या सरस्वती प्रकाशिता – इदं तत्सौगन्धिकं दाम यत्स्नेहेनाम्बया सावित्र्या प्रहितमिति श्रुत्वा देव्येकानंशया तद्गृहीत्वा गोकुलानन्दस्य कण्ठे निक्षिप्तम् । ततः नर्मसुस्मेरमुख्या मिहिरदुहित्रा व्याहृतम् — अहो ! धर्मविस्मारणे कर्मठता बन्धुजनस्नेहानां यैर्विचक्षणा अपि अविचार्य प्रवर्त्तन्ते, इति समाकर्ण्य विन्ध्यवासिन्या भणितम् — 'यमुने ! का खलु त्वया अविचारा दृष्टा प्रवृत्तिः ?' तच्छ्रुत्वा यमुनया भणितम् — देवि ! अस्मद् भगिन्याः राधिकायाः सौगन्धिका माला कस्मात्त्वयात्मभ्रात्रे दत्तेति श्रुत्वा विहसन्त्या देव्या हरिकण्ठात् चारुहारेण सार्द्धमुत्तार्य तां दिव्यसौगन्धिकमालां प्रियसखिकण्ठे निक्षिपन्त्या शंसितम् — 'अयि गृहाणात्मनो मालामिति' । ]

---

त्वया अविचारात्कृता प्रवृत्तिः दृष्टा । प्रत्युत्तरितं यमुनया यदस्मद्भगिन्या राधायाः कृते महाभिषेकावसरे सम्प्राप्ता या सुरभिणी माला कस्मात्त्वयाऽऽत्मनो भ्रात्रे माधवाय प्रदत्तेति आक्षेपहेतुं परिज्ञाय विहसन्त्या तया देव्या हरेः कण्ठात् तत्रस्थं चारुहारं परमरमणीयां रत्नमालामादाय तत्सौगन्धिकं दाम उत्तार्य प्रियसख्या राधायाः कण्ठे निक्षिपन्त्या शंसितम् "अयि गृहाण आत्मनो मालाम्" इति ।

अत्र गद्यबन्धे "प्रियसखिकण्ठे निक्षिपन्त्या" इत्यस्यांशस्य न-य-र-गात्मकं पंक्तिच्छन्दसा घटितत्वात् वृत्तगन्धितया सहकृतं गीतात्मकं माधुर्यं विलसति ॥

---

कर्त्तव्य को भुलावा देने में, विवेकी बन्धुओं के प्रति स्नेह की सहज सक्रियता कितनी आश्चर्यजनक है ! जिस स्नेह वितान के कारण बड़े कुशल लोग भी बिना विचारे ही कुछ भी करने लगते हैं ।" ऐसा सुनकर विन्ध्यवासिनी एकानंशा ने कहा – यमुने ! तुमने कौनसी अविवेक की प्रवृत्ति देखी ? इसे सुन कर यमुना ने कहा, "देवि ! हमारी बहन राधा की सुरभि माला तुमने अपने भाई को कैसे दे दी ?" यह सुनकर हँसती हुई देवी ने कृष्ण के गले से एक सुन्दर हार के सहित उस दिव्य

---

her lips" Ah ! the efficiency of love for one's own kith and kin in making one forget the needs of propriety under the influence of which even the clear-sighted wise men act thoughtlessly." On hearing this Vindhyavāsinī (Durgā) said, "Yamunā ! what indeed was *that thoughtless act that was noticed by you ?" In* reply R. Yamunā said, "Lady ! why was that fragrant garland meant for our sister Rādhā given by you to your brother, Kṛṣṇa ?" Laughing gently over these words, the goddess Durgā took out that celestial fragrant garland along with the lovely necklace from the neck of Kṛṣṇa and putting it on the neck of our

( कृष्ण स्मितं करोति )

**विशाखा** — तदो तदो । [ ततस्तत । ]

**नान्दीमुखी** — तदो कठिणहिअअसङ्गिणा अम्हाणं इमिणा हारेण अल त्ति हसतीए हसपुत्तिए कोदुएण राहिआए हारो क्खु हारिणि हरिकंठे अप्पिदो । [ तत कठिनहृदयसङ्गिनाऽस्माकमनेन हारेणालमिति हसन्त्या हसपुत्र्या कौतुकेन राधिकाया हार खलु हारिणि हरिकण्ठेऽर्पित । ]

**ललिता** — तदो एक्काणसाए कसारिवक्खत्थलादो गहिदेण कुरंगणाहिणा राहिआए तिलअ णिम्मिद । [ तत एकानशया कसारिवक्ष स्थलाद् गृहीतेन कुरङ्गनाभिना राधिकायास्तिलक निर्मितम् । ]

**तत कठिनेति** — असौ मणिमुक्ताघटितो हार कठिन हृदय यस्य तादृशेन हरिणा सङ्गत, अत सुकुमारे राधावक्षसि अनुपपन्ना अस्य स्थितिरित्यल तेनेति सोल्लुण्ठोपहासेन हसन्त्या हसपुत्र्या सरस्वत्या कौतुकेन विनोदार्थं स हार हारिणि मनोरमे हरिकण्ठे समर्पित ।

अत्र नर्म नाम नाट्याङ्गम् । "हार खलु हारिणि हरिकण्ठे" इति सानुप्रासो यथाश त ज-नकारै गुरुद्वययुतै निबद्धेन त्रिष्टुभा घटित वृत्तग-धमावहन् श्रुतिमधुर गेयलयमादधाति ।

ललिताह **तत एकेति** — एव हारव्यतिहारनर्म अनु एकानशया कसारे कृष्णस्य वक्ष स्थलात् गृहीतेन उन्मोच्यादृत्तेन कुरङ्गनाभिना कस्तूरिकाद्रवेण राधाया ( भालफलके ) तिलक अभिषेकचिह्न निर्मितम् आरचितम् ।

---

सुगन्धित माला को अपनी प्रिय सखी राधा के गले में डालते हुए कहा – लो, यह अपनी माला ले लो । ( कृष्ण मुस्कराते हैं )

**विशाखा** — आगे क्या हुआ ।

**नान्दीमुखी** — बाद में, "रहने दो, कठोर हृदय के सग रहने वाले इस हार की हमें आवश्यकता नहीं" – ऐसा कह कर हँसती हुई सरस्वती ने विनोद के साथ राधिका का हार हरि के मनोहर कण्ठ में डाल दिया ।

**ललिता** — इसके बाद एकानशा द्वारा कृष्ण के वक्ष स्थल पर लगी कस्तूरी से

---

beloved friend, Radhā said, "Well take your garland, please" ( *Kṛṣṇa smiles* )

VIŚĀKHĀ Then, then ?

NĀNDĪMUKHĪ Then gently laughing Yamunā said, "well, enough of it, we have no use of this necklace now, which is associated with a hard heart" With these words she merrily put Rādhā's garland back in the handsome neck of Kṛṣṇa

वृन्दा -- ( सानन्दम् ) ततश्च भगवत्या सोल्लासमभ्यधायि —

**साद्धं वल्लीवधूभिर्विलसत सुखिनः शाखिनो भूरि फुल्ला,**
**रङ्गं भृङ्गैर्विहङ्गाः प्रथयत पशवः प्रौढिमाविष्कुरुध्वम् ।**
**आलीभिर्वाहिनीनां पतिभिरुपचिता श्रीमती राधिकेयं**
**वृन्दामुद्यानपालीं शुचिमिह सचिवीकृत्य वः शास्ति राज्यम् ॥८०॥**

---

तद्वेलायामानन्दोद्वेल्लितया भगवत्या पौर्णमास्या महता समुल्लासेन अभ्यधायि (*कर्मणि लुङ्*) उक्तम् **सार्धमिति** — *भगवत्या मङ्गलमाशंसितम्* — भूरि प्राचुर्येण फुल्लाः विकसन्तः अत एव सुखिनः हे शाखिनस्तरव इह वृन्दावने वल्लीरूपाभिः *वधूभिः लतासहचरीभिः सार्द्धं यूयं विलसत मोदध्वम् । हे विहङ्गाः पक्षिणः भृङ्गैः* सह रङ्गं केलिं प्रमोदं वा यूयं प्रथयत आतनुत, हे पशवः प्रौढिं गरिमाणम् आविष्कुरुध्वम् । अत्र शाखिप्रभृतयः नवे शासने प्रवृत्ते आश्वास्यन्ते । शासकीयेयं घोषणा । अत्र क्रियापदेषु मध्यमपुरुषबहुवचनान्तः प्रयोगः । तत्र हेतुमाह **आलीभिरिति** — वाहिनीनां पतिभिः सेनाध्यक्षपदमारोपिताभिः आलीभिः सखीभिः उपचिता समन्विता श्रीमती दयादाक्षिण्यादिगुणगणशोभिता इयं राधिका उद्यानपालीं शुचिं सदाचारसम्पन्नां वृन्दां सचिवीकृत्य मन्त्रिपदमारोप्य इह वृन्दावने वः राज्यं शास्ति इति ॥

प्रसादो गुणः, वैदर्भी च रीतिः । शासकीयघोषणानुरूपं प्रौढमत्र वृत्तम् स्रग्धरा — "म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्—" इति लक्षणात् ॥८०॥

---

राधिका के भाल पर तिलक कर दिया गया।

वृन्दा — (सानन्द) और बाद में भगवती ने उल्लास के साथ कहा—यथेष्ट फूले हुए सुखी वृक्ष लता रूपी वधुओं के साथ विलास करें। पक्षिगण भ्रमरों के साथ खूब आमोद-प्रमोद करें। पशुवृन्द शान से घूमें। सेनाध्यक्षों के रूप में स्थित सहेलियों से समवेत समस्त ऐश्वर्यशालिनी यह राधिका अपनी उद्यानरक्षिका, सदाचारवती वृन्दा को मन्त्रिपद सौंप कर अब आप सब के राज्य का शासन कर रही हैं ॥ ८० ॥

---

the enemy of Kaṁsa.

VṚNDĀ : (*with joy*) Then Her holiness Paurnamāsī spoke in all cheer :

80. "Oh ! happy trees, blossoming profusely sport with creeper-mates; Oh birds, spread colours with the bees; Oh beasts, display your full grandeur. This graceful Rādhā, with her friends as the army generals, and with the virtuous Vṛndā, the garden-keeper upgraded as her minister will rule over your kingdom of this Vṛndāvana".

( इत्यानन्दनिष्पन्दमभिनीय )

**जग्राह कुन्दलतिकोत्कलिकाशतानि**
**पत्राङ्कुरेण सुमना विरराज चित्रा ।**
**स्मेरा बभूव ललिता नवमालिकासौ**
**पुल्लात्र चम्पकलता च विशाखिकापि ॥८१॥**

पूर्वानुभूतानन्दस्य स्मृतिविषयमारुढत्वोद्रेकान्निष्पन्दतामभिनीय वृन्दा पुनराह जग्राहेति — सर्वा सख्य कथ कुसमलता इव प्रामोदन्तेति श्लेषेण व्यावर्ण्यते — **जग्राहेति** — सर्वा सख्य कथ कुसमलता इव प्रामोदन्तेति श्लेषेण व्यावर्ण्यते — कुन्दलतिका उत्कलिकाशतानि अर्धविकसितानि कलिकानि जग्राह धारयामास । पक्षे तन्नाम्नी सखी शतानि प्रभूत उत्कलिका रोमोद्गता बभूवेति भाव । एवमेव चित्रानाम्नी लता पत्राङ्कुरेण नवकिसलयोद्गमेन सुमना पुष्पभारवती विरराज, अथवा सुमना मालतीलता चित्रा नवाङ्कुरै कुसुमैश्च नानारङ्गरञ्जिता शोभामगात् । तन्नाम्नी सखी पत्राणां भूषणेन पुष्पहारादिना अशोभत, ललिता मनोहरा असौ नवमालिका (jasamine) स्मेरा विकसिता आस — यूथिकाप्रसूनाभरणवती ललिता नाम सखी प्रमोदभरात् स्मितमुखी व्यलसत् । अपि च चम्पकपुष्पाणां लता, सा सखी च, विशाखिका प्रभूत-शाखावती लता तथा तन्नाम्नी सखी च पुल्लाऽऽस । इत्यनेन राधिकायां वृन्दावनेश्वरी-पदमारुढायां सर्वा सुप्रसादमवापुरिति भाव । विशाखिकाऽपि — इत्यत्र समुच्चयार्थमात्राव-बोधकस्य अपे अपुष्टार्थता एव । शाखाहीना विशाखिकेत्यर्थोऽपि भवितुमर्हति । श्लेपालङ्कार । गुणरीती पूर्ववत् । वसन्ततिलका वृत्तम् 'उक्ता वसन्ततिलका तभजा जगौ ग" — इति लक्षणयोगात् ॥८१॥

---

( वृन्दा आनन्दविभोर होने का अभिनय करती है )

कुन्द लता ने सैकड़ों अधखिली कलियों को धारण कर लिया [ > कुन्दलतिका नाम की सखी बार बार रोमाञ्चित हो उठी ], नूतन किसलयों से मालती नाना वर्ण से सम्पन्न हो सुशोभित होने लगी, [ > सुगन्धित द्रव्यों से चेहरे पर अङ्कित किसलय के कारण चित्रा प्रसन्न मन सुशोभित हो गई ], मनोहारिणी यह नवमालिका ( चमेली ) खिल उठी [ > नूतन माला पहने हुई ललिता आनन्द से मुस्कराने लगी, शाखाओं से लिपटी हुई चम्पकलता भी प्रफुल्लित हो गई [ < इस अवसर पर चम्पकलता नाम की सखी प्रफुल्ल थी और विशाखिका भी प्रसन्न थी ] ।

( *gesticulating rapturous immobility Vṛndā continues* )

81 The small jasmine creeper shot hundreds of buds, the variegated *Mālatī* glitterred with leaves and sprouts, this tender *Navamālikā* became fully grown, and the *Campaka* creeper, though without branches, fully blossomed

**ललिता** — णंदीमुहि, तदा दिणिंदणंदिणीए जं भणिदं तं णूणं तुए विसुमिरिदं । [ नान्दीमुखि ! तदा दिनेन्द्रनन्दिन्या यद् भणितं तन्नूनं त्वया विस्मृतम्। ]

**नान्दीमुखी** — हला, कधं विसुमरिदव्वं जं एदाए अह्माणं अंतिए एव्व मंतिदं – अज्जप्पहुदि अप्पणो कीलावणे ललिदाप्पहुदीओ अम्हप्पिअसहिओ सुहेण सच्छंदं कुसुमाइं ओचिणंदु; तं सुणिअ विंझवासिणीए भणिदं - 'जमुणे, तहवि माहवस्स आअत्ता कुसुमाणं समिद्धि त्ति' । [ सखि ! कथं विस्मर्तव्यं यदेतयास्माकमन्तिके एव मन्त्रितम् — अद्यप्रभृति आत्मनः क्रीडावने ललिताप्रभृतयः अस्मत्प्रियसख्यः सुखेन स्वच्छन्दं कुसुमान्यवचिन्वन्तु, तच्छ्रुत्वा विन्ध्यवासिन्या भणितम् — यमुने ! तथापि माधवस्यायत्ता कुसुमानां समृद्धिरिति । ]

---

कञ्चिद् पूर्ववृत्तांशं स्मारयन्ती नान्दीमुखीमाह ललिता **तदा दिनेन्द्रेति** — तस्मिन् प्रसङ्गे दिनेन्द्रस्य सूर्यस्य नन्दिन्या यमुनया यदुक्तं तन्नूनं विस्मृतं नात्र वर्णितमिति ।

अत्र वृत्तानुवर्णने प्रसक्ता किल वृन्दामसम्बोध्य नान्दीमुख्यां विस्मरणारोपे अस्थाने सत्यपि मध्यमध्ये सख्यन्तरोक्तिं प्रवेशयितुकामः कविवरः एकस्वरतापनोदायेमां भङ्गीमङ्गीचकारेत्यवधेयम् ।

एवमुक्ता नान्दीमुखी सपदि बभाण **हलेति** — कथं नाम तद् विस्मर्यते यदेतया यमुनयाऽस्मदन्तिके मत्पार्श्वे एव मन्त्रितम् यदद्यप्रभृति इदानीं स्वाधिकारे विद्यमानेऽस्मिन् क्रीडावने सर्वा अस्मत्सहचर्यः सुखेन निर्बाधं स्वच्छन्दं स्वेच्छानुरूपं पुष्पावचयं कुर्वन्तु । इमां घोषणां श्रुत्वा विन्ध्यवासिन्या देव्या कञ्चित् आक्षेपसन्निवेशं विधायोक्तम् — "तथापि स्वाधिकारगतं यद्यपीदं वनं तथापि कुसुमानां समृद्धिस्तु माधवस्य वसन्तस्य पक्षे कृष्णस्य आयत्ता अधिकार एव" इति ।

---

**ललिता** — नान्दीमुखि ! उस समय सूर्यतनया यमुना ने जो कुछ कहा था, वह तो तुम भूल ही गई हो।

**नान्दीमुखी**— सखि ! कैसे भुलाया जा सकता है, क्योंकि मेरे पास ही तो यमुना ऐसा कह रही थीं, — अब आज से ललिता आदि मेरी प्रिय सहेलियाँ

---

*( by double entendre )*

( Kundalatā got horripilated; the well-disposed Citrā shone with fragrant figures on her face and person; this Lalitā with a new garland on her neck became all smiles; and Campakalatā as well as Viśākhā became fully delighted. )

LALITĀ : Nāndīmukhī ! you have certainly forgotten what was said by the Yamunā then.

NĀNDĪMUKHĪ : Friend ! how can I forget what was spoken there by her in our very presence ! She had said, "From today our dear friends, Lalitā and others may

वृन्दा — ( राधामवेक्ष्य सौत्सुक्यम् )

देव्या दत्तविशेषका विरचितोत्तंसा शनेरम्बया
त्वष्टुर्नन्दनया निबद्धचिकुरा स्त्रीयालिभिर्मण्डिता ।
चञ्चच्चामरया सखिद्युसरिता सौर्या च संवीजिता
पुत्र्या पद्मभुवस्त्वमुच्छ्रितमणिच्छत्रा न विस्मर्यसे ॥ ८२ ॥

---

तत्र कथं सखीभिः राधा प्रसाधितेति राधासम्मुखं लोकयन्ती वृन्दा प्राह देव्येति — देव्या एकानंशया कृष्णस्य भगिन्या दत्तविशेषका रचितमृगमदमण्डना, शने अम्बया छायया विरचितोत्तंसं धारितकर्णभूषणा, त्वष्टु विश्वकर्मण नन्दना पुत्री सूर्यपत्नी सञ्ज्ञा तया निबद्धचिकुरा प्रसाधितकेशपाशा, स्त्रीयाभिरालिभिः सखीभि मण्डिता सन्निवेशितभूषणा, सख्या द्युसरिता मानसगङ्गया चञ्चच्चामरया दोलितचामरया, सौर्या सूर्यपुत्र्या यमुनया सवींजिता चालितव्यजना, पद्मभुवः पुत्र्या सरस्वत्या उच्छ्रित शिरसि उन्नमितं छत्रं यस्या सा त्वं न विस्मर्यसे । तदानीन्तनीमद्भुता सुषमां वहन्ती त्वं सदैव स्मृतिपटलेऽङ्किता विद्यसे ।

अत्र नन्दनया इति नन्दधातोर्ल्युटि सम्पद्यमाने नन्दनपदे स्त्रियां टाप् प्रत्यय चिन्त्य एव । गुणरीती पूर्ववत् । वृत्तञ्च शार्दूलविक्रीडितम् ॥८२॥

---

अपने क्रीडावन में स्वच्छन्द फूल चुनें । इसे सुन कर विन्ध्यवासिनी ने कहा, "यमुने ! फिर भी फूलों की समृद्धि तो माधव के अधीन ही है।"

वृन्दा — ( राधा को देख कर, उत्सुकता के साथ ) देवी एकानंशा द्वारा कस्तूरी से रचित मण्डन, शनि की माता छाया द्वारा पहिनाये गये कर्णफूल, विश्वकर्मा की पुत्री सञ्ज्ञा द्वारा सुसज्जित केशपाश, अपनी सहेलियों के द्वारा सुसज्जित अलङ्कार, मानस गङ्गा द्वारा डुलाये जाते हुए चामर,

---

freely and happily gather flowers in their own pleasure garden" Hearing this Vindhyavāsinī said, "dear Yamunā! even then, the exuberance of flowers depends upon Mādhava (= Spring & Kṛṣṇa).

VṚNDĀ. (*looking at Rādhā eagerly*)

82. You cannot be forgotten—you, with the saffron mark on the forehead made by the goddess Ekānamśā, with the head-ornament arranged by Chāyā, the mother of Saturn (Śani), with your hair neatly dressed and plaited by Sañjñā, the daughter of the divine architecht, Visvakarman, decorated by your friends with *chowries* waved on both the sides by your friend, the celestial River Gaṅgā and the Yamunā, and with

राधा — (सलज्जम्) वुन्दे, विरमेहि । [वृन्दे ! विरम ।]

कृष्णः — (स्वगतम्)

दृशमधिकदिदृक्षुरप्ययुञ्जं
विबुधवधूत्रपयाऽहमानतास्यः ।
हृदि वरमणिविम्बितां तदेमां
सपदि विलोक्य मुदा स्खलन्निवासम् ॥८३॥

स्वीयोत्कर्षवर्णनं निशम्य त्रपाभिभूता राधा वृन्दामस्माद्वृत्तान्तवर्णनात् विरन्तुमाह । अनेन नायिकाया उत्तमप्रकृतित्वं व्यज्यते ।

तदानीं रम्यतमां राधां लोचनाभ्यां पातुं कियदौत्सुक्यं कियद्धर्षाधिक्यं मे मनसि प्रादुरासीदिति स्वीयामवस्थां स्मरन् स्वगतमेवाह श्रीकृष्णचन्द्रः **दृशमिति** — अधिकं राधां दिदृक्षुः द्रष्टुमिच्छुः अपि अहं तस्यां दृशम् अयुञ्जम् प्रेरितवान् किन्तु तत्रोपस्थिता विबुधवधूः किं दृष्ट्वा मंस्यन्ते इति तासां सुरपत्नीनां त्रपया लज्जावशादहं आनतम् आस्यं वदनं यस्य तादृशोऽवनतमुखो भूत्वा यदा तां मम हृदि हृदयदेशे वरमणौ कौस्तुभे प्रतिबिम्बितां विलोक्य मुदा हर्षातिरेकात् सपदि सद्य एव स्खलन् चकितः सन् पतन् इव आसम् । एतादृशविलक्षणसुषमाशालित्वं राधाया आसीदिति गुणोत्कर्षख्यापनं नायिकाया उद्दीपनं आनतास्यादयः अनुभावाः एभिः नायकगतां स्थायिनी रतिर्ध्वन्यते । अत्र माधुर्यप्रसादगुणौ । मध्यमपाञ्चाली रीतिः । औपच्छन्दसकं मालभारिणीत्यपि ख्यातं वृत्तम् ॥८३॥

---

यमुना द्वारा झले जाते हुए व्यजन (=पंखा) तथा ब्रह्मा की पुत्री द्वारा ऊपर लगाये गये मणि छत्र वाली राधा, तू भूली नहीं जा सकती है ॥८२॥

राधा — (लजाती हुई) वृन्दे ! अब तो चुप हो जाओ ।

कृष्ण — (मन ही मन) मैंने राधा को अच्छी तरह देखने के लिए उत्सुक हो आँख उठायी थी, किन्तु देवपत्नियों की उपस्थिति के कारण लज्जा से नत-वदन मैं तब अपने वक्षःस्थल पर स्थित कौस्तुभ मणि पर प्रतिबिम्बित इस राधा को देखकर हर्षातिरेक से तुरन्त लड़खड़ा सा गया ॥८३॥

---

jewelled parasol held aloft by Sarasvatı, the daughter of Brahmā, the Creator.

RĀDHĀ : (*bashfully*) Vṛndā ! stop, please, stop.

KṚṢṆA : (*aside*)

82. Desirous of seeing Rādhā (then in all her grace) more and more, I had even settled my eyes upon her, but out of sheer modesty on account of the presence of the celestial ladies, I withdrew, with my face bent down. Yet, instantly seeing her image reflected in the *Kaustubha* gem on my chest I became elated and felt as though tottering in ecstasy.

**सुबलः** — (अपवार्य) अज्जुण, सा किर महाहिसेअत्थली राहिए उग्गद-पमदत्तणेण उम्मदराहित्ति जणेहिं उग्घुसिज्जइ। [ अर्जुन ! सा किल महाभिषेकस्थली राधाया उद्गमप्रमदत्वेन उन्मदराधेति जनैरुद्घुष्यते। ]

**मधुमङ्गलः** — (अपवार्य) पिअवअस्स, सव्वं सुमरंतोम्हि, णासच्चं पगब्भंति गोइआओ। [ प्रियवयस्य ! सर्वं स्मरणमस्ति। नासत्य प्रगल्भन्ते गोपिका। ]

**राधा** — सहि वुंदे, गणिअदु अट्ठवारिसिओ काणणकरो। [ सखि वृन्दे ! गण्यतामष्टवार्षिक कानकर.। ]

**वृन्दा** — (सस्मितम्) वृन्दावनेश्वरि ! वृन्दशः प्रातिस्विकीर्धवलाः

---

सुबल परैरश्राव्यतयाऽर्जुन भणति सा किलाभिषेकस्थली नैसर्गिकी अनुपस्कृता भूमि राधाया प्रमदोद्रेकात्तत्र इदानीमपि "उन्मदराधा" इति नाम्ना जनै उद्घुष्यते कथ्यते इति। स्थली अकृत्रिमा भूमि।

मधुमङ्गलोऽपि वर्ण्यस्य याथातथ्य स्मरन् स्वीकरोति यत्सर्वं वृत्तान्तममु स्मरामि। एता गोपिका नासत्य सत्यमेव प्रगल्भन्ति कथ्यन्ते। नासत्यमित्यत्र नञ्द्वयप्रयोगो विधिदार्ढ्यायैव।

एव सर्वान् चमत्कृतान् भावाभिप्लुतञ्च मुकुन्द वीक्ष्य साधिकार राधिका आदिशति **सखि वृन्दे** — गण्यताम् अष्टवार्षिक अष्टाभिवर्षै जातोऽष्टवार्षिक काननस्योपभोगनिमित्तक कर यस्तु गोपैरेतैर्देय एवास्ति। अष्टवर्षपूर्वमभूत् महाभिषेक इत्यवगम्यते।

काननकरस्यागण्यत्वं ख्यापयन्ती साचिव्य कुर्वाणा वृन्दा विज्ञापयति **वृन्दवनेति** –

---

**सुबल** — (एक ओर मुँह कर) राधा की वह महाभिषेक स्थली जहा राधा में मस्ती छा जाने के कारण लोगो द्वारा उन्मदराधा नाम से कही जाती है।

**मधुमङ्गल** — (एक ओर धीरे से) प्रिय मित्र ! सब स्मरण है, गोपिया अपनी झूठी बड़ाई नहीं कर रही हैं।

**राधा** — सखि वृन्दे ! आठ वर्ष तक के वन के कर को गिन डालो।

**वृन्दा** — (मुस्कराती हुई) वृन्दावनेश्वरि ! एक एक वृन्द (= सौ करोड़) की सख्या

---

SUBALA : (*aside*) Arjuna ! since at that time Rādhā was all in thrill the very place of that grand Coronation is proclaimed publicly by people as UNMADA RĀDHĀ (i e. a place where Rādhā was in high spirits).

MADHUMANGALA (*aside*) Dear Friend ! I am reminded of everything. These cowherd belles are not proud in vain

RĀDHĀ : Friend Vṛndā ! Calculate forest tax for eight years

VṚNDĀ. (*smiling*) Queen of Vṛndāvana ! countless are the

पालयतामसङ्ख्यानां गोसंख्यानामनन्त एव काननकरः, तत्किं गणनाप्रयासेन ?

ललिता — विसाहे, वुंदावणचक्कवट्टिणी आणवेदि गेण्ह हठेण पढमं पडुम्मण्णस्स वडुणो मंणिमडणं। [ विशाखे ! वृन्दावनचक्रवर्तिन्याज्ञापयति – गृहाण हठेन प्रथमं पटुम्मन्यस्य वटोर्मणिमण्डनम्। ]

मधुमङ्गलः — ( अपवार्य ) भो पिअवअस्स, णिच्चिदं एत्थ समाहाणं दुक्करं ता पलाअणं च्चेअ अम्हाणं सरणं। [ भो प्रियवयस्य ! निश्चितमत्र समाधानं दुष्करम्, तत्पलायनमेवास्माकं शरणम्। ]

---

वृन्दावनेश्वरीति राधायाः सम्बोधनमत्र साम्प्रतम्। वृन्दशः कोटिशः प्रातिस्विकीः प्रतिस्वमधिकृत्येति प्रत्येकगोपस्य स्वाम्ये वर्त्तमानाः वृषधेनवः, तासाम् असङ्ख्यानां गोसंख्यानां गोपानाम् अनन्तः करः, अतो गणनायाः प्रयासेन अलम् अशक्यत्वात् इति। धवला उत्तमा गौः।

अतस्तन्निष्क्रयार्थं ललिता निवेदयति **विशाखे इति** — वृन्दावनस्य चक्रवर्त्तिनी महेश्वरी विज्ञापयति यत् करस्यागण्यत्वात् प्रतीकरूपेण आत्मानं पटुं चतुरं मन्यते असौ पटुम्मन्यः तादृशस्य वटोः कौमारे वर्त्तमानस्यास्य कृष्णस्य मणिमण्डनम् शिखामणिः प्रथममाच्छिद्यताम्, तत ऊर्ध्वं पश्चाद्द्रक्ष्यामः। राधापेक्षया कृष्णस्य किञ्चित्कनीयस्त्वमवधेयम्। विचित्रं व्यतिकरं वीक्ष्य चकितो मधुमङ्गलः कृष्णं परामृशति **भो इति** — अत्र करविषये अधुना समाधानं दुष्करमतोऽस्माकं पलायनं निस्सरणमेव श्रेयः, तदेव शरणमुपाय इति।

---

में गाय - बैल हर एक के हैं, पाले हुए पशुओं की संख्या असंख्य होने के कारण जंगल का कर भी तो अनन्त ही है। इसलिये गणना का प्रयास व्यर्थ है।

ललिता — विशाखे ! वृन्दावनराज-राजेश्वरी का आदेश है – पहले अपने को अति चालाक समझने वाले इस छोकरे का जबर्दस्ती शिखामणि उतार लो।

मधुमङ्गल — ( एक ओर धीरे से ) प्रिय मित्र ! इस परिस्थिति का समाधान बड़ा कष्टसाध्य प्रतीत हो रहा है; इसलिए भाग जाना ही हम लोगों के लिये शरण है।

---

cowherds that are tending white cows in their own groups. Therefore infinite would be the forest tax. *Why exert for calculation ?*

LALITĀ : Viśākhā ! the Queen of Vṛndāvana orders, "first of all seize by force the crest-jewel of that chap who considers himself very clever."

MADHUMAṄGALA : Dear friend ! it would certainly be difficult to meet the situation. Therefore flight from here is the only protection.

कृष्णः — हंहो, गोष्ठश्व ! ललितालगुडीताडनमाशङ्क्य मा सङ्कुच, पुरस्तादेप सुदर्शनोऽस्ति ।

राधा — ( कृष्णमपाङ्गेन दरालिङ्ग्य ) सुबल, अलं विलज्जिदेण, काणणकरो सवणीअदु । [ सुबल ! अल विलज्जितेन, काननकर उपनीयताम् । ]

कृष्ण — ( सस्मितमवेक्ष्य )

एकस्य त्वं प्रभुरसि स तु द्वादशानां वनाना-
मेतच्चाल्पं, निखिलजगतीवर्तिनामेव देवः ।

तं भर्त्सयन् कृष्ण आह हंहो इति — हे गोष्ठस्य श्वन् कुक्कुर ! स्वस्थानादेव श्वा परान् प्रति बुक्कति इति जुगुप्साबोधकमिदं सम्बोधनम् । ललिताया लगुडी यष्टिका तया ताडनमाशङ्क्य ततो भीतस्सन् मा सङ्कुच मा भैषी यत पुरस्तादेतासा एषोऽहं सुदर्शनः शोभनस्वरूपवान् मोहन, श्लेषेण च एष मत्पार्श्वे सुदर्शनश्चक्र अस्ति तस्य पुरत एतासां नास्ति सामर्थ्यमिति भावः ।

राधिका कृष्णमपाङ्गेन कटाक्षेण दरालिङ्ग्य किञ्चिद्विलोक्य सुबलमाह अलमिति-माऽत्र लज्जितो भव [ निर्लज्जतया अथवा अतिलज्जया अलम् ] काननकरः उपनीयताम् दीयताम् ।

कृष्ण बलाबलं ख्यापयन् एतामिदेंयस्य करस्य अपेक्षया एताभ्यो देयस्य करस्य न्यूनाधिकारविषयत्वं बोधयति एकस्येति — हे राधे ! त्वं एकस्य वृन्दावनस्य प्रभुरसि स्वामिन्यसि । अत्र प्रभुः सत्तासामान्यपदम् न तु विशेषणम् तथात्वे प्रभ्वीति प्रयोगस्य साधीयस्त्वम् । स तु घट्टाधिकारी महामन्मथाख्य कृष्णरूपेण वर्त्तमानस्तु द्वादशाना वनानां प्रभुरस्ति । एतदपि स्तोकमेव वस्तुत. असौ च निखिलजगतीवर्त्तिनां समग्रभूमण्डलमधितिष्ठता वनानामेव देव. — सर्वान् शास्तीत्यर्थः । अतस्त्व सामन्तरूपेण अधीनस्थ-

| | |
|---|---|
| कृष्ण — | अरे, व्रज के कुक्कुर ! ललिता की छड़ी की मार की आशङ्का से डरो मत । सामने यह सुदर्शन ( १ चक्र, २ कृष्ण ) है । |
| राधा — | ( कृष्ण को कटाक्ष द्वारा जरा सा छूती हुई ) सुबल ! लज्जित ( या निर्लज्ज ) होना तो रहने दो, वन का कर शीघ्र ले आओ । |
| कृष्ण — | ( मुस्कराते हुए देखकर ) राधे ! तुम एक ही वन की स्वामिनी हो, और यह ( महामन्मथ ) बारह वनों के स्वामी हैं । यह बात भी बहुत छोटी |

| | |
|---|---|
| KRṢṆA : | Vainboaster ! donot shrink out of fear of flogging from Lalitā's club Here is this Sudarsana ( = 1. discus, 2. Kṛṣṇa ) in front of you |
| RĀDHĀ : | ( *softly touching Kṛṣṇa with side-long glance* ) Subala ! enough of your impudence, shell out the forest tax. |
| KRṢṆA : | 84. Rādhā ! you are the chief of one forest while he ( the lord of this grove—*Mahamanmatha* = Kṛṣṇa ) is the lord of twelve. And this in fact is only a little, for |

सामन्तश्रीस्त्वमिति स महामन्मथश्चक्रवर्ती
पथ्यं राधे शृणु हठममुं मा कृथास्तस्य शुल्के ॥८४॥

**विशाखा** — भो सुअल, एव्वं होदु; तहवि तस्स उज्जाणचक्कवट्टिणो णिद्देशवट्टिणा तुज्झ घट्टज्झक्खेण वुंदावण-चक्कवट्टिणीए अम्ह पिअसहीए काणणकरो कधं मोआविदव्वो ? [ भो सुबल ! एवं भवतु, तथापि तस्योद्यान-चक्रवर्तिनो निदेशवर्तिना तव घट्टाध्यक्षेण वृन्दावनचक्रवर्तिन्या अस्मत्प्रियसख्याः काननकरः कथं मोचयितव्यः ? ]

**सुबलः** — (साभ्यसूयम्) विसाहे, णिच्चिदं खट्टारूढ़ासि, जं समूढ-

---

राजत्वेन वर्तमाना श्रीः यस्याः सा असि, परन्त्वसौ चक्रवर्त्ती सम्राडेव। अतस्त्वं पथ्यं तव हितकरं शृणु यत्तस्य महामन्मथाय देये शुल्के हठं मा कृथाः झगिति देहीति परामर्शः।

अत्र युक्तिर्नाम नाट्यालङ्कारः। गुणरीति पूर्ववत्। मन्दाक्रान्ता च वृत्तम् ॥८४॥

तत्र विशाखा स्वपक्षं स्थापयन्ती सुबलमाह **एवं भवत्विति** — अस्तु व्यापकाधिकारः महामन्मथस्य यथा कृष्णः आह तथापि उद्यानचक्रवर्तिनः निदेशवर्तिना आज्ञा-धारकेण अत्र घट्टाध्यक्षेण वृन्दावनान्तर्वर्तित्वात् तच्चक्रवर्तिन्याः काननकरः कथं मोचयितव्यः परिहार्यः, स तु देय एव स्थानीयशासनानुरोधात् — सामान्यापेक्षया विशेषस्य बलीयस्त्वनियमात्।

विशाखामुपहसन् सुबलः प्रतिवदति **निश्चितमिति** — नूनं त्वं खट्वाम् आरूढा

---

ही है, वस्तुतः वह समस्त भूमण्डल के वनों के हैं। अधीनस्थ राजा सी तुम्हारी श्री है, वह महामन्मथ सम्राट् हैं। अतः हित की बात सुनो — उस सम्राट् की चुंगी के बारे में निरर्थक हठ मत करो ॥८४॥

**विशाखा** — ऐ सुबल ! जैसा कृष्ण कह रहे हैं यदि वही सच हो, तो भी उस उपवन के सम्राट् के आज्ञाधारक तुम्हारे घट्टाध्यक्ष वृन्दावन की चक्रवर्तिनी हमारी प्रिय सखी के इस वन के कर से कैसे छूट सकते हैं ?

**सुबल** — (ईर्ष्या के साथ) विशाखे ! अवश्य तुम अपनी खटिया को ही सारा संसार

---

he is the lord of all the *forests* that are lying all over the world. Thus while you are only a feudal chief, he is the monarch, *known as the* great *Lord of Love.* Rādhā ! pay heed to what is salutary ; and be not obstinate in the matter of the toll tax due to him.

**VIŚĀKHĀ** : Oh Subala ! even if it be so, how can your toll-gate chief who is under the command of (=subordinate to) that lord of groves escape from the *forest* tax due to our friend (Rādhā), the queen of this Vṛndāvana ?

**SUBALA** : *(angrily)* Viśākhā ! You are indeed silly under the sway

दुम्मदघुण्णिदा तुमं तत्तं ण जाणंती पलवेसि। [विशाखे ! निश्चित खट्वारूढासि, यत् समूढदुर्मदघूर्णिता त्वं तत्त्वमजानती प्रलपसि।]

विशाखा — (सोत्प्रासस्मितम्) किं एत्थ तत्तं ? कधेहि सुणिस्सं। [किमत्र तत्त्वम् ? कथय श्रोष्यामि।]

सुबल — किं वित्थरेण, सङ्खित्तसारं सुणेहि – जो क्खु महामन्मह- चक्कवट्टी सो जेव्व णिच्चिद पिअवअस्सरूवेण वट्टन्तो जाणीअदु, दोणं किर परमत्थदो भिण्णदा णत्थि। [किं विस्तरेण, सङ्क्षिप्तसारं शृणु, यः खलु महामन्मथचक्रवर्ती स एव निश्चितं प्रियवयस्यरूपेण वर्तमानो ज्ञायताम्, द्वयोः किल परमार्थतो भिन्नता नास्ति।]

---

स्वकीये सीमितपरिसर एव वर्त्तमाना व्यर्थगर्वभरा असि। समूढो नितराम् ऊढ धारितः यः दुर्मदः अस्थाने मदः तेन घूर्णिता व्याकुला त्वं तत्त्वमजानती किमपि जल्पसि इति भावः।

तत्र सोत्प्रासेन साधिक्षेपेण स्मितं प्रकटयन्ती विशाखा तत्त्वं विशदयितुमाह किमिति — कथय किं तत्त्वं यदहं न जाने, श्रोष्यामीति।

सुबल आह किमिति — विस्तारेण बहुना उक्तेन किम्। समासेन सङ्क्षिप्तः सारः यथा स्यात्तथा अवेहि यत् यः खलु महामन्मथचक्रवर्त्ती स एव निश्चितं प्रियवयस्यरूपेण कृष्णरूपेणैव वर्त्तमान इति। द्वयोः किल परमार्थतः वस्तुतो भिन्नता नास्ति पार्थक्यमिति।

---

समझती हो जो कि भारी मद के नशे में चूर तुम असलियत को न जानते हुए ही बकवास करती जा रही हो।

विशाखा — (आक्षेप भरी मुस्कराहट के साथ) इसमें असलियत क्या है ? बताओ, सुन लूँ।

सुबल — बहुत कहने से क्या लाभ, थोड़े में ही असलियत सुनो — जो महामन्मथ चक्रवर्ती हैं, वे ही मेरे प्रिय सखा कृष्ण के रूप में हैं, इसे निश्चित समझ लो, वस्तुतः इन दोनों में कोई भेद नहीं है।

---

of the influence of chronic haughtiness, for, you prate without knowing the fact

VISĀKHĀ *(smiling, sarcastically)* What is the fact here ? Let me hear.

SUBALA What is the use of elaboration ? Listen to the gist of it. Know for certain that he, who is known as the emperor named Mahāmanmatha, the great God of Love, is certainly no other than our dear friend, Kṛṣṇa There is, in fact, no difference between them

अर्जुनः — विसाहे, इदं वि थोअं च्चेअ, ता सुणाहि, सो किर अस्सुदअरसाहम्मो सम्मोहणमाहुरीभरो णव्वो सव्वोपरि विराइंदो पिअवअस्सस्स सअलगोउलपदित्तणेण गोइंदाहिसेअ-महूसहो कस्स वा गव्वं ण क्खु खंवेदि। [ विशाखे ! इदमप्यल्पमेव, तच्छृणु, स किलाश्रुतचरसाधर्म्यो सम्मोहनमाधुरीभरो नव्यः सर्वोपरि विराजन् प्रियवयस्यस्य सकलगोकुलपतित्वेन गोविन्दाभिषेकमहोत्सवः कस्य वा गर्वं न खर्वयति ! ]

मधुमङ्गलः — ( सोल्लासम् ) हंद ललिदे, सुट्ठु भणादि अज्जुणो जं उवणिसदेहिं वणं क्खु एदं कण्हवणं वण्णिज्जइ। [ हन्त ललिते ! सुष्ठु भणत्यर्जुनः यदुपनिषद्भिर्वनं खल्वेतत् कृष्णवनं वर्ण्यते। ]

---

ततोऽप्याधिक्यं स्थापयन्नर्जुनो ब्रूते **विशाख इति** — इदं यत्सुबलेनोक्तं तदपि अल्पमेव। अश्रुतं न पूर्वं कदाचित् क्वचित् श्रुतमिति अश्रुतचरं ( भूतपूर्वे चरट् ) साधर्म्यं येन तादृशः, सम्मोहनस्य सकलजनावर्जनस्य यः भरः प्रचुरता यस्मिन्सः, तेन नव्यः अपूर्वः सर्वोपरि विराजन् सर्वश्रेष्ठः कृष्णस्य सकलगोकुलस्य ( यस्यान्तर्वर्त्ति वृन्दारण्यमप्यस्ति ) तस्य पतित्वेन उपलक्षितः ( उपलक्षणे तृतीया ) गोविन्दाभिषेकनामा महोत्सवः कस्य गर्वं न खर्वयति लघूकरोति — सर्वस्यैवेत्यर्थः।

अर्जुनोक्तिं दृढयन् सोल्लासमाह मधुमङ्गलः **हन्तेति** — अयि ललिते ! सुष्ठु तथ्यत्वात् शोभनं भणति अर्जुनः यतः उपनिषद्भिः गोपालतापिनी-कृष्णोपनिषद्भिः वनमेतत् कृष्णवनमिति वर्ण्यते।

---

**अर्जुन** — विशाखे ! जो कुछ सुबल ने कहा यह भी कम ही है। सुनो, मेरे प्रिय सखा कृष्ण का सारे गोकुल के अधिपति के रूप में, जैसा पहले कभी सुना नहीं गया है, और समस्त जन को सम्मोहित करने की क्षमता से परिपूर्ण, अपूर्व, सर्वश्रेष्ठ गोविन्दाभिषेक महोत्सव भला किस घमण्डी के गर्व को चूर नहीं कर सकता है।

**मधुमङ्गल** — हाँ !! ललिते ! अर्जुन ठीक ही कह रहा है, उपनिषद् भी इस वन को कृष्णवन ही कहते हैं।

---

ARJUNA : Viśākhā ! even this description tells very little of him. Listen : whose pride would not be crushed by the recent great festival of our dear friend's Coronation as the Lord of the entire Gokula ( = *Govindābhiṣeka* ), shining above all, full of enchanting sweetness the like of which was never heard before ?

MADHUMAṄGALA : (*delighted*) Ah Lalitā ! well says Arjuna; for this forest is named after Kṛṣṇa ( = *Kṛṣṇa-vana* ) in the Upaniṣads as well.

वृन्दा — निरधारि पूर्वपरयोर्न्यायविदग्धैः परो विधिर्बलवान् ।
राजनि नवेऽभिषिक्ते पुरातने कस्य वा गणना ॥ ८५ ॥

मधुमङ्गल — मुंचध वालाअत्तण अम्ह पिअवअस्सस्स च्चेअ कान्ताराहीसदा, अदो करहारीहिं तुम्हेहिं राअउलपुरिसा अम्हे झत्ति खण्डकुंडलिआहिं सम्माणिज्जम्ह । [ मुञ्चथ वाचालत्वम्, अस्मत्प्रियवयस्यस्यैव कान्ताराधीशता, अत करहारीभिर्युष्माभि राजपुरुषा वय खण्डकुण्डलिकाभि सम्मान्यामहे । ]

एव बलाबलविचिकित्साया वृन्दा मीमासान्याय सञ्चारयति **निरधारीति** — न्यायेषु विदग्धै पटुभि पूर्वस्य परस्य तयो कालक्रमेण प्राक्तन पश्चात्तनयो वस्तुनोर्मध्ये पर' विधि बल्वान् भवतीति - पूर्वं परो विधिर्बाधते इति निरधारि ( नि+धृ+कर्मणि लुङ् ) निर्णीतम् । अत नवे राजनि अभिषिक्ते पुरातने पूर्ववर्तिनि राजनि कस्य ( कर्तरि षष्ठी ) गणना न कस्यापि । पूर्वतनो गोविन्दाभिषेक परस्ताज्जातेन श्रीराधामहाभिषेकेण बाधित' सन् श्रीराधाया एव अधिकारश्च यमधुना वृन्दावन इति सिद्धम् ।

अत्र शास्त्रोक्तविधिख्यापनात् शिक्षा नाम नाट्यालङ्करणम् तर्कश्च । गुणरीती तु पूर्ववत् । आर्याजाति ॥८५॥

हठवादी स्वार्थपर मधुमङ्गलस्ता गोपीरधरयन्निवाह **मुञ्चथेति** — यूय सर्वा वाचालत्वं वावदूकता मुञ्चथ, कृष्णस्यैव कान्ताराधीशता वनाधिपत्यमत करहारीभि शुल्कमदित्सुभिरत एव वय राजपुरुषा खण्डकुण्डलिकाभि शर्करानिर्मिताभि वर्तुलाकाराभि चक्रिकाभि सम्मान्यामहे सम्माननीया ( कर्मणि लट् ) — उत्कोचरूपेण अस्मान् सम्भावयथेति तात्पर्यम् । पक्षे कान्ता या राधी ( राधिका एव राधी ) तस्या ईशता प्रभुत्वमिति चक्रवर्त्तिन ।

---

वृन्दा — न्याय शास्त्र के पण्डितों ने पूर्व और पर की स्थिति में पर विधि को ही बल्वान् बताया है। अत नये राजा का अभिषेक हो जाने पर भला पुराने की क्या गणना ॥ ८५ ॥

मधुमङ्गल — तुम लोग वाचालता छोडो । मेरे प्रिय सखा का ही इस वन पर स्वामित्व है, [ > मनोहारिणी राधा पर अधिकार है ] इस लिये चुगी न देने की इच्छावाली तुम सब हम राजपुरुषों को खण्ड कुण्डलिका (जलेबी) द्वारा सत्कृत करो।

---

VRNDĀ 85 Expert jurists who understand the distinction between the antecedent and the subsequent have decided that the subsequent is stronger than the former one So when a new king is enthroned, what consideration could there be for the old fellow !

MADHUMANGALA Give up your talkativeness Sovereignty over the forests ( > beloved Radhā ) vests only in our dear friend So, we, the king's men are to be treated by you, the tax-evaders with sweet circles (*jalebis*).

कृष्णः — सखे, सुबल ! श्यामलमण्डपिकां मण्डय यदत्र साम्प्रतं शुल्कदासिकाः प्रवेशनीयाः[1] ।

राधा — हंत तक्करचक्कवट्टिसामंद सुअल, मह पिअसहीए सामलाए व्वदवेइ सामलमंडविआ एसा कीस तुम्हेहिं घट्टघडलेण दुसीअइ ?
[ हन्त, तस्करचक्रवर्तिसामन्त सुबल ! मम प्रियसख्याः श्यामलायाः व्रतवेदी एषा श्यामलमण्डपिका कस्माद्युष्माभिर्घट्टघटनेन दूष्यते ? ]

कृष्णः — वक्राणां चक्रवर्तिनि ! कृतं राधाचक्रस्य चंक्रमणया, यदेष

तदेवानुसन्धाय कृष्ण आदिशति **श्यामलेति** — श्यामलेपपदेन ख्यातां मण्डपिकां मण्डपं मार्जनादिना लताप्रसूनादिभिः सज्जय यतः एताः शुल्कदासिकाः शुल्कापेक्षया क्रीता दासिकाः स्नेहाधिक्यात् क्षुद्रा निम्ना इवेति ( अल्पार्थे कन् – in the sense of endearment ) प्रवेशनीया इति ।

कृष्णादेशेन कदाचित्सुबलः एवं कुर्यादित्याशङ्क्य राधा आक्षिपति **हन्तेति** — तस्करचक्रवर्तिनः चोरराजस्य सामन्त वशंवद ! सा मण्डपिका तावत् मम प्रियसख्याः श्यामलाया व्रताचरणाय निर्मिता वेदी अतस्तन्नाम्ना ख्याता श्यामलमण्डपिका कस्माद् युष्माभिः घट्टघटनेन शुल्कादानसम्पादने प्रयुज्य दूष्यते अशुचितां नीयते ?

राधां सम्बोधयन् कृष्ण आह **वक्राणामिति** — अयि कुटिलानां चक्रवर्तिनि महावक्रे इत्यर्थः । राधाचक्रस्य चङ्क्रमणया सञ्चरणेन अलम् । यतः एष तरसा वेगेन

---

| | |
|---|---|
| कृष्ण — | मित्र सुबल ! श्यामल मण्डपिका ( इस नाम से प्रसिद्ध कुटीर ) को सजाओ, क्योंकि वहाँ अभी शुल्क रूप में प्राप्त दासियाँ प्रविष्ट की जाँयेंगी । |
| राधा — | हन्त ! चोरों के चक्रवर्ती के सामन्त, सुबल ! यह श्यामल मण्डपिका मेरी प्रिय सखी श्यामला की व्रतवेदी है, उसे चुंगी के काम में लेकर तुम लोग क्यों अपवित्र बना रहे हो ? |
| कृष्ण — | महाकुटिले ! राधा के चक्रवर्तित्व के सञ्चार को बन्द करो, |

| | |
|---|---|
| KRṢṆA : | Friend Subala ! decorate the Blue Arbour where these maids, held by us for non-payment of tax, are to be ushered now. |
| RĀDHĀ : | Ah Subala ! the vassal of the robber king ! The Blue Arbour is the sanctuary of penance of our dear friend, Śyāmalā. Why is it being desecrated by you by converting it into a toll-gate ? |
| KRṢṆA : | Queen of the crooked ! the movement of Rādhā's |

1. 'शुल्कदासिका प्रवेशनीया' इत्येकवचनान्तः क्वचित् पाठः ।

सरसा दुर्लक्ष्यं मनोऽपि भिन्दता धन्विनां मूर्द्धन्येन महामन्मथेनाधिष्ठितो महाघट्टरङ्गः।

राधा — ( संस्कृतेन )

**वक्रस्त्रिधा त्वमादौ मध्ये चान्ते च वंशिकारसिक।**
**कलकृतजगतीप्रलयो[1] वक्रेश्वर एव देवोऽसि ॥ ८६ ॥**

दुर्लक्ष्यं सूक्ष्म अवेध्यमपि मन भिन्दता विध्यता अत धन्विना मूर्धन्येन सर्वधनुर्धारिणां प्रमुखेन महामन्मथेन अधिष्ठित स्वाधिकारे कृत महाघट्ट एव रङ्ग नर्मस्थली। राधा वक्रशिरोमणिं सम्बोधयन्त कृष्ण तस्यैव त्रिधा वक्रत्व त्रिगुणवक्रताधारित्व ख्यापयन्ती राधा तदुक्तमाक्षिपति **वक्रस्त्रिधेति** — हे वंशिकारसिक मुरलीवादक! त्वमादौ मध्ये चान्ते वक्र, वेणुवादनसमये त्रिभङ्गित्वरूपम् कृष्णस्य प्रसिद्धम्। कलकृत वेणुस्वनमाधुर्येण कृत जगत्या प्रलय सम्मोहनत्व ( प्रकर्षेण लय नितरां मग्नत्वम् ) येन स त्व देव वक्रेश्वर शिव एवासि यत सोऽपि जगत्या प्रलयङ्कर एव। अत्र रूपकमलङ्कार। गुणरीती पूर्ववत्। छन्दश्च आर्याजाति ॥८६॥

---

क्योंकि अभेद्य मन को भी तीव्रता से बेधने वाले धनुर्धरों के शिरोमणि, महामन्मथ महाराज द्वारा यह महाघट्टरूपी आमोद की स्थली अपना ली गई है।

राधा — ( संस्कृत के माध्यम से ) बाँसुरी रसिक! तुम आदि, मध्य और अन्त में तीन टेढ़े के टेढ़ ( मुरली वादन के समय का त्रिभङ्गी रूप ) हो, बाँसुरी के मधुर लय में जग को लीन करने वाले तुम वक्रेश्वर शिव [ > कुटिलों के चक्रवर्ती महाराज ] ही हो ॥ ८६ ॥

wheel of sovereignty is now a played out affair The great toll station is now presided over by the great god of Love, the foremost of the archers who vigorously hits even the mind – a difficult target indeed

RĀDHĀ . ( *In Sanskrit* )

86 Expert flutist ! it is you who are crooked in three parts – the lower, middle and upper ones That is why you are known as god, Vakreśvara ( = crooked lord ), and you have by the sweetness of sound of your flute caused the world to go into a swoon ( >you are known as Vakreśvara = Śiva because the dissolution of the world is brought about by you )

1. प्रणयो – इति पाठभेद।

कृष्णः — ( किञ्चिद्विहस्य )

**वाचि कचे भ्रुवि दृष्टौ स्मिते प्रयाणेऽवगुण्ठे हृदि च ।**
**त्वामित्यष्टसु वक्रामष्टावक्रायितां वन्दे ॥ ८७ ॥**

**चम्पकलता — अलक्खवंकिमा वि तुमं लक्खवंकिमासि, ता अप्पणो समाणधम्मिणा जणेण कीलेहि, विसुद्धधम्माणं अम्हाणं इदो जुत्ता गदी।**

[ अलक्ष्यवक्रिमापि त्वं लक्षवक्रिमासि[1], तदात्मनः समानधर्मेण जनेन क्रीडय, विशुद्धधर्माणामस्माकमितो युक्ता गतिः । ]

आत्मनो बहुतरवक्रतामनाकलयन्तीं परं वक्रं कथयन्तीं राधां विहस्याह कृष्णः **वाचीति** — त्वं तावत् वाचि भाषायां वक्रा कुटिला, कचे केशपाशे कुटिला, भ्रुवि भ्रुकुटौ वक्रा, दृष्टौ प्रेक्षणे वक्रा, स्मिते हास्ये वक्रा, प्रयाणे गतौ वक्रा, अवगुण्ठने नेपथ्यविधाने कुटिला, हृदि च वक्रा एवं अष्टप्रकारेण सुतरां वक्रा अत एव अष्टावक्र इवाचरन्तीं त्वामहं वन्दे आधिक्यवशान्नतोऽस्मि ।

अत्र युक्तिर्नाम नाट्यभूषणम्, भणितिगतवक्रिमा । अष्टावक्रायितामित्यत्र व्यङ्गता उपमा । गुणरीतिच्छन्दांसि पूर्ववत् ॥८७॥

उभयोस्तुल्यधर्मणोः परस्परं विवदतोर्मध्ये शेषाणां तत्र स्थितिरनुपपन्नेति प्रतिपादयति चम्पकलता **अलक्ष्येति** — यस्याः वक्रिमा कुटिलता अलक्ष्या सत्यपि त्वं लक्ष्यविक्रमा स्फुटप्रभावाऽसि अथवा अलक्ष्यवक्रिमाऽपि त्वं लक्षवक्रिमा सहस्रशतकुटिलता तया परिपूर्णा अतस्त्वं आत्मनः समानधर्मेण जनेन क्रीडय खेल "समानशीलव्यसनेषु सख्यम्"—इत्यभियुक्तोक्तेः । विशुद्धधर्माणां ऋज्वीनामस्माकमितो गतिः प्रस्थानमेव युक्ता समीचीनम् ।

---

**कृष्ण —** (कुछ मुस्कराते हुए) वाणी, केश, भृकुटि, दृष्टि, मुस्कान, चाल, घूँघट और हृदय इस तरह आठ टेढ़ की टेढ़ी अष्टावक्र (वक्रेश्वर शिव के उपासक ऋषि) बनी तुम्हें सादर नमस्कार करता हूँ ॥ ८७ ॥

**चम्पकलता —** तुम्हारी कुटिलता अदृश्य है तो भी तुम्हारा वाक्-छल ( > पराक्रम ) अनन्त है, (देखने में बड़ी सरल हो पर तुम लाखों चालों से भरी हो), तो तुम अपने समानधर्मी जन के साथ विहार करो, अत्यन्त सरल हम लोगों का यहां से चले जाना ही उचित है।

---

KRṢṆA : *(Somewhat smiling)*

87. I bow to you, who are crooked eightfold – in talk, hair, eye-brows, eyes, smile, gait, veil and heart, and have become Aṣṭāvakra ( the devotee of Vakreśvara, Śiva ).

CAMPAKALATĀ : Your crookedness is invisible, but you have a hundred thousand exploits to your credit ( > points of crookedness). So you may sport with the one, who is of similar nature. For us who are straightforward in nature, it is only proper to go away from here.

---

1. "लक्ष ( > लक्ष्य ) विक्रमासि" इति पाठान्तरम् ।

कृष्ण — पुण्यवति ! महादानं विना गतिर्दुलभा।

चम्पकलता — संतजणाणं सव्वपधीणा गदी प्पसिद्धा। [सज्जनानां सर्वपथीना गतिः प्रसिद्धा।]

चित्रा — पुरिसुत्तम, पुण्णसुलोओसि, ता धम्मकम्मपउत्ताणं अम्हाणं कुणु मोक्खणं। [पुरुषोत्तम ! पुण्यश्लोकोऽसि, तद्धर्मकर्मप्रवृत्तानामस्माकं कुरु मोक्षणम्।]

कृष्णः — चित्रे ! विचित्रेयमस्य चक्रवर्तिनः प्रक्रिया यत्र धर्मेण

---

कृष्ण पुनरावर्त्तयति **पुण्येति** — हे पुण्यवति सौभाग्यशालिनि ! महादान खाङ्करान विना इत गतिर्गमन दुर्लभेति।

तन्निरोधहेतु प्रत्यादिशन्ती चम्पकलता प्राह — **सज्जनेति** — सज्जनानाम-कुटिलवृत्तीना साधूना तावत गति सर्वपथीना सर्वेषु पथिषु मार्गेषु व्याप्ता अबाधा भवति। सर्वपथान्व्याप्नोतीति पथिशब्दात् खप्रत्यये सर्वपथीनस्ततष्टाप्।

चित्रा कृष्ण प्रार्थयते मा बाधामस्मत्कर्मणि कुरु **पुरुषोत्तमेति** — सम्बोधनमत्र साभिप्रायमत परिकुराङ्करालङ्कार। यतस्त्व पुरुषेषु उत्तमोऽसि तत् यज्ञवार्ता नवनीत नयन्तीना धर्मकर्मप्रवृत्तानामस्माक मोक्षण कुरु अवरोधान्मुक्ता अस्मान् कुरु। अत्र "धर्मकर्मप्रवृत्तानामस्माक कुरु मोक्षणम्" इति गद्यखण्ड अनुष्टुब्वृत्तस्यार्धमेवेत्यतो वृत्तगन्धी बन्ध।

अनन्यप्रकारवैशिष्ट्येन उद्घोषयति चित्रा कृष्णः **विचित्रेति** — अस्य चक्रवर्त्तिनः

---

कृष्ण — पुण्यशीले ! इतनी बड़ी चुंगी की धन राशि दिये बिना जाना बड़ा कठिन है [ > पूर्ण समर्पण किये बिना छुटकारा पाना आसान नहीं है]।

चम्पकलता — सज्जनों की गति हर मार्ग से सम्भव है, ऐसी प्रसिद्धि है।

चित्रा — पुरुषोत्तम ! तुम बड़े सच्चरित्र हो, इसलिये धर्म के काम में लगी हुई हम लोगों का छुटकारा कर दो।

कृष्ण — चित्रे ! इन चक्रवर्ती महाराज का यह बड़ा विचित्र कर्मकाण्ड है, जिसमें

---

KRṢṆA Blooming woman ! going away from here without paying the tax is an impossibility

CAMPAKALATĀ *The movement of the good people—as is well-known — is in all directions unobstructed (Sarva = all pervading God therefore, it may also mean — good people for whom all paths lead to Sarva is famous )*

CITRĀ You excellent man ! you are *well spoken of (as puruṣottama* = God *punya-sloka* = whose name uttered earns merit ) Please, therefore, relieve us who are intent upon doing righteous deeds

KRṢṆA · Citrā ! the technique of this king is peculiar : where

दुर्लभो मोक्षः किन्तु कामप्रयोगेण ध्रुवं लभ्यते ।

**नान्दीमुखी** — सत्थआराणां मुणीणां वि अविसंवादिणी एसा रीदी, जं एदे कामस्स अणंदरं च्चेअ मोक्खं पढन्ति, धम्मं किर दूरदो पढमकक्खारोहणम्मि । [ शास्त्रकाराणां मुनीनामप्यविसंवादिन्येषा रीतिः यदेते कामस्यानन्तरमेव मोक्षं पठन्ति । धर्मं किल दूरतः प्रथमकक्षारोहणे । ]

**कृष्णः** — ( स्मित्वा राधां पश्यन् ) हन्त शुल्कक्रीति ! [1]प्रीतिरेव नाथस्य

प्रक्रिया प्रकारो विधानं वा विचित्रा अद्भुतैव यत्र यस्यां प्रक्रियायां धर्मेण मोक्षो दुर्लभः किन्तु कामप्रयोगेण रतिविलासेन ध्रुवं निःसंशयं लभ्यते । अन्यत्र धर्मस्य मोक्षसाधमता इह तद्द्वारा लभेत दुःखेन, न वा लभेत अतः धर्मकर्मप्रवृत्तानां युष्माकं दुर्घटो मोक्षः । इतस्त्वां प्रक्रियां यद्यनुरुन्धीध्वम् तदा ध्रुवं भवेत् इतो मोक्षः ।

इदानीं कार्यं नियताप्तिमुखं निनीषुः कविवरः नान्दीमुखीमपि कृष्णपक्षपातिनीं कृत्वा कृष्णोक्तिं समर्थयति **शास्त्रेति** — शास्त्रकाराणां विधिज्ञानां मुनीनां निःस्वार्थानामपि एषा रीतिः अविसंवादिनी अविरुद्धा, यतः चतुर्वर्गे धर्मार्थकाममोक्षेतिविषयचतुष्टयं प्रतिपादयद्भिस्तैः मोक्षस्याव्यवहितपूर्वतया कामस्यैव निर्देशः कृतः, धर्मस्तु दूरे क्षिप्तः प्रथमकक्षाया आरोहणे । प्रारम्भिकदशायां प्राथम्येन धर्मं निर्दिश्य ततोऽर्थं ततश्च काममुक्त्वा धर्मादर्थलाभः, अर्थात् कामसिद्धिः, कामान्मोक्षावाप्तिरित्येव सिद्धान्तः ।

कृष्णः स्वपक्षसमर्थनात् हृष्टः स्मितं विधाय राधां पश्यन् लक्ष्यीकृत्याह **हन्तेति** — शुल्केन क्रीते आयत्ते शृणु इति शेषः । अद्य तव गतिः तत्सन्निधौ गमनं तव नाथस्य

---

धर्म से मुक्ति असम्भव है, परन्तु काम के प्रयोग से निश्चित ही सुलभ है ।

**नान्दीमुखी** — शास्त्रनिर्माता मुनियों को भी यह रीति सर्वथा सम्मत है । क्योंकि ये लोग काम के बाद ही मोक्ष को पढ़ते हैं । धर्म को तो अतिदूर स्थित कक्षा की पहली सीढ़ी के रूप में पढ़ते हैं ।

**कृष्ण** — (मुस्करा कर राधा की ओर देखते हुए ) अब घटेश का आह्लाद ही तुम्हारा

release *( mokṣa )* is difficult to obtain by means of righteousness; it is available by the employment *(pra+yoga )* of desire (*kāma*).

NĀNDĪMUKHĪ : Nor is this course inconsistent with the one advocated by the sage authors of the Scriptures ; for they cite *Mokṣa* (release, salvation) immediately after *Kāma* (desire); and *Dharma* (righteousness) as the first step is at a distance ( too much to admit its priortiy as the immediate means to get *mokṣa*).

KRṢNA : *( looking at Rādhā with a smile )* Ah woman; bought for

1. प्रीयते इति पाठभेदः ।

तवाद्य गतिः, तदानन्दय महादानीन्द्रमेनमभीष्टसेवया ।

**ललिता** — मोहण, भूरिणा तवोहरेणैव घट्टीपालस्स दासित्तं सिज्झेदि, एदा उण महसहीए त दुलहं, जं अतवस्सिणी एदा । [मोहन ! भूरिणा तपोभरेणैव घट्टीपालस्य दासीत्व सिद्ध्यति, एतस्या पुनर्मम सख्यास्तद्दुर्लभम्, यदतपस्विनी एषा ।]

**नान्दीमुखी** — णिउंजलीलाकुंजरिंद, ललिदा भणादि — सोलुक्किएण तुए चेअ सेवाउलेहिं उवासणिज्जा अम्ह सही जं एसा सअलजोव्वणवदीणं

---

प्रीयते नस्मै रोचते इत्यर्थ । अद्य तव नाथस्य प्रीति प्रीतिसम्पादनमेव तव गति' साध्योपाय इति पाठभेद अतो महादानीन्द्रमेन तव त्वत्कृतया अभीष्टसेवया तदभिलाषपूरणेन आनन्दयेति ।

आत्मनस्तादृशसौभाग्यालाभादीर्ष्यन्तीव ललिता प्रपञ्चयति **मोहनेति** — हे मोहन कृष्ण ! भूरिणा महता तपोभरेण साधनावैभवेन एव घट्टीपालस्य अमुष्य दासीत्व सिद्ध्यति मम सख्या तपोलभ्य दास्य दुर्लभमिति परञ्च तादृशदास्य अपरिचितेयम् । तादृशतपोविभवशून्येयमित्यर्थ । अत्र अभुक्तत्व भङ्ग्या स्थापयति । अतपस्विनीति व्यञ्जनया गमित, त्व मोहनोऽसि मामपि अहमपि त्वयि बद्धभावा सुपरिचिता सेवाविधाविति मोहितवानसीत्युपेक्षाया तस्मै ईर्ष्यति इत्याकूतम् ।

राधोपसेवन भङ्ग्यन्तरेणानुमन्यते नान्दीमुखी **निकुञ्जेति** — निकुञ्जेषु तरलतागहनेषु लीला सुरतकेली सम्पादने कुञ्जरेन्द्रस्य गजराजस्य शोभाशालित्वादुपमानत्व कविना

---

सहारा है, [ > अब तुम्हें पा लेना ही घट्टेश के लिये परमानन्द है] इसलिये मनचाही परिचर्या द्वारा घट्टाधिराज को प्रसन्न कर दो।

**ललिता** — मोहन ! बहुत बड़ी तपस्या के प्रभाव से घट्टपाल की दासी का पद मिलता है, मेरी सखी के लिये तो वह दुष्प्राप्य है, क्योंकि इसने वैसी तपस्या नहीं की है।

**नान्दीमुखी** — निकुञ्जों में विहार करने वाले गजराज ! चुंगी देने वाले आप द्वारा ही विविध परिचर्याओं से मेरी सखी प्रसन्न की जानी चाहिये,

---

the toll tax ! Today it is your movement alone that would make the Master happy Please, therefore, gladden the great tollgate chief by rendering desired service unto him.

LALITĀ : Mohana ! it is only by abundant penance that a maid can earn the privilege of servitude to the toll gate chief, and that is impossible for my friend, for she is not used to penance.

NĀNDĪMUKHĪ . Lord of elephants sporting in the arbours ! Lalitā says, " it is you, the toll-collector, who are to

मंडलचक्कवट्टिणी । ता इमिणा विवरीदेण अलं जप्पिदेदेण । [ निकुञ्जलीला॰ कुञ्जरेन्द्र ! ललिता भणति — शौल्किकेन त्वयैव सेवाकुलैरुपासनीयास्मत्सखी यदेषा सकलयौवनवतीनां मण्डलचक्रवर्तिनी, तदनेन विपरीतेनालं जल्पितेन । ]

कृष्णः — ( सहर्षम् ) नान्दीमुखि ! दुरतिक्रमेयं ललिताकृताज्ञा, तदेवं सेवितुकामः प्रथमं हृदयङ्गमे शातकुम्भकुम्भे पञ्चशाखापल्लवमर्पयामि ।

( इति राधामासादयति )

---

प्रत्यपादि, वस्तुतस्तु प्राणिविज्ञानकोविदैः वाजिनामेव सुरतसङ्गरे दार्ढ्यमायुर्वेदेऽपि वाजिकरणप्रक्रियाया एवोल्लेखात् प्रकृते वाजिन एवोपमेयता साधीयसी प्रतीयेत । अतोऽत्र प्रवृत्तिगतमसामञ्जस्यं भायात् गजस्य निधुवने ह्रीमत्त्वादेकान्तप्रियत्वात् भूयो भूयोऽननुष्ठानात् । ललिता भणति यत् शौल्किकेन शुल्कस्य दात्रा अधमर्णेन त्वयैवेयं सकलयौवनवतीनां ललनानां मण्डलस्य चक्रवर्त्तिनी अस्मत्सखी राधा सेवानां कुलैः विविधाभिर्मनोरञ्जिकाभिः सेवाभिरुपासनीया प्रीणयितव्या । अतः सेव्यायाः सकाशात्सेवामपेक्षमाणस्य विपरीतेन जल्पितेन असम्बद्धवचनेन अलम् । त्वमेवैनां सेवेथाः । अत्र भङ्गया तदाराधनं प्रथितम् ।

नान्दीमुखेन शस्तां ललिताज्ञां स्वामिमतां प्रतीत्य कृष्णः सहर्षं नान्दीमुखीमाह **दुरतिक्रमेति** — ललिताकृताज्ञा दुरतिक्रमा, अतस्तामनुसरन् एवं यथोक्तप्रकारेण तां राधां सेवितुकामः प्रथमं हृदयङ्गमे हृदयवर्त्तिनि हृद्ये मनोहारिणि शातकुम्भकुम्भे सुवर्णकलशे ( जातित्वाद् युग्मयोरेकवचनेन परामर्शः ) तदाप्यासिते कुचमण्डले पञ्चशाखः हस्तस्तस्य पल्लवमङ्गुलिमर्पयामि । ( इति वदन् राधामासादयति धरति )

---

क्योंकि यह समस्त युवती मण्डल की चक्रवर्त्तिनी है । इसलिये इस तरह की उल्टी बातें कहना बन्द करो ।

कृष्ण — ( हर्ष के साथ ) नान्दीमुखि ! ललिता द्वारा दिया गया आदेश दुरतिक्रमणीय है, तो इस तरह सेवा करने के लिये इच्छुक मैं पहले परम मनोहर सुवर्ण कलश पर हाथ की अंगुलियाँ अर्पित करता हूँ ।

( ऐसा कहकर राधा के निकट हो लेते हैं )

---

attend upon our friend with your multiple services; for, she is the queen of the entire race of youthful women. So, enough of your bragging to the contrary."

KRṢṆA : (*gladly*) Nāndīmukhī ! the command of Lalitā is inviolable. So, with a desire to render my service ( to the Queen Rādhā ) in this way, first of all I offer five sprouts of a branch ( *pañcaśākha*, i.e. hand) in the gold pot (breasts) of Rādha.

( *so saying, he draws near Rādhā* )

ललिता — (सभ्रूभङ्गमुपक्रम्य) णाअरम्मण, छिह्लदु एसा दे दुह्लीलालदा-वह्लई[1]। [नागरम्मन्य ! छिह्लतु एषा ते दुर्लीलालतावल्लरी[1]।]

कृष्णः — कृपणे ! विपणायितासौ स्ववशा भवत्या शुल्केन ; तदत्र विक्रीते करिणि किमङ्कुशे विवादः ? (इति मन्दं मन्दं पाद स्पन्दयति)

ललिता — कण्ह, अणहिण्णो णासि ललिदादुह्लालिघाणं, ता किं त्ति

---

समक्षमेव कुर्वाणमसहमाना भ्रूभङ्गं कुर्वती राधाया निकटमेत्य कृष्ण साक्रोशमाह ललिता **नागरेति** — नागरश्चतुरः शिष्टत्वदनाचरन्नपि आत्मानं नागरं मन्यते असौ तत्सम्बुद्धौ हे शिष्टम्मन्य ! एषा तु तव दुर्लीलाल्लतावल्लरी छिन्तु विश्राम्यतु । अत्र लता-वल्लरीति पृथगर्थता न, तथापि वल्लरीतिपदेन सन्तति वितानमित्यर्थो ग्राह्य , वस्तुतस्तु अत्रा-पुष्टार्थता एव । अत दुर्लीलतावल्लरीति साधीयान् पाठ' स्यात् । छिन्तीति देशीप्रयोग एव ।

कृष्ण. प्रत्याह **कृपण इति** – दानसङ्कीर्णे ! असौ स्ववशा स्वस्य वशे वर्तमाना । अधीना पक्षे स्ववशा निजा हस्तिनी भवत्या शुल्केन करव्यतिहारेण विपणायिता विनीता । ततः परं समग्रस्य दानेऽपि अशे सङ्कोच. असाधु' यत अभियुक्तैरुक्तम् करिणि गजे विक्रीते अङ्कुशे अङ्कुशप्रदाने विवाद' किम् व्यर्थ एव – रामायणोक्तमिदं वच' । अत न्यायानुवर्तन नीतिर्नाम नाट्यभूषणम् ।

कृष्णमात्मप्रभावं स्मारयन्ती ललिता पुनराह **कृष्णेति** — ललिताया' (स्वस्या) दुर्लीलित्याना कठोरव्यवहाराणा त्वम् अनभिज्ञ अपरिचितो नासि, अतः किमर्थं त्वं

---

ललिता — (भौंहें चढ़ाये, आगे बढ़कर) बड़े चतुर बनने वाले ! अपने इस अशिष्ट मनोविनोद रूपी लता की बेल को मत फैलाओ।

कृष्ण — कृपणे ! तूने इस अपने अधीन ललना [ > अपनी हस्तिनी ] को चुंगी के लिये बेच दिया, तो अब हाथी बेच देने पर अंकुश के लिये विवाद व्यर्थ ही है। (कृष्ण पैर को धीरे धीरे हिलाते हैं)

ललिता — कृष्ण ! ललिता के कठोर व्यवहारों से तुम अपरिचित नहीं हो, तो क्यों

---

LALITĀ . ( *advancing towards Kṛṣṇa with a frown* ) Conceited city-bred fellow ! this unruly creeper of your mischief be chopped.

KṚṢṆA : Miserly woman ! this woman of your belonging ( > elephantess ) has been sold by you for the toll-tax, and is fully mine The elephant having been sold, why quarrel over its goad ?

( *gently stirs his foot* )

LALITĀ : Kṛṣṇa ! you are not unaware of Lalitā's stiff manners. Then why are you bent upon making a show of your

---

1. "झिह्लदु दुह्लिदा झह्लरी"-इति पाठान्तरम् ।

अप्पणो माहप्पं पेक्खाविदुं पउत्तोसि ? [ कृष्ण ! अनभिज्ञो नासि ललितादुर्ललितानाम्, तत् किमित्यात्मनो माहात्म्यं प्रेक्षयितुं प्रवृत्तोऽसि ? ]

कृष्णः — सुवीरम्मन्ये ! पश्य विक्रमिणां चक्रवर्ती पुरस्तादेव चंक्रमीति[1]। तदलं क्लीबभङ्गकारिणा कृत्रिमभुजङ्गमेनैवामुना मुधाटोपतरङ्गेण, तूर्णं विश्राणय घट्टशुल्कानि ।

ललिता — हंत, घट्टीघंटघोसण, जइ सुलुक्कग्गहे दीहग्गहोत्थि[2] तहा संज्झा ओसरे अम्ह दुआरं आअच्छेहि, सुट्ठु घणं घोलं दाइस्सम्ह । [ हन्त !

किंयद् आत्मनो माहात्म्यं प्रेक्षयितुं दर्शयितुमिच्छसि । पराजितो भविता इति मा पणीकुरु ।

सगौरवं कृष्णः प्रतिवदति **सुवीरेति** – अहं सुतरां वीरा अस्मि इति आत्मानं मन्यमाना सुवीरम्मन्या तत्सम्बुद्धौ हे ललिते ! पश्य विक्रमिणां चक्रवर्ती पुरस्तात् चंक्रमीति त्वत्समक्षमेवास्ति । तदलं क्लीबभङ्गकारिणा क्लीबानामसमर्थानां भङ्गं करोति तादृशेन पौरुषहीनानां भयहेतुना कृत्रिमभुजङ्गमेन इव अमुना मुधा व्यर्थेन आटोपस्य आडम्बरस्य तरङ्गेण क्रमेण । तवायं वृथाटोपः केवलं भीरूणां एव कृत्रिमसर्पवत् भयावहो भवेत्, न तु मादृशानां पुरतः, अत एव तवयाडम्बरस्य निरर्थकतैव । अतः घट्टशुल्कानि तूर्णं सत्वरं विश्राणय प्रयच्छ । चन्द्रमौलिः शङ्करः, पक्षे चन्द्र एव चन्द्रकः मौलौ यस्य स बर्हापीडः कृष्णः – इति पाठभेदेऽर्थः ।

ललिता भङ्ग्यन्तरेण सायन्तनं समयं सङ्केतीकृत्याह **हन्तेति** — हे घट्याः घट्टस्य घण्टं वादयत्यसौ तादृश घट्टघण्टावादक ! यदि शुल्कग्रहे आत्मनोऽभीप्सितस्य शुल्कस्य

अपनी दिव्य विभूति दिखाने पर तुले हो ।

कृष्ण — बड़ी धीर बनने वाली ! देखो, पराक्रमियों के सम्राट् ( > चन्द्रमौलि ) तुम्हारे समक्ष हैं, अतः पुरुषार्थहीन भीरुओं को भयावने लगने वाले, बनावटी सर्प के इस झूठे फटाफोट को रहने दो । चौकी की चुंगी शीघ्र दे दो ।

ललिता — घाट के घण्टा वादक ! यदि चुंगी लेने के लिये हठ ही कर रहे हो, तो शाम के समय हमारे द्वार पर आओ, हम सब खूब ढेर सी छाछ,

greatness ( *ironically*, discomfiture ) ?

KRṢṆA : Self-styled hero ! see in front of you the prince of the valiants ( > Candramauli ) is sauntering. So enough of the vain, swollen arrogance of artificial hissing, which can frighten only a coward. Shell out at once the amount of the tax.

LALITĀ : Ah, the bell-ringer of the toll station ! if you persist in taking the toll-tax, come to our door in the evening;

1. "चन्द्रमौलिः" – इति पाठान्तरम् । 2. °–दीहग्गहोऽसि – इति पाठभेदः ।

घटीघण्टाघोषण ! यदि शुल्कग्रहे दीर्घाग्रहोऽस्ति तदा सन्ध्यावसरेऽस्मद्द्वारमागच्छ, सुष्ठु घन घोलं दास्याम । ]

**नान्दीमुखी** —ललिदे, कामधेणुर्विदवइणो वल्लविंदस्स घरे किं घणं घोल वि णत्थि, जं तस्स किदे तुम्हाणं घरे[1] गन्तव्व ? [ ललिते ! कामधेनुवृन्दपते बलवेन्द्रस्य गृहे किं घन घोलमपि नास्ति, यत्तस्य कृते युष्माकं गृह गन्तव्यम् । ]

**कृष्ण** — सुदीर्घाक्षि राधिके ! फल्गुनि ललितोपलाभारभटी[2]पटले स्वं निबद्धप्रत्याशा मा खलु शुल्कनिर्यातनया[3] वैमुख्यमपेक्षिष्ठाः, तदेष सन्नि-

---

आदाने एव दीर्घाग्रह हठिल त्वमसि तदा सन्ध्यावसरे सूर्यास्तमनवेलायाम् अस्मद्द्वारमागच्छ । तत्र सुष्ठु पर्याप्तं घनं घोल निविड तक्रम् पक्षे व्यञ्जनया घोल रस स्निग्ध केलिरस दास्यामो वय सर्वा एवेति अभिसारायाह्वाने आहूतम् ।

यथोचित प्रत्युत्तर दातु नान्दीमुख्या मुखमवलोकते कृष्ण । सा चाह **ललित इति** -- कामधेनूनां यावदिच्छ पय स्रवन्तीना गवा वृन्दस्य कोटिशतस्य पते बल्लवेन्द्रस्य गोपराजस्य गृहे किं घन तक्रमपि नास्ति यत्कृते युष्माक द्वारमागन्तव्यम् ।

राधिका साम्ना गृह्णन् सम्बोधयति कृष्ण **सुदीर्घेति** — अयि दीर्घनयने इत्यनेन दूरदर्शित्व व्यज्यते । फल्गुनि तुच्छे ललिताया उपलाभ उपलमिव आभाति इति तादृश पाषाणखण्डमिव आरभटीपटल कठोरवच शिलापट्ट अथवा अपलाप प्रलापो वा मिथ्यावच तस्मिन् निबद्धप्रत्याशा कृतविश्वासा भूत्वा मा खलु शुल्कस्य निर्यातनाय अपाकरणाय वैमुख्य

---

[ > मधुर केलि रस ] देंगी ।

( कृष्ण मुस्करा कर नान्दीमुखी क मुह की ओर देखने हैं )

**नान्दीमुखी** — ललिते ! सौ करोड कामधेनुओं के स्वामी गोपराज के घर छाछ भी ढेर सी नहीं है, जो कि उसके लिये तुम लोगों के घर जाँय ।

**कृष्ण** — विशालनयने राधिके ! ललिता क पत्थर के समान कठोर ( > झूठमूठ की), तुच्छ दिलेरी के ढेर पर आशा बाँध कर चुगी देने से मुँह मोड लेने की

--- -- -- --

we shall give you good, thick, butter milk

*( Krsna, with a smile, looks at Nāndīmukhī )*

NĀNDĪMUKHĪ Lalita ! is there no butter-milk in the house of the prince of cowherds, the owner of a hundred crore of cows of plenty so that he has to go to your house for the butter milk ?

KRSNA Beautiful long eyed Rādhā ! with hopes resting upon a heap of Lalitā s meaningless stone like, bol l pratings, donot expect ( from me ) any retreat from exacting

---

1 'दुआरे' – इति पाठान्तरम् । 2 'ललितापलापा (>-°प्रलापा-) रभटी-°' इति पाठान्तरे ।
3 'निर्यातनाय' – इति पाठभेद ।

कृष्टो रहस्यं वर्णयामि ।                    ( इत्युरसि पाणिमाधित्सति )

ललिता — दुल्लहफलेहिं हठिल्ल, ललिदाए पुरदो भुअणपराणो गंहवाहो वि राहीए त्थणंबरंचलस्स फंसणं[1] कादुं ण प्पभवेदि, एत्थ हत्थं णिक्खेविदुं किदज्झवसाहस्स दे मुद्धत्तं जेव पज्जवस्सेदि । [दुर्लभफले हठिल्ल! ललितायाः पुरतो भुवनप्राणो गन्धवाहोऽपि राधायाः स्तनाम्बराञ्चलस्य स्पर्शनं[1], कर्तुं न प्रभवति, अत्र हस्तं निक्षेप्तुं कृताध्यवसायस्य ते मुग्धत्वमेव पर्यवस्यति ।]

प्रतिकूलत्वम् अपेक्षिष्ठाः आवश्यकत्वेन अधाः– मा चरेत्यर्थः । तदेव अहम् सन्निकृष्टः पार्श्ववर्त्ती भूत्वा रहस्यं वर्णयामि ।

[एवमुक्त्वा पार्श्ववर्त्तित्वसम्पादनाय राधाया उरसि वक्षोजपरिसरे पाणिम् आधित्सति न्यस्तुमिच्छति ।]

एवं कर्त्तुमुद्यतं कृष्णं पुनः स्वप्रभावं स्मारयति ललिता दुर्लभेति — दुर्लभे फले ( विषयसप्तमी ) हठिल्ल आग्रहग्रहिल ! ललितायाः पुरतः भुवनप्राणः वायुः गन्धवाहः अपि राधायाः स्तनाम्बरस्य कुचाच्छादनवस्त्रस्य कञ्चुलिकायाः अञ्चलं कोणस्तस्य स्पर्शनं कर्त्तुं न प्रभवति समर्थः स्यात् । अत्र वायोः कृते – भुवनप्राणेन समस्तभूतजीवनत्वमतः सर्वापेक्षित्वं, गन्धवाहस्य गन्धं गृहीत्वा सर्वतः सर्वत्र सञ्चारशीलत्वमबाधगतित्वं व्याप्यते । अतोऽत्र कञ्चुलिकादेशे हस्तं निक्षेप्तुं कृतः अध्यवसायः प्रयत्नो येन सः, तस्य तव परिणामे मुग्धत्वं मूढत्वं वृथायत्नकारित्वमेव पर्यवस्यति फलिष्यति । गन्धं वाहयति प्रसारयतीति गन्धवाहः पवनः ।

---

अपेक्षा मत करना । इसलिये मैं पास आकर तुम्हें रहस्य बताता हूँ ।

( ऐसा कहकर वक्षःस्थल पर हाथ धरने की इच्छा करते हैं )

ललिता — दुर्लभ फल के बारे में हठ करने वाले ! ललिता के समक्ष जगत् का जीवनदाता वायु भी राधा की चोली का कोना छू लेने के लिये समर्थ नहीं है। इस पर हाथ फेरने का प्रयास करना तुम्हारी मूर्खता ही सिद्ध होगी ।

---

payment of toll-tax. I shall tell you the secret of it, standing close by.

( *proceeds to lay his hand on the breast of Rādhā* )

LALITĀ : You, obstinate for an unattainable fruit ! in the presence of Lalitā, even the Wind, who is the life-breath of the world, cannot dare touch even the fringe of Rādhā's bodice. That you are intent upon putting your hand there only shows your silliness.

---

1. वि ( = अपि ) — इत्यधिकः पाठः क्वचित् ।

कृष्ण — कृष्णकुण्डलिनश्चण्डि कृतं घट्टनयानया ।
फूत्कृतिक्रिययाप्यस्य भवितासि विमोहिता ॥८८॥

ललिता — ( संस्कृतेन ) कृत विभीषिकया, यतः

विलसति सुसिद्धमन्त्रे मन्त्रितमतिराहितुण्डिकी ललिता ।
सुकरं मूर्द्धोन्नमनं न जिह्मगस्यात्र कृष्णस्य ॥ ८९ ॥

---

कृष्ण आत्मनि भुजगत्वमारोप्य तस्य फूत्कारमात्रेण ललिताप्रभावोऽस्त यास्यतीति प्रतिपादयति **कृष्णेति** — हे चण्डि कोपने ललिते ! कृष्णरूपस्य कुण्डलिन (अत्र सम्बन्धसामान्ये षष्ठी विषयार्थे) विषये अनया घट्टनया कम्पनया कृतमलम् — मा तावदात्मनि सविशेष विश्वसिहि – तत्र हेतुमाह — अस्य कृष्णसर्पस्य फूत्कृतिक्रियया अपि दंश स्पर्शो वा दूर आस्ताम्, केवल फूत्कारस्य श्वासोत्क्षेपणस्य व्यापारमात्रेण त्व विमोहिता मूर्च्छिता ( पक्षे आसक्ता ) भवितासि ( अत्र लुट् ) ।

पूर्ववाक्य प्रत्युत्तरवाक्यस्य हेतुत्वादत्र काव्यलिङ्गमलङ्कार । कुण्डलिन कृष्णे आरोपाद्रूपकम् । कृष्ण काल मुकुन्दश्चेत्यर्थद्वयबोधात् श्लेषालङ्कारश्च — कृष्णसर्पस्तु विशेषतो दारुण अत कृष्णरूपी कालसर्प एवेति ताद्रूप्यव्यञ्जनात् भुजगस्य च लम्पटार्थबोधकत्वम् । 'नया नया'-इति वृत्त्यनुप्रास, उत्तरार्धे प फ भ मानां सन्निवेशात् श्रुत्यनुप्रास । गुणरीति पूर्ववत् । अनुष्टुब्वृत्तम् ॥८८॥

ललिता भुजगनियन्त्रीति सर्पशक्तेस्तत्र गारुडविद्याप्रभावाद् व्यर्थता स्थापयति **विलसतीति** — आहितुण्डिकी सर्पग्राहिणी विषवैद्या सुतरा विधिवदभ्यासेन सिद्धे मन्त्रे गारुडे मन्त्रितमति. कृतश्रमा विलसति, अत अत्र ललितासमक्ष कृष्णस्य कालस्य जिह्मगस्य कुटिलगते सर्पस्य ( पक्षे जिह्मगस्य वक्रगामिन कामिन कृष्णस्य ) मूर्द्धोन्नमनं

---

**कृष्ण** — कोपने ! कृष्ण रूपी भुजङ्ग ( सर्प, विलासी ) के बारे में ऐसी कल्पना व्यर्थ है, इसके फूँक देने मात्र से भी तुम मूर्छित ( मोहित ) हो जाओगी ॥८८॥

**ललिता** — ( संस्कृत के माध्यम से ) डराना व्यर्थ है, क्योंकि —
पूर्ण सफल मन्त्र ( गारुडी विद्या ) का पूरी लगन के साथ अभ्यास की

---

KRṢNA 88 Tar tempered woman ! enough of this stirring of the black snake Even his hissing will render you lose your senses ( *by double entendre* Passionate woman, enough of stirring up of Krsna decked with ear-rings His very whisper will make you fall in love with him )

LALITĀ ( *In Sanskrit* ) Have done with the bug-bear For,

88 Here shines Lalitā, the snake conjuror who has mastered the snake-charming spell of proved efficacy

कृष्णः — नान्दीमुखि ! घट्टाधिकारिणामभिरूपायामप्यनृतवृत्तौ पराङ्मुखी मे दक्षिणस्य रसना, पाणिश्च हठचेष्टायां पृष्ठदायी, तदत्र किन्दूषणमासां रामाणां विप्रतिपत्तौ ?

ललिता — ( सनर्मस्मितम् संस्कृतेन )

**मिथ्या जल्पतु ते कथं नु रसना साध्वीसहस्रस्य या**
**विम्बोष्ठामृतसेवनादघरिपो पुण्या प्रयत्नादभूत् ।**

---

फणाटोपः ( पक्षे शिरसः उत्तम्भनम् ) न सुकरम् , – किमु फूत्कारः। अत्रापि पूर्ववाक्यस्योत्तरार्धं प्रति हेतुत्वात्काव्यलिङ्गम् , जिह्मग-कृष्णेति पदयोः श्लेषः। गुणरीति पूर्ववत्। अत्र आर्या जातिः ॥८८॥

कृष्ण आत्मनः शालीनतां ख्यापयति नान्दीमुखीं सम्बोधयन् **घट्टेति** — घट्टस्याधिकारे वर्तमानानां कर्मचारिणाम् अभिरूपायां अत्यन्तं प्रसिद्धायाम् अनृतवृत्तौ मिथ्याव्यवहारे दक्षिणस्य शालीनस्य मे रसना जिह्वा पराङ्मुखी, पाणिश्च हठचेष्टायां बलात्करणे पृष्ठदायी विमुख एव। यद्यपि मिथ्याव्यवहारः प्रसह्य हरणञ्च शुल्काधिकारिणां सहजा वृत्तिस्तथापि दाक्षिण्यवशादहं ततः पराङ्मुखः। तदत्र एतासां रामाणां रमणीनां विप्रतिपत्तौ अन्यथा ग्रहणे धृष्टत्वे किं दूषणम् न किमपीत्याशयः।

कृष्णस्य दाक्षिण्यं हठचेष्टाहीनत्वं प्रत्याख्याति ललिता सोपहासम् **मिथ्येति** — हे कृष्ण सत्यं न त्वमनृतवादी भवितुं शक्तः, यतः तव रसना कथं मिथ्या जल्पतु यदिदं

---

हुई, सर्पग्राहिणी ललिता उपस्थित है, यहां काले कुटिल भुजङ्ग का सिर उठाना ( फटाटोप दिखाना ) आसान नहीं है ॥ ८९ ॥

**कृष्ण —** नान्दीमुखि ! घाट के अधिकारियों के अनुरूप झूठ के व्यवहार से मुझ जैसे सरल जन की जिह्वा विमुख है, हाथ ने भी बलात्कार से मुँह मोड़ लिया है । ऐसी स्थिति में अन्यथा समझ लेने (अर्थात् ढीठ होने ) में इन रमणियों का क्या दोष है ?

**ललिता —** ( परिहास करते हुए — संस्कृत के माध्यम से )

बड़े प्रयत्न पूर्वक सहस्रों पतिव्रताओं के अधरामृतपान से जो पवित्र हुई

---

It is, therefore, not easy for the crookedly creeping cobra to lift his hood here.

KRṢṆA : Nāndīmukhī ! though false conduct is quite in keeping with the character of toll-gate officers, my *tongue*, because of my complaisance, is averse to it; and my hand turns away from violent action. How can these beautiful belles be blamed for their present perverseness (since they got emboldened by my softness) ?

LALITĀ : (*sportingly smiling*)

90. How can your tongue tell lies, as your tongue has

कस्मादेव[1] बलात्करोतु च करः सोढुं क्षमः सुभ्रुवां
रक्तः सुष्ठु न नीविबन्धमपि यः का वान्यबन्धे कथा ॥९०॥

कृष्ण — (विशिद्विहस्य) ललिते ! सत्यं भवत्यः कृतपुण्यपुञ्जानां

---

प्रभवेन। हे अघरिपो ! अघनामकस्य दैत्यस्य हन्त', परस्य अघाना पापाना नाशयित'। या तव रसना साध्वीसहस्रस्य बिम्बोष्ठामृतसेवनादधरपानात् महता प्रयत्नेन पुण्या अभूत् परश्च यस्तव करः बलात् करोतु, पाठभेदे करस्य उत्कोच चौर्येण ग्रहण तत्कर्तुं शील' यस्य स सुभ्रुवा नीविबन्ध वस्त्रग्रन्थिरूपबन्धनमपि सोढु न क्षम स तव कर अन्येषां बन्धाना विषये क्य सहनशीलो भवेत् न क्वचिदपि। अत्र नाह नानृतवादी इत्यस्य उत्तररूपेण सत्य त्व न, यत क्य त्व मिथ्या वदेः यस्य जिह्वा सहस्रसतीनां अधरपानात पवित्रीकृता, न क्दापीति सोल्लुण्ठोक्तिर्विपरीतार्थबोधिनी, एवमेव नाह हठचेष्टा करोमीत्यस्य प्रत्युत्तरे सत्य त्व कथमेव कुर्या यस्य हस्तो बलात्कारादाने पटु सन् ललनाना वस्त्रग्रन्थिकृत बन्धनं न सहेत तदाऽन्यबन्धस्य तु कथैव का ? अत्र वक्रोक्त्या व्याजस्तुतिरेवालङ्कार निन्दापर्यवसायी। सोत्प्रासवचन नर्मकारि। अघरिपो – इति सम्बोधन मार्मिक साभिप्रायश्च। अत्र प्रसादो गुण, वैदर्भी रीति, उक्तिवैचित्र्यञ्च। शार्दूलविक्रीडितं वृत्तम् ॥९०॥

नर्मणामुना मुदित कृष्ण विहस्य ललिता सम्बोद्धय नान्दीमुख्या पुनरुपस्थितिं सूचयन् तस्या माध्यस्थ्येन कलह शाम्येतेति विश्वासात् अभिनन्दति **सत्यमिति** — भवत्य कृतानि पुण्यानां पुञ्जानि याभिस्तादृशीनां भाग्यवतीनां शिरोमणय अग्रगण्या',

---

तुम जैसे पाप के दुश्मन [ > अघहन्ता कृष्ण ] की जिह्वा भला झूठ क्यों न बोले, [ > हे अघरिपो ! तुम्हारी जिह्वा झूठ कैसे बोल सकती है, जो महस्रों पतिव्रताओं के बड़े प्रयत्नपूर्वक अधरामृतपान से पवित्र हुई है ) । रमणियों के प्रति अति आसक्त यह हाथ जबर्दस्ती क्योंकर करे, जब वह उनकी नीवी का बन्ध भी नहीं सहन कर सकता, तो अन्य बन्धन की बात ही क्या ? ॥९०॥

कृष्ण — (जरा सा मुस्करा कर) ललिते ! सच में आप लोग पुण्यराशि रमणियों की शिरोमणि हैं, जिनके सौभाग्य रूपी सिद्ध औषधि द्वारा खिंची हुई,

---

become virtuous with efforts by enjoying the nectar of red lips of thousands of saintly women ? And how can this hand of yours employ force ( *for detaining women against toll tax* ), for, your hand, being extremely fond of them, is incapable of tolerating even the bondage in the *form of the knot of their Saries* ( = *garments* ) not to speak of any other bondage ?

KRSNA — (*slightly laughing*) Lalitā ! you are at the top of those who are possessed of acquired merit, drawn by the

---

[1] कस्मादेव – इति पाठान्तरम्।

शिरोमणयः यासां भागधेयसिद्धौषधिनाकृष्टा भगवत्याः पारिपार्श्विकी नान्दीमुखीयं प्रत्युपस्थिता ।

ललिता — णंदिमुहि, भअवदीपाएहिं सावित्तासि, तुरिअं इदो दुरिहोहि, पेक्खम्ह किं एस अम्हाणं करेदि । [ नान्दीमुखि ! भगवतीपादैः शापितासि, त्वरितमितो दूरीभव, प्रेक्षामहे किमेष अस्माकं करोति । ]

नान्दीमुखी — ललिदे, महासंकडं एदं तुम्हाणं जं हठिल्ल-चक्कवट्टिणो हत्थे पडिदाओ त्थ, ता एत्थ समए परिच्चाओ ण क्खु सिणेहस्स अणुरूपो ।

---

यासां भागधेयम् सुदैवं तदेव सिद्धौषधिराकर्षणमन्त्रः तेन आकृष्टा इयं भगवत्याः पौर्णमास्याः पारिपार्श्विकी सदा पार्श्वे वर्त्तमाना नान्दीमुखी प्रत्युपस्थिता पुनरिहैवागता ।

अत्र नान्दीमुख्या गमनं प्रत्यागमनञ्च नास्त्यधर्मितया नैव सूचिते, अतः प्रत्युपस्थाने दूरान्तिकयोस्तारतम्यमेव हेतुरवगन्तव्यः । कृष्णस्तावन्नान्दीमुख्याः प्रत्युपगमनेन नन्दितः, यत इदानीं सा कृष्णपक्षपातिनी सती घटयित्री स्वाभीष्टसंयोगस्य, मध्यस्थताञ्च कृत्वा एता अनुनेष्यतीति ।

तस्या मध्यस्थतामसहमाना ललिता नान्दीमुखीं भर्त्सयन्ती दूरे प्रजितुमाह **नान्दीमुखीति** — भगवतीपादैः पूज्यैः पौर्णमासीचरणैः शापितासि शपथत्वेन गृहाण । त्वरितञ्च इतः दूरीभव अपसर मा मध्ये तिष्ठ, प्रेक्षामहे किमेष अस्माकं करोति इति ।

कार्यसाधिका नान्दीमुखी कथमपेयात् इत्याह **ललित इति** — सम्प्रति महासङ्कटं महद् व्यसनमुपस्थितं युष्माकं कृते यतः यूयं हठिल्लचक्रवर्त्तिनां महिलानां

---

भगवती पौर्णमासी की सतत सेवा में सलग्न यह नान्दीमुखी यहां आ पहुँची है ।

ललिता — नान्दीमुखि ! भगवती पौर्णमासी के चरणों की तुम्हें शपथ है, तुम यहां से शीघ्र हट जाओ । देखती हैं, ये हम लोगों का क्या कर लेते हैं ।

नान्दीमुखी— ललिते ! तुम लोगों के लिये यह महा सङ्कट है जो कि हठिलों के सम्राट के हाथ आ पड़ी हो, इस आपत्काल में तुम्हें यहां छोड़ना स्नेह के

---

supernatural herb of your good fortune, Nāndīmukhī, the associate of Her Grace is standing here firm by you.

LALITĀ : Nāndīmukhī ! you are put to oath in the name of revered Paurṇamāsī – go away from here at once. Let us see what he will do to us.

NĀNDĪMUKHĪ : Lalitā, now that you have fallen in the hands of these obstinate ringleaders, a great calamity has

[ ललिते ! महासङ्कटमेतद्युष्माकं यद्वाटिकाचक्रवर्तिनो हस्ते पतिताः स्थ, तदत्र समये परित्यागो न खलु स्नेहानुरूप । ]

अर्जुन — प्पिअवअस्स, जाओ प्पगब्भाओ सुलक्के विप्पडिज्जति ताओ तुण्णं अम्हे पुरदो आणिज्जदु त्ति ओज्जाणचक्कवट्टिणो सासणं कहं तुए विसुमरिदं ? [ प्रियवयस्य ! या प्रगल्भा शुल्के विप्रतिपद्यन्ते तास्तूर्णमस्मत्पुरत आनीयन्तामित्युद्यानचक्रवर्तिनश्शासन कथ त्वया विस्मृतम् ? ]

कृष्णः — ( हर्षमभिनीय ) साधु स्मारितमर्जुनेन । हन्त ललिते ! सखायो मे सख्यश्च ते घट्टमेवाधितिष्ठन्तु, त्वन्तु मया सार्द्धमेकाकिनी स्वय प्रस्थाय

---

हस्ते पतिता स्थ, अत विपदि वर्तमानासु भवतीषु मया सख्या इतो दूरे गमन भवती व्यसनकाले परित्याग· भवतीषु यो मम स्नेहस्तस्यानुरूप न खलु भवेन्मया तु स्नेह-पारवश्याद्युष्माक साहाय्य करणीयमेव ।

अन्तराले सवादवशादुच्छिन्न बीज सयोक्तुमर्जुन पुन प्रकृतप्रसङ्गमुत्थापयति **प्रियवयस्येति** — कथमुद्यानचक्रवर्तिन शासनमादेशस्त्वया विस्मृतम् ? किं तदित्याह— "या शुल्के प्रगल्भा धृष्टा अदाने बद्धाग्रहा विप्रतिपद्यन्ते विवदन्ति ता तूर्णम् अस्मत्पुरत आनीयन्तां ताभ्य शुल्को ग्राह्य एव । व्यञ्जनया बोध्यते यत् या शुल्क-विषयेऽङ्गदानव्यापारे निधुवनप्रसङ्गे प्रगल्भा दृढा वर सम्भोगक्षमा प्रतीयेरन् ता शीघ्रमस्मत्सविधे उपस्थापयेति ।

कृष्ण अर्जुन साधु स्मारणायाभिनन्द्य तथा पुर सर्तुं ललितां नोदयति **हन्तेति** — मे सखायो मधुमङ्गलादय ते सख्य विशाखाप्रभृतय । घट्टमित्यत्र द्वितीया । त्व तु मया सह एकाकिनी सखीभिर्विना स्वय निष्कुटस्य उद्यानस्य चक्रवर्तिनोऽधीशस्य

---

अनुरूप तो नहीं है।

**अर्जुन** — प्रिय मित्र ! "जो चुगी न देने के प्रति दुराग्रह करती हों, उन्हें तुम लोग शीघ्र मेरे समक्ष ले आओ" — उद्यान चक्रवर्ती के इस आदेश को तुम कैसे भूल गये ?

**कृष्ण** — ( हर्ष का अभिनय करते हुए ) अर्जुन ने अच्छा स्मरण कराया, हाँ !! ललिते ! मेरे सभी सखा और तुम्हारी सभी सहेलियाँ चौकी पर ही रुकें,

---

befallen you To desert you at such a time does not behove friendship

ARJUNA Dear friend ! how is it that you have forgotten the order of the master of this garden that the bold women who oppose paying the toll-tax should immediately be produced before him

KRSNA ( *gesticulating joy* ) I am well reminded of it by Arjuna Ah Lalitā ! my friends and your friends will stay over here itself. You alone will voluntarily go with me to

निष्कुटचक्रवर्तिनः सुष्ठु गोष्ठीगङ्गावगाहेन खेलय निजलोचनमीनयोर्मिथुनम् ।

ललिता—धम्मधुरीण, ताए च्चेअ कुलंगणाए अप्पणो दोओलं रक्खिदं जाए पुण्यसिलोअमओलिणा तुए सद्धं एकाकिणीए णिज्जणे [ण] चलिदं ।
[धर्मधुरीण ! तयैव कुलाङ्गनयात्मनो द्विकुलं रक्षितं यया पुण्यश्लोकमौलिना त्वया सार्द्धमेकाकिन्या निर्जने [न] चलितम् ।]

कृष्णः—किं वानया क्षेपिष्ठे घट्टकर्मणि दीर्घसूत्रताप्रस्तावनया, प्रसह्य तरसा शुल्कमेवाङ्गीकरवाणि ।

---

गोष्ठीगङ्गावगाहेन संलापप्रवाहमज्जनेन निजे लोचने एव मीनौ तयोः युगलं खेलय क्रीडय । अत्र परम्परितरूपकालङ्कारः, गोष्ठ्यां गङ्गात्वापादने एव नयनमीनयोस्तत्र क्रीडाप्रसङ्गात् ।

ललिता साक्षेपमाह धर्मधुरीणेति—धर्मस्य धूस्तस्याः वहने साधो इति धार्मिकप्रवर ! इति सोल्लुण्ठा वक्रोक्तिः । तयैव कुलाङ्गनया साध्व्या स्त्रिया द्विकुलं कुलद्वयं पितृकुलं भर्तृकुलञ्च रक्षितं कौलीनाद् यया पुण्यश्लोकमौलिना सदाचारनिष्ठानां शिरोमणिना त्वया सार्द्धं सह एकाकिन्या एकलया निर्जने [न] चलितम् । केवलं कुलपांसुला एव त्वया सह गच्छेत् न तु साध्वी । धर्मधुरीण–पुण्यश्लोकादिपदयोः विपरीतलक्षणा वक्रोक्तिपराऽत्रानुसन्धेया ।

पुनः स्वं प्रस्तावं विफलं मत्वा कृष्णः शुल्कादानरटनमावर्त्तयति किमिति—किमिति व्यर्थतासूचकम् । क्षेपिष्ठे आशुकरणीये साधीयसि घट्टकर्मणि शुल्कग्रहणव्यापारे दीर्घसूत्रताया मनोविचारमात्रस्य अकर्मण्यत्वस्य प्रस्तावनया भूमिकामात्रेण, अतः प्रसह्य बलात् तरसा वेगेन साहसिकेन शुल्कं स्वयमेव अङ्गीकरवाणि

---

और तुम अकेली मेरे साथ स्वयं चल कर उद्यान चक्रवर्ती के वार्त्तालाप की गङ्गा में गोता लगा, अपने नयन रूपी मछली के जोड़े को खेल लेने दो ।

ललिता — धर्मधुरन्धर ! वही पतिव्रता अपने दोनों कुल ( पितृ-कुल, पति-कुल ) की मर्यादा बचा सकती है, जो सच्चरित्रों के शिरोमणि आप के साथ अकेली एकान्त में चली [न] जाय ।

कृष्ण — शीघ्र करणीय चौकी की चुंगी वाले कार्य में काम को मन्थर गति से

---

the master of this pleasure-grove where the pair of your eyefish (piscene eyes) may enjoy a plunge in the Gaṅgā of the master's charming chat.

LALITĀ : The foremost among the devouts ! that respectable woman alone has protected the honour of both the families of hers – her father's and her husband's – who has [not] gone alone into a lonely place with you, a well-spoken of gentleman.

KṚṢṆA : Or what is the use of this preliminary, involving dilatory

( इति राधामुपसाधयति[1] )

ललिता — ( सोल्लुण्ठ विहस्य ) हन्त, सोम्म सुउमार, अत्तणो णेत्तचत्तरे राहिआतनुप्फससाहसिअदा तुअम्मि वट्टदि त्ति सव्वधा अम्हाण [ > ण ] पत्तिआएदि[2], एसा ललिदात्ति पसिद्धा सिद्धाणुसासणा वह्नइ ता पेक्खिदु किदकोदूहला चिट्ठेदि, सुट्ठु वित्थारेहि अप्पणो विक्कमसव्वस्स। [ हन्त, सौम्य, सुकुमार ! आत्मनो नेत्रचत्वरे राधिकातनुस्पर्शसाहसिकता त्वयि वर्त्तते इति सर्वथा न [न] प्रतीयते[2], एषा ललितेति प्रसिद्धा सिद्धानुशासना बह्वी तत्प्रेक्षितु कृतकौतूहला तिष्ठति। सुष्ठु विस्तारयात्मनो विक्रमसर्वस्वम्। ]

---

आत्मसात् कुर्याम् — इति वदन् राधामुपसाधयति उपगच्छति।

एतादृश साहसिक्य वीक्ष्य कृष्णस्य, ललिता सोल्लुण्ठमुपहसन्ती तमाह हन्तेति— सौम्य सुकुमारेति सम्बोधनद्वय सोत्प्रासमेव, सौम्यति साहसविरोधि, सुकुमारेति विक्रमातिरेक-विरोधि विशेषणम्। आत्मान नेनचत्वरे अस्मत्समक्ष राधिकाया तनुस्पर्शस्य गात्रग्रहणस्य साहसिकता त्वयि सौम्ये सुकुमारे वर्त्तत इति सवथा न प्रत्येति विश्वासमुपपादयति। अत एषा ललितेति कठोरेति प्रसिद्धा सिद्धानुशासना प्रमाणितमनुशासन नियन्त्रण यस्यास्तादृशी बल्वी गोपी तत् तव साहसिक्य प्रेक्षितु कृतकुतूहला उपजातोत्सुक्या तिष्ठति वर्त्तते। अत सुष्ठु प्रभूत आत्मन विक्रमस्य प्रागल्भ्यस्य सवस्वमतिशय विस्तारय।

---

करने वाली प्रवृत्ति की यह भूमिका व्यर्थ ही है। अत शक्ति क प्रयोग द्वारा चटपट चुगी स्वय ही ले लें। ( राधा के निकट हो जाते हैं )

ललिता — (व्यङ्ग्यपूर्वक हँसती हुई ) सौम्य, सुकुमार ! मेरे समक्ष राधिका का देह छूने की हिम्मत तुम में है, ऐसा कभी विश्वास नहीं हो रहा है। सफल नियन्त्रण करने वाली, ललिता नाम से विख्यात यह गोपी वही सब देखने के लिये बड़ी उत्सुकता से खड़ी है। अपनी पूरी बहादुरी का विस्तार कर लो।

---

process in carrying out the work of the toll station which demands quick disposol ? I shall exact simply the tax quickly *from this woman*

LALITĀ ( *tauntingly laughing* ) Ah ! mild young man ! it cannot be believed that you have the boldness to touch the body of Rādhā within the range of my eyes This strict disciplinarian cowherdess, known as Lalitā, is standing here anxious to see that Display all your *valour in full*

---

1 'उपसादयति' – इति पाठान्तरम्।

2 'अम्हाण पत्तिआएदि' –इत्यत्र ' ण पत्तिआएदि ( न प्रत्येति )' – इति पाठान्तरम्।

कृष्णः — ( किञ्चिद्विहस्य ) नमस्तुभ्यं महाचण्डि ! चामुण्डे ! नमस्तुभ्यं, नूनं मुण्डमालाख्यमात्मनो मण्डनं विमुच्य दुर्वारमारसंहाराय गोपिकारूपेण उपस्थितासि ।

विशाखा — सहि ललिदे, विजइणी होहि । [सखि, ललिते ! विजयिनी भव ।]

ललिता — ( स्मितं कृत्वा, स्वगतम् ) किदं सुट्ठु संलावविलसिदं, ता दोण्णं अहिट्ठामिअपूरस्स ओगाहणे तित्थं आरंहिस्सं । ( प्रकाशम् ) विसाहे,

---

कृष्णोऽपि तथैवोपहसन् ललितां सम्बोधयति **नम इति** — हे महाचण्डि अतिकोपिनि दुर्गारूपिणि ! तुभ्यं नमः, नूनं निश्चयेन मुण्डमालाख्यं आत्मनो मण्डनमाभूषणं विहाय अधुना दुर्वारस्य अनतिक्रमणीयस्य मारस्य कामदेवस्य संहाराय गोपिका भूत्वा उपस्थिता । चण्डिकायाश्चामुण्डादेव्या मुण्डमालायाः भूषणमस्तीति प्रसिद्धिः; सा असुरयोः सुन्दोपसुन्दयोः संहारं कृत्वा मुण्डमालां धृतवतीति पुराणवार्ता । इदानीं असुरसंहारकृत्यं विहाय सैव चण्डी त्वं प्रबलस्य मनोभवस्य संहाराय गोपिकारूपं धृत्वा ललिता भूत्वा अत्र उपस्थितेति सोपहासं वचः । अत्र "नमस्तुभ्यं महाचण्डि !" इत्यस्य गद्यांशस्य वृत्तगन्धिता ।

विशाखा ललितां प्रोत्साहयति सखि ! विजयिनी मारमर्दने सफला भवेति ।

इदानीं ललिताऽपि पक्षपरिवर्तनं कर्तुकामा मनसि चिन्तयति **कृतमिति** — संलापविलसितं परस्परं वाकोवाक्यप्रयोगात्मकं विलसितं नर्म सुष्ठु कृतम् बहु कृतम् —

---

कृष्ण — (कुछ मुस्करा कर) अतिकोपने ! तुम्हें नमस्कार, दुर्गारूपिणि ! तुम्हें नमस्कार, निश्चित ही अपने मुण्डमाल आभूषण को छोड़, दुरतिक्रमणीय कामदेव के संहार के लिये तुम गोपी रूप में प्रकट हुई हो ।

विशाखा — सखि, ललिते ! विजयिनी बनो ।

ललिता — (मुस्करा कर, मन ही मन) वार्तालाप का आनन्द तो बहुत ले लिया, अब दोनों ( राधा-माधव ) के अभीष्ट रूपी अमृत सरोवर में गोता

---

KṚṢṆA : ( *laughing a little* ) Great fierce woman ! I bow to you terrific *Cāmuṇḍā* ( = horrific goddess Durgā ), I bow to you. Sure enough, casting your ornament of a wreath of chopped heads, you have come here in the form of a cowherdess to kill the irresistible God of Love.

VIŚĀKHĀ : Friend Lalitā, be victorious.

LALITĀ : ( *smiling, to herself* ) No more of indulgence in the play of this conversation. I should now like to assume the

तत्थ गदुअ णिवेदेहि, भअवदीं अम्हाण धाढं एदं विडबणं । [कृत मुग्ध सलापविलसितम्, तद्द्वयोरभीष्टामृतपूरस्यावगाहने तीर्थमारप्ये। (प्रकाशम्) विशाखे ! तत्र गत्वा निवेदय भगवतीम् — अस्माकं धाढमिदं विडम्बनम् ।]

नान्दीमुखी — (स्वगतम्) एसा भअवदी माहवीमंडवंदुरिदा पेक्खंती सव्वं सुणादि। (प्रकाशम्) ललिदे, भअवदी क्खु गोवलेसरीए पासे वट्टेदि । [एषा भगवती माधवीमण्डपान्तरिता प्रेक्षमाणा सर्वं शृणोति। (प्रकाशम्) ललिते ! भगवती खलु गोकुलेश्वर्या पार्श्वे वर्तते ।]

राधा — (सपरिहास विहस्य, जनान्तिकम्) हला ललिदे, अप्पणो वि

---

अल तेन । अत परं द्वयोरमित्यो राधामाधवयोरभीप्सिताभिविषयेऽन्तरायरूप परित्यज्य अभीष्टमेवामृत तस्य पूरे प्रवाहेऽवगाहने तीर्थं घट्टरूपमवतरणस्थानतामारप्स्ये । इदानीमह घटयामि कार्यमेतयो — इत्यन प्राप्त्याशा नाम कार्यावस्था व्याप्यते ।

प्रकाश सर्वश्राव्यत्वेनाह विशाखा **तत्रेति** — भगवत्या आवास गत्वा अस्माकं धाढ सातिशय विडम्बन दुरवस्था निवेदय सूचय, यन सा अस्मान् सरक्षिष्यतीति ।

विदितवृत्तान्ता नान्दीमुखा स्वगतमाह **एषेति** — अत्रैव भगवती पौर्णमासी माधवीलताया मण्डपे अन्तरिता प्रच्छन्ना भूत्वा सर्वं वृत्त प्रेक्षमाणा सलाप शृणोति । [प्रकाशमाह **ललित इति** —] भगवती गोकुलेश्वर्या राधाया पार्श्वे वर्तते इति ।

राधा जनान्तिक सम्बोडथमान जन विहाय तत्रोपस्थितैरन्यैरश्राव्य यथा

---

लगाने के लिये में धाट जैसी बन जाती हूँ। (प्रकट रूप से) विशाखे ! वहां जाकर भगवती पौर्णमासी से हम लोगों की दुर्दान्त दुर्दशा का निवेदन कर दो ।

नान्दीमुखी— (मन ही मन) यहीं माधवी लता के कुञ्ज में छुप कर देखती हुई भगवती सब कुछ सुन रही हैं, (समक्ष) ललिते ! भगवती इस समय गोकुलेश्वरी के पास हैं ।

राधा — (विनोद के साथ हँस कर) हला, ललिते ! हम लोगों पर तुम्हारा अपने

---

rôle of a bathing place (*tirtha*) to facilitate this yearning couple to have a dip in the stream of the nectar of their passion (*aloud*) Viśākhā ! please go and inform revered Paurṇamāsī about the sad mortification of ours

NĀNDĪMUKHĪ (*to herself*) Here revered Paurṇamāsī, seeing from behind the bower of the *Mādhavī* creeper is listening to everything (*aloud*) Lalitā ! her holiness is by the side of Gokuleśvarī (*Rādhā*)

RĀDHĀ (*laughing humorously, aside*) Friend Lalitā ! your friend-

भूइट्ठो अम्हेसु तुम्ह सिणेहो अज्ज च्चेअ सुठ्ठु पच्चक्खीकिदो जं घट्टआलदो जादं अम्हाणं जादणं, तत्थ अप्पसमप्पणेण मोआविदुं ओवक्कमंदी तुमं इक्खिदेण[1] लक्खीअदि, ता धण्णासि। [हला ललिते! आत्मनोऽपि भूयिष्ठोऽस्मासु युष्मत्स्नेहः अद्यैव सुष्ठु प्रत्यक्षीकृतो यद् घट्टपालतो जातामस्माकं यातनां तत्रात्मसमर्पणेन मोचयितुमुपक्रमन्ती त्वमीक्षितेन[1] लक्ष्यसे, तद्धन्यासि।]

ललिता — अयि सूरव्वदे इस्सुदे[2], असमबाणीसमरंमि च्चेअ सच्चं कुसलं ह्मि, तुमं उण असमबाणसमरंमि जं पुणो पुणो दिट्ठ-पुरिसआर-सोट्ठव्व-सारासि, ता प्पसीद, कडक्खजिम्हणबाणेण णं महावीरमण्णं जिह्मअंदी क्खणं एत्थ चिट्ठ, अह्मे थोअं अग्गदो गदुअ पडिवालेम्ह तुमं। [अयि सूर्यव्रते कविश्रुते! असमवाणीसमरे एव सत्यं कुशलास्मि, त्वं पुनरसमबाणसमरे, यत् पुनः पुनर्दृष्ट-

स्यात्तथाऽऽह हलेति — आत्मनस्तव स्वापेक्षया अपि अस्मासु भूयिष्ठः प्रचुरः युष्मत्स्नेहः अद्यैव सुष्ठु सम्यक् प्रत्यक्षीकृतः दृष्टः यत् घट्टपालतः (पञ्चम्यर्थे तसिल्) जातामस्माकं यातनां त्रासं तत्र आत्मसमर्पणेन मोचयितुम् उपक्रमं कुर्वती त्वम् ईक्षितेन दृष्टिमात्रेण इङ्गितेन चेष्टया वा लक्ष्यसे। धन्या साधुवादार्हा असि। अत्रापि विपरीतार्थे लक्षणा।

आत्मसमर्पणचर्चां लक्ष्यीकृत्य स्वस्यानुपयुक्ततां तत्र दर्शयन्ती ललिताऽऽह अयीति — सूर्यव्रते सूर्योपासिके कविश्रुते ख्याते राधे! असमा विषमा परुषा या वाणी तस्याः समरे वाक्कलहे एव सत्यं कुशला असि, त्वं पुनस्तु असमाः विषमाः पञ्च बाणाः यस्य सः कामः तस्य समरे रतिरणे। यतः पुनः पुनः भूयशः दृष्टं पुरुषकारः पुरुषार्थः पुरुषप्रयोजनसाधकव्यापारे सौष्ठवं शोभनता एव सारं बलं यस्याः सा तादृशी असि, तत्

---

से भी अधिक स्नेह आज ही अच्छी तरह देखा गया है, जो कि चौकी के अध्यक्ष द्वारा उत्पन्न की गई हमारी दुर्दशा में आत्मसमर्पण द्वारा हमें मुक्ति दिलाने की योजना बनाती हुई तुम प्रत्यक्ष दिखाई दे रही हो। इसलिये तुम धन्य हो।

ललिता — अरी सूर्योपासिके, बहु विश्रुते राधे! अटपटे वाक्कलह में ही मैं सचमुच निपुण हूँ, परन्तु तुम रति युद्ध में। कारण, पौरुष के कामों में तुम्हारा

---

ship with me, which is in a higher degree than what it is with yourself, is very well demonstrated only to day; *for, as your gesture indicates, you are ready to release us from the torments inflicted on us by the tollgate chief by offering yourself indeed.* Blessed you are!

LALITĀ: Ah renowned as the only heliolater! I am really an expert only in a battle of odd words; but you, in the

---

1. इंगिदेण — इति पाठान्तरम्। 2. कविविस्सुदे इति पाठभेदः।

पुरुषकारसौष्ठवमसि। तत् प्रसीद, कटाक्षजृम्भणबाणेनैनं महावीरम्मन्यं जृम्भयन्ती क्षणमत्र तिष्ठ। वयं स्तोकमग्रतो गत्वा प्रतिपालयामस्त्वाम्।]

राधा — (सप्रणयाम्यसूयम्) अवेहि अप्पणो आआर-संगोवणेकदक्खे! अवेहि, दाणि च्चेअ पेक्खिस्से। [अपेहि, आत्मन आकारसङ्गोपनैकदक्षे! अपेहि, इदानीमेव प्रेक्षिष्ये।]

कृष्णः – (स्वगतम्) सम्प्रति मन्थरित[1]चण्डिमेव संलक्ष्यते ललिता (प्रकाशम्) साधु साधु ललिते! समयाभिज्ञासि यदद्य मुधा विवादघटां

त्वमेव प्रसीद ऋज्वी भव, परञ्च कटाक्षजृम्भणं अपाङ्गक्षेपणम् एव बाण. तेनैव एनं आत्मानं महावीरं मन्यमान जृम्भयन्ती विस्फारयन्ती क्षणमत्रैव तिष्ठ, वयं स्तोकं किञ्चिदग्रतो गत्वा त्वां प्रतिपालयामः त्वदागमनं प्रतीक्षामहे।

राधा सस्नेहमसूयापूर्वकञ्च ललितामाह अपेहीति — अपसर, आत्मनः आकारस्य सङ्गोपने प्रच्छादने एकदक्षे नितरां चतुरे! अपेहि – त्वमेव साधयितुमीहसे स्वमनोरथं, हार्दं गोपायसे – इदानींमेव सपदि प्रेक्षिष्ये किन्त्वङ्करोषीति।

ललिताया मार्दवं वीक्ष्य कृष्णः स्वगतं मन्यते सम्प्रतीति — इदानीं ललिता मया जरित· शमितः अथवा मन्थरितः श्लथ. चण्डिमा कोपनता यस्यास्तादृशीव लक्ष्यते। प्रकाशमाह ललितां प्रोत्साहयन् कृष्ण· **साधु इति** – अयि ललिते! साधु साधु (वीप्साया द्विरुक्ति·)

परम कौशल सम्पन्न बल कई बार देखा जा चुका है। इसलिये अनुकूल हो जाओ। बड़े बहादुर बनने वाले इसे कटाक्ष विस्तार रूपी बाण के द्वारा अपनी शान को दिखाती हुई तुम क्षण भर यहाँ रुको। हम सब थोड़ा आगे चल कर तुम्हारी प्रतीक्षा कर रही हैं।

राधा — (स्नेहिल रोष प्रकट करती हुई) अपने रूप को छिपाने में प्रवीण! जाओ, दूर हटो, अभी मैं देख लेती हूँ।

कृष्ण — (मन ही मन) इस समय ललिता का रोष हम पर शिथिल सा दिखाई पड़ रहा है। (स्पष्ट) बहुत बहुत धन्यवाद, ललिते! समयोचित व्यवहार

battle of Cupid For you have that elegance of manly prowess so well established So please stand here for a while, charming this self-styled great hero with the arrows of your extended side-glances We shall go ahead a little and await you there

RĀDHĀ · (*in affectionate anger*) Get away, you expert only in hiding your mind, get away. I'll see just now.

KRSNA : (*to himself*) At present Lalitā looks as though her wrath has been mitigated. (*aloud*) Lalitā! you

1. मथरित (> मजरित) – इति पाठान्तरम्।

विघटय्य घट्टमधितिष्ठसि ।

ललिता — खलकेलीछइल्ल[1] एसो हठिल्लदालगुडीमेत्त ओट्ठंभणो[2] बल्लवाणं गणो विअ ण क्खु सारग्गाहिणीणं बल्लवीणं गणो। [ खलकेलिविदग्ध ! एष हठिलतालगुडीमात्रावष्टम्भनो बल्लवानां गण इव न खलु सारग्राहिणीनां बल्लवीनां गणः। ]

विशाखा — ( सम्भ्रममभिनीय ) ललिदे ! महाप्पमाओ, महाप्पमाओ ।
[ ललिते ! महाप्रमादो महाप्रमादः। ]

---

यतस्त्वं समयाभिज्ञा कालोचितव्यवहारनिपुणा ( पक्षे समयः संवित् राधोपलम्भसाहाय्यकरूपस्तस्य अभिज्ञा स्मरणशीला ) असि, अतः अद्य मुधा निरर्थको यो विवादस्तस्य घटा परम्परा तां विघटय्य भित्वा घट्टमधितिष्ठसि तत्रैव स्थातुमुपक्रमसे, शीघ्रमेव स्थास्यसीति — वर्त्तमानसामीप्ये भविष्यति अर्थे लट् ।

कृष्णस्य स्वार्थानुसन्धानपरं वचः श्रुत्वा तमधिक्षिपति ललिता खलकेलीति — खलानाम् असज्जनानां याः केलयः क्रीडाः निम्नवृत्तयस्तासु विदग्ध ! एष त्वत्समक्षं वर्त्तमानः सारग्राहिणीनां तुच्छेतरवस्तुग्रहणशीलानां बल्लवीनां गोपिकानां गणः ( युष्मादृशां ) हठिलता एकत्र बद्धाग्रहः सा एव लगुडी यष्टिः तावन्मात्रमेव अवष्टम्भनं संश्रयः यस्य तादृशः बल्लवानां गणः गोपवृन्द इव नास्ति । न वयं फल्गुनि वस्तुनि बद्धादरा भवादृशा इवेत्यधिक्षेपः । गाश्चारयन्तो गोपा भूतलनिखातां लगुडीमुपरि स्वहनुर्निधाय तिष्ठन्तो विश्राम्यन्तीति तेषां निसर्गमुद्दिश्यात्र नर्मोक्तिः । छलकेलीति पाठे कपटपूर्णाः केलय इत्यर्थः ।

अत्रान्तरे विषयान्तरमुपस्थापयन्ती सम्भ्रममिव प्रदर्शयन्ती विशाखा ललितामाकुलयति महाप्रमाद इति — विशङ्कटं महद्वा स्खलितं जातमिति ।

---

में तुम बड़ी निपुण हो, क्योंकि व्यर्थ विवाद का क्रम तोड़ कर इस समय घाट पर ही रुक रही हो।

ललिता — कपटी विनोद में विदग्ध ! मुख्य वस्तु ग्राहिणी गोपियों का यह मण्डल हठीलेपन की छड़ी मात्र के सहारे टिकनेवाले ग्वालों की टोली जैसा नहीं है।

विशाखा — ( घबराहट का अभिनय करती हुई ) ललिते ! महान् अनर्थ हो गया, महान् !

---

understand the exigencies of time. That is why you have broken the chain of this vain controversy and decided to stay at the toll-station.

LALITĀ : Expert in cunning sports ! the community of cowherdesses, who understand the essence of things is not like that of cowherds whose only resort is the club of force (obstinacy).

VIŚĀKHĀ : (*gesticulating hurry*) Lalitā ! a great inadvertence, indeed.

---

1. छलकेलिछइल्ल इति पाठान्तरम्। 2. 'बहुहस्ते' - इति पाठभेदः।

ललिता — कीदिसो एसो ? [ कीदृश एषः ? ]

विशाखा — अइ कलहलोलुहदा-विह्मारिदधम्मे विरमेहि, तेहिं जण्णिएहिं संदिसिअ पेसिदं अम्हाणं जं हवणिज्जं हेअंगवीणं हरंतीहिं तुम्हेहिं कुलंअणाणं कुलकण्णआणं वा दूसणआरीणिम्मि कामजणिम्मि दिट्ठिक्खेवो वि सव्वथा ण कादव्वो । ( इति नासिकाग्रे तर्जनीमासज्य ) हद्धि हद्धि, तुए पुण उम्मद्वाये मोहेण मोहं जेव्व जपंतीए वच्छआल'वअणं वि संविस्सिदं[2] । [ अयि कलहलोलुपताविस्मारितधर्मे ! विरम, तैर्याज्ञिकैः संदिश्य प्रेषितमस्माकं यद्धवनीयं हैयङ्गवीनं हरन्तीभिर्युष्माभिः कुलाङ्गनानां कुलकन्यकानां वा दूषणकारिणि कामिजने दृष्टिक्षेपोऽपि सर्वथा न कर्त्तव्यः । ( इति नासिकाग्रे तर्जनीमासज्य ) हा धिक्, हा धिक्, त्वया पुनरुन्मत्तया मोहेन मोघमेव जल्पन्त्या वत्सपालवचनमपि संविस्मृतम् । ]

किमसाविति पृच्छायां ललिता विज्ञापयति विशाखा **अयीति** — कलहः परस्परं यो विवादस्तस्मिन् लोलुपता सविशेषाभिरुचिस्तया विस्मारितः धर्मः कर्त्तव्यं यस्याः तादृशि अयि ललिते ! विरम, अस्मात् विवादात् । तैः याज्ञिकैः ऋत्विग्भिः सन्दिश्य सम्यगुपदिश्य यथाऽऽचरणीयं प्रेषितमस्माकं याज्ञिकानां ( कर्त्तरि षष्ठी ) यद् हवनीयं हवने प्रयोज्यं हैयङ्गवीनं हरन्तीभिः यज्ञवाटं नयन्तीभिः युष्माभिः कुलाङ्गनानां प्रौढस्त्रीणां कुलकन्यकानां बालानामभिजातानां दूषणकारिणि सदाचारभ्रंशकारिणि कामिजने लम्पटेषु दृष्टिक्षेपोऽपि दूरे तावत्स्पर्शादिकं सर्वथा मनागपि न कर्त्तव्यः — एवं वदन्ती नासिकाग्रे तर्जनीं संयोज्य जुगुप्सां व्यञ्जयन्ती पुनराह **हा धिगिति** वीप्सायां द्विर्वचनम् । एवं व्यवस्थायां सत्यामपि समादिष्टायां त्वया पुनः तु ( तद्विरोधे ) उन्मत्तया ( भूत्वा ) मोहेन स्मृतिभ्रंशेन मोघमेव निरर्थकमेव जल्पन्त्या विवदन्त्या वत्सपालवचनं गोपेश्वरस्यादेशः "त्वरितं नवनीतं विनीतभावेन प्रापय यज्ञस्थलीम्" — इत्यपि विस्मृतम् । "बहुकालं वचनं सम्मिश्रितम्"—इति पाठे त्वया प्रभूतं समयं यावत् संवादः कृतः — इत्यर्थः ।

---

ललिता — कौन सा अनर्थ ?

विशाखा — विवाद में अभिरुचि रख कर कर्त्तव्य को भूल जानेवाली ! अब तो रहने दो । उन याज्ञिकों द्वारा खूब समझा बुझाकर निर्देश किया गया है कि हवन के लिये हमारा नवनीत लाते समय तुम लोग सत्कुलीन नारियों और अभिजात कन्याओं को दूषित करने वाले कामी पुरुषों पर

---

LALITĀ : What's it ?

VIŚĀKHĀ : Ah ! stop, you have forgotten the duty in your fondness for quarrelling. Directions were sent to us as a message by the sacrificing priests that such of the cowherdesses as carry fresh butter meant for the sacrifice should nowise even cast a glance on the lustful men who

---

1. बहुआल°— ( = बहुकालं वचनम् ) इति पाठान्तरम् ।
2. संमीसिद ( = सम्मिश्रितम् ) — इति पाठभेदः ।

ललिता — (विषादमभिनीय) विसाहे ! सुट्ठु कधेसि, सव्वं मुद्धाए मए विसुमारिदं। ता चिंतेहि एत्थ किं पि णिक्किदम् । [विशाखे ! सुष्ठु कथयसि, सर्वं मुग्धया मया विस्मृतम्, तच्चिन्तयात्र किमपि निष्कृतम्।]

वृन्दा — (विहस्य) यत्तु[1] पुरुषस्य विष्णोरनुस्मरणमेव मुनयः सर्व्वाघविध्वंसनं व्याहरन्ति, ततः स्मर्यतामसौ ।

स्वप्रमादमनुभवन्ती विषादं प्रकटयन्ती ललिता प्राह **विशाख इति** — सुष्ठु तथ्यं कथयसि । गाङ्गिकैः वत्सपालेन च यन्निर्दिष्टं तत्सर्वं मुग्धया मूढया मया विस्मृतम् । तत् अत्रास्मिन् प्रमादविषये किमपि निष्कृतं शमनोपायं प्रायश्चित्तं चिन्तय येनाहमपराधान्मुक्ता स्यामिति ।

अत्रान्तरे वृन्दा सोपहासं भणति **यत्तु इति** — यत्तु कृतेऽपराधे मुनयः पुरुषस्य कृते सर्वाघविध्वंसनं सकलपापनाशनं विष्णोरनुस्मरणं बहुशो नामोच्चारणमेव व्याहरन्ति निर्दिशन्ति, अतः असौ विष्णुरेव स्मर्यताम् ।

---

दृष्टिक्षेप भी कतई न करना। (नाक के अग्र भाग पर तर्जनी अंगुली रखकर) बड़ी बुरी बात है — मोह में पड़कर, उन्मत्त हो, व्यर्थ की ही बात में उलझी हुई गोपेश्वर की बात को तो तुम बिलकुल भूल गई [ > बातचीत में बहुत समय बिता दिया है ]।

ललिता — (खेद प्रकट करती हुई) विशाखे ! ठीक कह रही हो, मूढमति मैं सब कुछ भूल गई, तो अब इसका कुछ प्रायश्चित्त सोचा जाय ।

वृन्दा — (हँसकर) अपराध हो जाने पर परम पुरुष [ > यज्ञ पुरुष ] विष्णु का नामस्मरण ही मुनियों ने समस्त पापों का नाशक कहा है, तो विष्णु का ही स्मरण करो।

---

would pollute the noble women and maidens. (*with her forefinger fixed on the tip of her nose*) Shame, shame ! you, on the other hand, out of silliness, prattling in vain out of infatuation forgot even the words of the king of cowherds (*v.l.* have long indulged in gossips).

LALITĀ : (*gesticulating regret*) Viśākhā ! what you say is correct. A fool that I am, I forgot everything. Now, think of some expiation for it.

VṚNDĀ : (*laughing*) Sages declare that repeated recitation of the name of Viṣṇu, the great *Puruṣa* (or Yajña-puruṣa = the chief deity presiding over sacrifices) destroys all sins. So He be remembered.

---

1. यज्ञ-इति पाठान्तरम्।

( ललिता विष्णुं कीर्तयन्ती नासिकामभिस्पृश्य कर्णं स्पृशति )

**कृष्ण** — ( सस्मितम् ) ललिते ! सत्यं विदूषितासि, तदत्र तरसा सन्निधेहि, सद्य एव दोषास्पृष्टां करवाणि भवतीम् । ( इत्यनुसृत्य भुजाश्लेषं नाटयति )

**ललिता** — ( ससाध्वसमपसृत्य, सनिर्वेदमिव ) हन्त हन्त पर कलत्तमिलाअण-विलाससाहसीएण कुलबालिआइं[1] फंसने दूसिदम्हि । [ हन्त, हन्त ! परकलत्रम्लापनविलाससाहसिकेन कुलबालिकाद्द स्पर्शेन दूषितास्मि । ]

---

इत्युक्त्या सत्यां ललिता विष्णुं बहुश कीर्तयन्ती नासिकां स्पृष्ट्वा कर्णं स्पृशति । नासिकाकर्णस्य स्पर्शं अनुतापस्य गमकः इति लोकाचार' ।

इमा प्रक्रियां वीक्ष्य प्रमुदित कृष्ण स्मितपूर्वं ललितां बभाषे **सत्यमिति** — सत्यमेव त्वं विदूषिता विशेषेण दूषिता पक्षे विगतदोषा विष्णो स्मरणाज्जाता । अतस्तरसा द्रुतं सन्निधेहि मम पार्श्वं त्वमुपस्थिता भव येन सद्य एव तत्कालमेव त्वां दोषास्पृष्टां दोषेण अस्पृष्टा विगतपापा पक्षे दोषा भुजेन स्पृष्टाम् आलिङ्गितां करवाणि कुर्याम् । अत्र प्रार्थनायामेव लोट् । एव ब्रुवन् अनुसृत्य तां भुजाश्लेष नाटयति कृष्ण. ।

ततो भीता ललिता अपसृत्य दूरङ्गता निर्वेदेन समाक्रान्ता इव ( न तु वस्तुतः ) कृष्णमुद्दिश्याह **हन्तेति** – सम्भ्रमे वीप्सायां द्विरुक्ति । परकलत्रस्य म्लापन धर्षणं तज्जन्य तदेव वा यो विलास तस्मिन्साहसिकेन त्वया कुलबालिकाद्द स्पर्शेन दूषिता भ्रष्टतां नीताऽस्मि ।

---

( ललिता विष्णु, विष्णु कहती हुई नाक छूकर कान पकड़ती है । )

**कृष्ण** — ( मुस्कराते हुए ) ललिते ! सचमुच बहुत कलुषित हो गई हो, [ > दोष विगत हो गये हैं ] इसलिये मेरे पास जल्दी आओ, तुरन्त ही तुम्हें दोषमुक्त कर दूँ [ > भुजपाश में आबद्ध कर लूँ ] ।

( पास जाकर बाहु फैलाने का अभिनय करते हैं )

**ललिता** — ( भयभीत हो, दूर हट कर खेद प्रकट करती हुई सी ) बड़ा दु ख है, पराई नारियों के मर्दन द्वारा मनोविनोद करने वाले साहसी के सम्पर्क से कुलीन बालिका मैं कलुषित हो गई हूँ ।

---

( *Lalitā repeatedly reciting, "Viṣṇu, Viṣṇu" touches her nose and ears* )

**KṚṢṆA :** ( *smiling* ) Lalitā ! you are, indeed, defiled, So come here at once I shall render you undefiled ( = purify ) instantly. ( > hold you in my arms )

( *draws near and gesticulates an embrace* ).

**LALITĀ :** ( *horrified — withdrawing in sheer disgust* ) Oh ! a high-born maiden in me has been defiled by the touch of this desperado who makes himself merry in fouling others' women !

---

1. 'कुलवालिआणं' – इति क्वचित्पाठः ।

**राधा** — ( स्मितं कृत्वा ) ललिदे, अह्म संघादो तुण्णं अवेहि, जं रदहिंडअ-फ्फंस-कलंकिदासि । [ ललिते ! अस्मत्सङ्घात्तूर्णमपेहि, यद्रतहिण्डक-स्पर्शकलङ्कितासि । ]

**ललिता** — अइ, विणोदं कुणंतीए अलिअं क्षेअ एदं भणिदं मए, कुदो मादिसीए पइव्वदासिहंडिणीए फ्फंसमहासाहसे एसो भुअभुअंगमो उत्थादुं[1] प्पहवेदु ? [ अयि ! विनोदं कुर्वत्यालीकमेवेदं भणितं मया, कुतो मादृश्याः पतिव्रताशिखण्डिन्याः स्पर्शमहासाहसे एष भुजभुजङ्गमः स्थातुं प्रभवतु ? ]

---

एवं जातभ्रंशां ललितां त्याज्यां घोषयन्ती राधा प्राह **ललित इति** – अस्मत्-सङ्घात् अस्माकं साहचर्यात् तूर्णमविलम्बमपेहि यत् रतं हिण्डते असौ तस्य रतहिण्डकस्य परनारीलम्पटस्य स्पर्शेन कलङ्किता दूषिता त्वमसि ।

राधिकोक्तं वितथयितुमाह ललिता **अयीति** — राधे ! विनोदं परिहासं कुर्वत्या मया अलीकं मिथ्यैव एतत् भणितम् । कुतः मादृश्याः पतिव्रताशिखण्डिन्याः पतिव्रतासु मूर्ध्नि स्थितायाः पक्षे शिखण्डिनी मयूरी पतिव्रतासु मयूरी इव तस्याः स्पर्शः एव महासाहसः घातकत्वात्, तस्मिन् कर्मणि एष कृष्णस्य भुजः भुजङ्गमः विलासी इव पक्षे भुज एव भुजङ्गमः सर्पः उत्थातुं प्रवर्त्तितुं पक्षे फणामुन्नमयितुं प्रभवतु शक्तो भवेत् । मयूरभुजङ्गयोः निसर्गवैरम् । मयूरस्सर्पं हन्तीति कारणात् कथं नाम मयूर्याः मम सम्मुखं भुजङ्गः स्थातुं समर्थः न कदापीति भावः । पूर्वत्र पतिव्रताधर्षणे न लम्पटस्य साहसः इति भावः । अत्र रूपकमलङ्कारः ।

---

**राधा** — (मुस्करा कर) ललिते ! हमारी मण्डली से शीघ्र ही तुम दूर हो जाओ, क्योंकि लम्पट के स्पर्श से तुम दूषित हो गई हो ।

**ललिता** — अयि राधे ! परिहास में मैंने झूठमूठ ही यह कह दिया था । मुझ जैसी पतिव्रता शिरोमणि [ > मयूरी ] को छूने के महासाहस के लिए यह विलासी भुजा [ > बाहुरूप सर्प ] उठने का दुःसाहस कहाँ कर सकती है ।

---

**RĀDHĀ** : (*smiling*) Lalitā ! get away at once from our company ; for, you are defiled by the touch of a lewd person.

**LALITĀ** : Friend ! it was only indulging in humour that a lie was told by me. How can this serpentine arm ( > gallant paramour ) rise up for the great venture of touching a peahen ( > a person like me, the crest of the chaste women — a *Śikhaṇḍinī* ) ?

---

1. '[illegible]' – इति पाठभेदः ।

राधा — अइ, असच्चभासिणि, विण्णादं विण्णादं, चिट्ठ चिट्ठ, किद-ब्भुत्थाणाइं तुह तणूरुहाइं चेअ सक्खित्तणं[1] तण्णति। [अयि, असत्यभाषिणि! विज्ञातं विज्ञातं, तिष्ठ तिष्ठ, कृताभ्युत्थानानि तव तनूरुहाण्येव साक्षित्वं तन्वन्ति।]

ललिता — रअणारिअ, सुठ्ठु क्खु कहिदम्हि[2] जं तुए दूसिदं मं सहीओ ण पफंसति, अदो न दुःखं पञ्चभिः सहेत्ति भणिदी जधा प्पहडिहोदि तधा करेहि। [रतनारीक! सुष्ठु खलु कथितास्मि, यत्त्वया दूषिता मां सख्यो न स्पृशन्ति, अतो "न दुःखं पञ्चभिः सह" इति भणितिर्यथा प्रकटीभवति तथा कुरु।]

---

ललिताया अपलापं प्रत्याख्यान्ती राधा ब्रूते अयीति — असत्यभाषिणि मिथ्यावादिनि! विज्ञातं, तिष्ठ मिथ्यावादाद्विरम (यत) कृताभ्युत्थानानि उद्धितानि तव तनूरुहाणि लोमानि एव साक्षित्वं प्रियस्पर्शं प्रमापयितुं तन्वन्ति वहन्ति। रोमहर्षस्तु सात्त्विको भावः। प्रियस्पर्शे जाते पुलकिता तवेयं तनूः इति वरमनुमापयति। इत्याक्षेपः। अत्र रोमोद्गमरूपाल्लिङ्गाल्लिङ्गिनः प्रियसङ्गमस्य बोधादनुमानालङ्कारः।

एवं निरुत्तरतां नीता ललिता कृष्णायैव कुप्यन्ती प्राह रतनारीकेति — सुष्ठु खलु कथितास्मि वाच्यतां नीताऽस्मि यत्त्वया (स्पर्शेन) दूषितां मां सख्यो न स्पृशन्ति, क्षुभितास्मीति पाठे सखीभिः परित्यज्येयेति सुष्ठु क्षोभकारणं मे इति भावः। अत एव मत्सदृश्यः एवैता अपि यथा स्युः तथा कुरु, यत आभाणकोऽयं यत् पञ्चभिर्जनैः सह दुःखं विभक्तं सत् न पीडयति। अत्र पञ्च एवैताः सख्यस्तासु एकला चेदहमेव एवं कृता तदा तन्मां दुःखाकरोति, अत एव एता अपि तथैव त्वद्भुजाश्लेषसम्पृक्ताः कुरु येन मामेता न दूषयेयुः।

---

राधा — झूठ बोलनेवाली! मैं तुम्हें खूब समझ गई, रहने दो। तुम्हारे शरीर पर उद्गत रोमाञ्च ही प्रमाणित कर रहे हैं।

ललिता — लम्पट! सच ही तो कही जा रही हूँ, [ > सचमुच मुझे बड़ा क्षोभ है ] तुम्हारे द्वारा कलुषित की जाने पर मुझे सखियाँ नहीं छू रही हैं, इस लिये "पञ्च के साथ दुःख नहीं" (=पञ्च लिये किये काज, हारे जीते नाहीं लाज) यह कहावत जैसे चरितार्थ हो, वही करो।

---

RĀDHĀ Ah lier! I have fully understood you. Wait, your very *hair that have stood up on their ends betray you*.

LALITĀ Lascivious fellow! I am rightly called names [ > very much grieved ], now that my friends donot any longer touch me who am defiled by you, therefore, so act that the saying, "*No sorrow in the company of five*" becomes true (i.e. defile the other four also).

---

1 'सक्खित्तण, (सक्खित्तणं)' – इति पाठान्तरे। 2 क्खुहिदम्हि (क्षुभितास्मि) – इति पाठभेदः।

**कृष्णः** — चम्पकलते ! पयोधरोल्लेखिदीर्घशाखो[1] ह्ययं तमालस्तदेन-मालम्ब्य परिफुल्ला भव ।

**चम्पकलता** — ( सकम्पं किञ्चिदपसृत्य ) छइल्ल, पुणो वि ललिदं ज्जेव मिलाणं करेहि जं 'न शयानः पतत्यधः' त्ति वअणं सुणीअदि । [ विदग्ध ! पुनरपि ललितामेव म्लानां कुरु यत् 'न शयानः पतत्यधः' इति वचनं श्रूयते । ]

---

एवं प्रणोदितः कृष्णः प्रथमं चम्पकलतामाह्वयति **पयोधरेति** — पयोधरान् मेघानुल्लिखति कषत्यसौ पयोधरोल्लेखी मेघस्पृक् गगनचुम्बी, दीर्घशाखः विस्तृताः शाखाः विटपा यस्य तादृशो हि अयं तमालवृक्षः, अतः हे चम्पकलते ! एनं तमालमालम्ब्य परिफुल्ला भव । लता निसर्गतस्तरुविलम्बिन्यो भवन्ति, तदाश्रयं प्राप्य ताः नूनं प्रसरन्ति विकसन्ति च । समासोक्त्या तमालस्य नीलत्वात् तेनाध्यवसितः कृष्णो बोध्यते । दीर्घशाखः दीर्घबाहुः, शाखा पदेऽध्यवसानाद्भुजरूपोऽर्थो गम्यते; एवमेव पयोधरौ प्रेयस्याः कुचौ उल्लिखति उत्किरत्यसौ, दीर्घे शाखे यस्य तादृशोऽयं तमालवत्कृष्णस्तदेनमालम्ब्य समाश्लिष्य परिफुल्ला प्रमुदिता भवेत्यर्थः । तमालशाखेति पदयोः विषययोः कृष्णभुजयोः विषयिणि निगरणात्साध्यवसानाऽतिशयोक्तिरलङ्कारः पयोधरपदे श्लेषेण सम्भिन्नः; चम्पकलतातमालयोः नायिकानायकव्यवहारसमारोपात् समासोक्तिरलङ्कारश्च । एतेषां मिथः सापेक्षत्वात्सङ्करा-लङ्कारश्च ।

कामुकस्य कृष्णस्योपसर्पणमाशङ्क्य चम्पकलता भयात्सकम्पं किञ्चिदपसरति । अत्र भयाख्यस्य भावस्य कम्पः सात्त्विको भावोऽपसरणमनुभावस्तौ त्रासं व्यंक्तः । एवं भाविता सा ब्रूते **विदग्धेति** — [ मा मां धर्षय ] उपगूहनेच्छैव चेत् त्वां बाधते ललितामेव पुनरपि म्लानां मृदितां कुरु यत एकदा भ्रष्टायाः पुनर्भ्रंशस्य भीर्नास्ति । गच्छँस्तिष्ठन्वा जनः पतितो भवेत् किन्तु शयानस्य न कदापि पतनभयम् – पतितायाः पुनः पतनं किम्भवेत् "न शयानः पतत्यधः" इति वचनमाभाणकं श्रूयते ।

---

कृष्ण — चम्पकलते ! मेघचुम्बी, बहुपल्लवशोभी यह तमाल तरु है, इसका आश्रय लेकर प्रफुल्लित होओ, [ > कुचों पर नखक्षत देने वाले दीर्घ भुजा वाले ( तमालवत् ) श्याम का आश्रय लेकर खिल उठो ]।

चम्पकलता — ( कम्पित हो, कुछ हटकर ) ए छबीले ! फिर से तुम ललिता का ही मर्दन करो, क्योंकि 'सोया हुआ नीचे नहीं गिरता' — यह कहावत प्रसिद्ध है ।

---

KṚṢṆA : Campakalatā ! here is the *Tamāla* tree with tall branches scraping the clouds; resort to it and be bloomed. ( > here is Kṛṣṇa with tall arms scraping the breasts, *resort to him and be happy.* )

CAMPAKALATĀ : ( *withdrawing in tremor* ) Libertine ! defile only Lalitā again; for it is well said, "the one who is lying does not fall down".

---

1. "दीर्घशोभी" – इत्यन्यत्र पाठः ।

**ललिता** — अवि णाम प्पिअसहीं विसाहं कठिणोरुपंचसाहोवसोहिदं अइरादो पेक्खिस्सं । [अपि नाम प्रियसखीं विशाखां कठिनोरुपञ्चशाखोपशोभितामचिरात् प्रेक्षिष्ये । ]

**कृष्ण** — विशाखिके ! तरुणालिङ्गिता सुच्छाया भव, तदितश्चम्पकलतेव मा भङ्गमुपयासीः ।

**विशाखा** — (तूर्णमपसर्पन्ती) कलंकिणी ललिदे, कथं 'विदूषयति

---

समाखादितश्यामोपगूहनरसा ललिता "स्वसखी विशाखा क्दा नु तादृक्सौभाग्यसम्पन्ना स्यादिति" कामयमाना तदेवाशसति **अपि नामेति** — अपि वितर्के, नाम वाक्यालङ्कारे । प्रियसखीं विशाखां कठिन उरु पञ्चशाख कर (अङ्गङ्गिभावेन नखा लक्ष्यन्ते) तेनोपशोभिता मण्डिता नखक्षतै अचिरात् प्रेक्षिष्ये । अत्र सम्भावितेऽर्थे भविष्यति लट् ।

ललितया एवमुद्बोधित कृष्ण विशाखा प्रोत्साहयति मा त्व चम्पकलतेव प्रत्यादिश्य मत्प्रस्ताव शोभया प्रमोदेन वञ्चिता भूया । परिरभस्व मामित्युद्दिश्य तां सम्बोधयति **विशाखिक इति** -- अत्र प्रणयगमक स्वल्पार्थे कन् । तरुणा तमालेन आलिङ्गिता त्व सुच्छाया शोभनच्छायावती भव । पक्षे तरुणेन मया आलिङ्गिता सुतरां छाया शोभा यस्यास्तादृशी शोभातिशयशालिनी भव । तदित चम्पकलतेव मा भङ्गमुपयासी वैमुख्य दधाना सुखविशेषेण वञ्चिता भव । अत्र श्लेषालङ्कार ।

ललितैव सर्वा सखी कृष्णव्यूहपतिताश्चिकीर्षतीति विज्ञाय तस्यै कुप्यन्ती विशाखा ललितां भर्त्सयति **कलङ्किनीति** — स्वय कलङ्क दधती अया अपि कलङ्केन

---

**ललिता** — क्या मैं, अपनी प्रिय सखी विशाखा को जल्दी ही भरपूर, लम्बी लम्बी कठोर पाँचों अँगुलियों से सुशोभित देख सकूँगी ?

**कृष्ण** — विशाखिके ! वृक्ष का सहारा लेकर सुन्दर छाया में प्रसन्न होओ, [ > तरुण के आलिङ्गन से देदीप्यमान बनो ]। चम्पकलता की तरह इससे तुम वञ्चित न होना ।

**विशाखा** — (हड़बड़ा कर हटती हुई) कलङ्किनि ललिते ! 'अपने तो निर्लज्ज और

---

LALITĀ Would that I soon see my dear friend, Visākhā decorated with the marks of five long, stiff fingers !

KRSNA Visākhikā ! embrace this *Tamāla* tree and have plenty of shade ( > enjoy an embrace with this *tamāla*-like youth and be brilliant ). Do not deprive yourself of this pleasure like Campakalatā

VIŚĀKHĀ Lalitā ! what for do you intend proving the validity of

निर्लज्जः स्वयं दुष्टः परानपि' त्ति वअणं प्पमाणं कादुं पउत्तासि ? ता सुप्पअडं ज्जेव्व दे आउदम्, अलं अलिएण विलक्खणभाएण। दिट्ठिआ चिंदाउलासु अम्हेसु अतक्किदं सुलुक्कस्स जोग्गा किदासि तुमं देव्वेण।

[ कलङ्किनि, ललिते ! कथं 'विदूषयति निर्लज्जः स्वयं दुष्टः परानपि' इति वचनं प्रमाणं कर्तुं प्रवृत्तासि ? तत् सुप्रकटमेव ते आकूतम्, अलमलीकेन विलक्षणभावेन। दिष्ट्या चिन्ताकुलास्वस्मास्वतर्कितं शुल्कस्य योग्या कृतासि त्वं देवेन। ]

( ललिता किञ्चिदपसृत्य तं प्रेक्ष्य दृगञ्चलं कुञ्चयति[1] )

कृष्णः — ( स्मित्वा राधां दिधीर्षन् ) विलोलाक्षि ! ललितालोचन[2]भङ्गी-

योजयन्ती तत्सम्मुखौ हे कलङ्किनि पापे ! "स्वयं दुष्टः दोषभाजनः निर्लज्जः स्वकृतापराधमवगणय्य वर्त्तमानः परानपि स्वसदृशान् कर्त्तुं विदूषयति तादृशि दोषे पातयति" – इति वचनं अभियुक्तोक्तिं प्रमाणं तथ्यमेवेति कर्त्तुं त्वं प्रवृत्ता समुद्यता असि। एतादृक् ते आकूतमभिप्रायः सुप्रकटमेव। अमुना तव अलीकेन मिथ्याप्रवृत्तेन विलक्षणभावेन विचित्राभिलापेण अथवा विगतम् लक्षणं सौशील्यादिकं यत्र तादृशेन भावेन व्यवहारेण अलम्। दिष्ट्या सौभाग्यवशात् शुल्कापाकरणविषये चिन्ताकुलासु सखीषु त्वं देवेन कृष्णेन संयोगेन वा शुल्कस्य योग्या शुल्कार्थेऽर्पणीया कृता, अतस्त्वमेव निर्विशङ्केति भावः। इत्युक्त्वा दृगञ्चलं कुञ्चयति कटाक्षयति नयनकोणं चालयतीत्यर्थः। कूणयति - इति पाठे सङ्कोचयत इत्यर्थः।

सर्वा एता अपहाय राधाबद्धलालसः कृष्णः राधां दिधीर्षन् धर्त्तुमिच्छन् तां

---

पतित, दूसरे को भी कलङ्कित करे' इस कहावत को चरितार्थ करने के लिये क्यों उद्यत हुई हो। तुम्हारा अभिप्राय तो बड़ा साफ़ है। इस झूठमूठ के विलक्षण दिखावे को रहने दो। चुंगी देने की चिन्ता में व्यग्र हम लोगों के भाग्य से ही अचिन्तित रूप में तुम्हें भगवान् ने चुंगी के योग्य मान लिया।

( ललिता कुछ दूर हट कर उन्हें देख कर आँख का कोना दबाती है )

कृष्ण — (मुस्करा कर, राधा को धरने की इच्छा से) विलोलाक्षि ! ललिता के

---

the saying that "one who is shameless and wicked spoils others as well"? Your intention is clear enough. Enough of this false appearance. Fortunately, while we are worrying ourselves, suddenly you have been made a good substitute for toll-tax by the lord.

*( Withdrawing a bit, Lalitā looks at Kṛṣṇa and contracts the ends of her eyes )*

KṚṢṆA : *( smiling, desirous of holding Rādhā )* Madam of rolling

---

1. "कूणयति" - इति पाठान्तरम्। 2. "लापन" - इति पाठभेदः।

वात्यया वाढमान्दोलितपाणिपल्लवोऽहमस्मि, तदद्य नारोपय सभ्ये[1] मयि साभ्यसूयं चक्षुः ।

**राधा** — ( ससाध्वस विशाखामनुसरन्ती ) सहि ! परित्ताहि अत्ताणं जेअ, जं राहाए मालिण्णे विसाहा मलिणा भणीअदि । [ सखि ! परित्रायस्वात्मानमेव, यद्राधाया मालिन्ये विशाखा मलिना भण्यते । ]

**ललिता** — अइ गंधव्विए, धुत्तमउलिणा लुद्धजणेण[2] अणुद्दुदा तुमं

---

निर्दिशति **विलोलाङ्गि इति** — भावोद्रेकाद्विलोलानि स्फुरन्ति अङ्गानि यस्यास्तादृशि ! ललितालापनस्य ललितया सार्धं सवादस्य [ ललितालोचनेति पाठे ललितायाः अपाङ्गवीक्षणस्य ] भङ्गी चातुरी एव वात्या वातभ्रमिस्तया बाढं सविशेषम् आन्दोलित पाणि पल्लव इव यस्य स परिस्फुरत्करो वक्षोजग्रहणाय सञ्जातोऽस्मि । अत्र औत्कण्ठ्यातिशयो व्यज्यते । तदद्य अद्यैवेत्यर्थ । अत सभ्ये नागरे मयि सर्वथा समाश्लेषयोग्ये साभ्यसूय चक्षु भत्यादेशवीक्षण न [ मा ] आरोपय प्रेरय । मह्य माऽसूय, मत्प्रस्ताव मुदाऽनुमोदस्वेति प्रार्थनायां लोट् ।

ससाध्वस प्रसह्य धर्षणाद्भयमाविष्कुर्वती राधा विशाखामनुसरन्ती रक्षितुमभ्यर्थ्यमाना विशाखा याचते **सखीति** — [ मत्परित्राणेन ] आत्मानमेव परित्रायस्व परिरक्ष, यत मयि धर्षिताया दूषिताया वा विशाखा एव दूषितेति मन्यते – अत आह राधाया मालिन्ये कलङ्कस्पर्शे विशाखा मलिना भण्यते, सखिभावात्तादात्म्यसिद्धे ।

विशाखा स्वयमेव भीरु कथमस्या परिरक्षितु प्रभवेदित्याक्षिपन्ती ललिता प्राह

---

सवाद ( पाठभेदे — ललिता के कटाक्षपात ) की चातुरी रूपी बवण्डर ने मेरे कर किसलय को एकदम विचलित कर दिया है, अब तो अतिसरल मुझ पर ईर्ष्या भरे नयन न चलाओ ।

**राधा** — ( घबरा कर विशाखा के पीछे होती हुई ) सखि ! अपने आप को ही ( = अपनी ही समझ कर मुझे ) बचाओ, क्योंकि राधा के दूषित होने पर विशाखा ही कलुषित हुई, ऐसा कहा जायगा ।

**ललिता** — अयि गान्धर्विके ( राधे ) ! धूर्तों के शिरोमणि, लुटेरे से पीछा की जाती

---

eyes ! the sprouts of my hands are stirred by the whirlwind of Lalitā's crooked eyes So please do not fix your angry eyes upon a gentleman (*sabhya*) [ > enjoyable person (*in case of ramya*) ] in me

RĀDHĀ (*moving behind Visākhā in terror*) protect yourself by protecting me, for, if Rādhā is defiled, Visākhā is said to be defiled

LALITĀ Ah Rādhā ! when pursued by this craftiest robber,

1. "रम्ये" – इति क्वचित्पाठः । 2. "लुब्धेन ( = लुब्धकेन ) – इति पाठभेद ।

फीसणं पंचमुहीं मुक्किय एक्कां कुरंगिआं सरणं गच्छसि ? ता मह अंगं अलंकरेहि, तुरिअं संकाउलो भविअ पलाएदु एसो । [ अयि, गान्धर्विके ! धूर्त्तमौलिना लुब्धजनेनानुद्रुता त्वं कस्मादेनां पञ्चमुखीम्मुक्त्वैकां कुरङ्गिकां शरणं गच्छसि ? तन्ममाङ्कमलङ्कुरु। त्वरितं शङ्काकुलो भूत्वा पलायतामेषः । ]

राधा — ( कुतुकेन भूरिणा भ्रूभङ्गेनाधिक्षिपन्तीव सनर्मस्मितं संस्कृतेन )

विस्रम्भ[1]घातिनि चिरादुपरुद्ध्य शुद्धा
विस्रम्भ[1]तस्त्वमिह नः स्वगृहादनैषीः[2] ।

---

राधामपीति — गान्धर्विके राधे ! धूर्त्तमौलिना शठप्रवरेण अनुद्रुता त्वं कस्मादेनां मद्रूपां पञ्चमुखीं सिंहीं मुक्त्वा एकां निस्सहायां कुरङ्गिकां क्षुद्रमृगीं ( अत्र कुत्सायां कन् ) शरणं गच्छसि – तत्र का ते परिरक्षा । अतः ममाङ्कमलङ्कुरु मत्पार्श्ववर्त्तिनी भव, येन मद्भयाद्भीतः शङ्काकुलः आत्मनः क्षतिं शङ्कमानः भीतः भूत्वा एष धूर्त्तराद् कृष्णः पलायतु सम्भावनायां लोट् । अत्र गर्वाख्यो भावो व्यज्यते ।

कियत्यमेतस्या वचः इति कुतुकेन प्रेरिता भूरिणा भ्रूभङ्गेन तीव्रेण भ्रुकुटिपातेन ललितामधिक्षिपन्ती न्यक्कुर्वाणा सनर्मस्मितं लीलाविलासप्रयुक्तं मृदु हास्यं कृत्वा प्राकृतां वाचमनादृत्य संस्कृतेन राधा प्राह **विस्रम्भेति** — अयि विस्रम्भघातिनि विश्वासभङ्गकारिणि । त्वं शुद्धा सत्सङ्कल्पा सदाचारिणीति कृत्वा चिरात् बहुकालम् उपरुध्य अस्मान् प्रोत्साह्य विस्रम्भतः विश्वासवशात् स्वगृहाद् अस्मन्निवासस्थानात् अनैषीः

---

हुई तुम मुझ जैसी सिंहनी को छोड़ कर इस असहाय हरिणी की शरण ले रही हो । आओ मेरे पास; ताकि चकित होकर यह तुरन्त भाग जाय ।

राधा — (ज़ोर से भौंहें चढ़ा कर निन्दा करती हुई सी स्नेहिल मुस्कान के साथ–संस्कृत के माध्यम से ) विश्वासघातिनि ! बहुत दिनों से तुम सदाचारिणी हो – इस तरह विश्वास जमा कर उस विश्वास के बल हम लोगों को

---

why do you leave me, a lioness and seek shelter under this lone doe ? Better be in my lap so that this fellow becomes bewildered and quickly runs away.

RĀDHĀ : *( As though censuring her with a frown and with an amorous smile — In Sanskrit )*

91. Treacherous woman ! taking us in your confidence, you led us, innocent women, from our houses to this place; and now, having detained us up for a long time, if you, with wet eyes, break your own vow ( of assurances ) in

---

1. "विस्रब्ध – °" – इति पाठान्तरम् । 2. "–° गृहादनैषीः" – इति पाठभेदः ।

लोभाद्व्रतं यदि निजं विधुनोष्युदश्रु
किं दूषयन्त्यपि सतीस्त्रपसे न देवि ॥९१॥

ललिता — हद्धि ! हद्धि ! सहि वुंदे, भणाहि, कहं सुद्धा भविस्सं[1] ।
[ हा धिक् ! हा धिक् ! सखि वृन्दे ! भण, कथं शुद्धा भविष्यामि । ]

वृन्दा — ललिते ! कृतमेतया चिन्ताचर्यया, निकुञ्जमहातीर्थे रतिवल्लभजागर्याव्रते प्रारब्धे का तावदघस्य[2] सम्भावनापि !

---

बहिर्नीतवती । अधुना अस्मान् अस्मिन् घट्टीपालप्रसङ्गे निपात्य लोभात्कस्यापि स्वार्थस्य घटनाय निजं व्रतं शीलं रक्षणरूपम् उदश्रु सजलनयना भूत्वा विधुनोषि दूरीकरोषि तदा एवं कुर्वाणा, हे देवि ! भव्ये ! सती अन्या पतिव्रता दूषयन्ती दुष्टे पथि नयन्ती त्वं कथं न त्रपसे लज्जिता भवसि ? स्वयं सत्पथं विसृज्य विश्वासमुत्पाद्य अन्या सती स्त्रियः स्वस्वगृहादानीय शम्भलीव अपन्थानं कुपथं वा नयन्ती न लज्जसे इति भावः । देवीति सम्बोधनमत्र वक्तयोक्तमभव्येत्यर्थगमकं विपरीतलक्षणया । एवं ललितां न्यग्भावयति राधा । अत्र प्रसादो गुणः, रीतिश्च वैदर्भी, वसन्ततिलका च वृत्तम् ॥९१॥

एवं न्यक्कृता ललिता आत्मानं धिक्कुर्वती वरीयसीं सखीं वृन्दामाकार्य आत्मशोधनप्रकारमुपदेष्टुमभ्यर्थयते **हा धिगिति** । ललिता वृन्दा सान्त्वयति **कृतमिति** — कृतमलमेतया चिन्तायाः चर्यया आचरणेन । चिन्तां मा कुरु इत्यर्थः । कुत इत्याह — निकुञ्जे कृष्णकेलिवने महातीर्थे परमपावने प्रदेशे रतिवल्लभस्य कृष्णस्य जागर्या रात्रिजागरणं तद्रूपे व्रते प्रारब्धे सति रात्रौ कृष्णेन सह लीलाप्रसङ्गेन कालयापने का तावद् अघस्य पापस्य सम्भावना आशङ्का अपि स्यात् ?

---

हमारे घरों से यहाँ ले आई हो, यदि अब किसी स्वार्थवश डबडबाती आँखों वाली तुम अपने व्रत को छोड रही हो, तो पतिव्रताओं को कलङ्कित करते हुए भी देवि ! तुम लज्जित नहीं हो रही हो ॥९१॥

ललिता — बडे दुःख की बात है, सखि वृन्दे ! बताओ, अब मैं शुद्ध कैसे हो सकूँगी ?

वृन्दा — ललिते ! यह चिन्ता की बात व्यर्थ है, वेल्विन जैसे परम पुनीत स्थान पर कामदेव की आराधना में रात्रि-जागरण व्रत के प्रारम्भ हो जाने पर पाप की तो सम्भावना भी कहाँ ?

---

greed, oh respectable lady ! aren't you ashamed of polluting the chaste women ?

LALITĀ — Ah me, ah me ! friend Vṛndā, tell me how can I be absolved ( = purify myself ) ?

VṚNDĀ — Lalitā ! enough of worrying. Where is even the possibility of any sin when the vow of vigil in honour of the Lord of Love is being observed in the highly sacred place of this arbour ?

---

1 "हुविस्स" – इति पाठभेदः । 2 "तावदधमस्स" – इति पाठान्तरम् ।

कृष्णः — केलिकुतूहलितया कुतः स्वकर्मणि मन्थरोऽस्मि, यदद्य शुल्कार्थमुद्यमः खलु साधीयान् ।

नान्दीमुखी — ललिदे ! पेक्ख, पच्चासीददि मज्झण्णो ता कधीअदु केत्तिओ सुलुक्को तुम्हाणं संमदो । [ललिते ! प्रेक्षस्व, प्रत्यासीदति मध्याह्नस्तत्कथ्यतां कियान् शुल्को युष्माकं सम्मतः ।]

ललिता — हन्त दाणींद, जइवि अम्हाणं पंचपाइआ चेअ एत्थ जुत्ता तहवि तुम्ह मुहं अवेक्खिअ एसा मणिमुद्दिआ ओवणीदा । [हन्त दानीन्द्र ! यद्यप्यस्माकं पञ्चपादिका एवात्र युक्ता तथापि युष्मन्मुखमवेक्ष्यैषा मणिमुद्रिकोपनीता ।]

---

अत्रान्तरे पुनः स्वीयां शुल्कादानकथां योजयन्नाह कृष्णः **केलीति** — केल्यां नर्मलीलायां कुतूहलितया रुचिवशात् कुतः कस्माद्धेतोः व्यर्थमेवेत्यर्थः स्वस्य कर्मणि शुल्कग्रहणे मन्थरः शिथिलप्रयासः अस्मि । अतः अद्य अधुना शुल्कार्थम् उद्यमः साधीयान् साधुतरो भवेदिति ।

एतस्मिन्व्यतिकरे मुधा कालक्षेपस्यानौचित्यं मन्यमाना नान्दीमुखी प्रकृतमनुसरति **ललित इति** — प्रेक्षस्व बुद्ध्यस्व, मध्याह्नः प्रत्यासीदति जातप्राय एव चपकामत्येव । अतः कथ्यतां त्वमेव ब्रूहि कियान् शुल्कः युष्माकं सम्मतः देयतया अभिप्रेतः । कियन्तं शुल्कं भवत्यः दातुं वाञ्छन्ति इति ।

नान्दीमुखीं कृष्णस्य प्रातिनिध्येन ब्रुवाणामिव मत्वा साक्षात्कृष्णमेव सम्बोधयन्ती प्राह **हन्तेति** — हे दानीन्द्र घट्टपाल ! यद्यपि अस्माकमस्मद्देयता पञ्च पादिका नाणकस्य चतुर्थोऽशः (पाई – pie) एव युक्ता उचिता, तथापि युष्मद्मुखमवेक्ष्य भवतः कारणात् मणिमुद्रिका रत्नजटितमङ्गुलीयकम् उपनीता भवते दीयते ।

---

| | |
|---|---|
| कृष्ण — | केलि-क्रीडा में अभिरुचि के कारण अपने चुंगी के काम में कैसा शिथिल हो गया हूँ । इसलिए अब चुंगी के लिए प्रयत्न करना ही उचित है । |
| नान्दीमुखी — | ललिते ! देखो, दोपहर हो रही है, तो तुम लोग ठीक-ठीक बोलो तुम्हें कितनी चुंगी देना अभीष्ट है । |
| ललिता — | घट्टाधिकारी महोदय ! हम लोग तो पाँच पाई ही ठीक समझते हैं, तो भी आपका मुँह देख कर यह मणिमयी अँगूठी दी जा रही है । |

---

| | |
|---|---|
| KṚṢṆA : | How is it that being interested in mere sport, I have been negligent in my work ? Better act for exacting the toll-tax. |
| NĀNDĪMUKHĪ : | O Lalitā ! see, noon is approaching. So tell us what amount to be paid as toll-tax is agreeable to you. |
| LALITĀ : | Ah chief ! though only five paisa is proper from our point of view, seeing your face ( = out of respect for you) this jewelled ring is being offeredto you. |

( इति चित्राङ्गुलेराकृष्य मुद्रिकां पुरस्तादुपन्यस्यति )

कृष्णः — ( सव्याजामर्षम् ) सखे ! क्षिप्रं क्षिप्यतामद्रिमूर्द्धनि क्षुद्रेयं मुद्रिका।

( सुबल प्रक्षेपमुद्रामभिनीय मुद्रिकां करे सङ्गोपयति )

ललिता — ( सरोषम् ) वुंदे, दिट्ठं तुए जं दुलहा मणिमुद्दिआ पक्खित्ता।
[ वृन्दे ! दृष्टं त्वया यद्दुर्लभा मणिमुद्रिका प्रक्षिप्ता। ]

नान्दीमुखी — हला, जइ तस्स णअणिहीणं अहिवइणो कुएरस्स

---

[ इति वदन्ती चित्राया सख्या अङ्गुले मुद्रिकामाकृष्य निष्कास्य दानीन्द्रस्य पुरस्तात् उपन्यस्यति स्थापयति गृहाणेमामिति। ]

रुचिष्ठ तद्द्रव्य वीक्ष्य सव्याज मिथ्यादर्शितम् अमर्ष क्रोधं नाटयन्नाह कृष्ण स्वस्य सखायं सुबलम्प्रति **सख इति** — अद्रिमूर्द्धनि पर्वतशिखरे क्षुद्रा तुच्छा इयं मुद्रिका उर्मिका क्षिप्र त्वरितमेव क्षिप्यतामस्माकममुया किं प्रयोजनमिति। वाक्येऽस्मिन् अनुप्रासालङ्कार ।

[ कृष्णस्य निर्देशं गृहीत्वा धूर्त्ततर सुबल मुद्रिकाया प्रक्षेप नाटयित्वा तां स्वीये करे सङ्गोपयति निह्नुक्ते। ]

कृष्णसुबलकृतानादराय क्रुध्य तौ ललिता वृन्दा कथयति **दृष्टमिति** — शुल्कग्रहणे ग्रहिलोऽसौ दीयमान मूल्यवन्त शुल्क तुच्छीकृत्य पश्य या मणिमुद्रिका तस्मै दुर्लभा दत्ता तां तिरस्कुर्वन्नसौ प्रक्षिप्तवानिति कियान् खलु दुर्व्यवहार इति।

प्रसङ्गेऽस्मिन् कृष्णपक्षपातिनी नान्दीमुखी महत शुल्कराशे कृतेऽल्पीयस्या

---

(ऐसा कहकर चित्रा की अगुली से अगूठी खींच कर कृष्ण के समक्ष रखती है)

कृष्ण — ( मिथ्या रोष का अभिनय करते हुए ) सखे ! इस नन्हीं सी अँगूठी को एकदम पहाड़ की चोटी पर फेंक दो।

( फेंकने की मुद्रा का अभिनय कर सुबल अगूठी हाथ में छिपा लेता है )

ललिता — ( क्रोध करती हुई ) वृन्दे ! देखा तूने, दुर्लभ मणिमुद्रिका फेंक दी गई।

नान्दीमुखी — सखि ! जैसे नवों निधियों के स्वामी कुबेर द्वारा महान् चिन्तामणि लेने

---

(*she pulls off the ring from Citrā's finger and puts it before him*)

KRṢNA (*pretending anger*) Friend ! throw this worthless ring quickly on the top of the mountain

(*posing as though he throws it, Subala conceals it in his hand*).

LALITĀ Vrndā ! saw you how this rare jewelled ring is thrown away !

NĀNDĪMUKHĪ Friend ! your behaviour towards Krṣna is like

महाचिंतामणि-मणीसिदेण साअरप्पसारिदे हत्थे फ्फुड-कपद्दिआ-णिक्खेवो तह ज्जेव्व एसो तुम्ह वअहारो । [सखि ! यथा तस्य नवनिधीनामधिपतेः कुबेरस्य महाचिन्तामणिमनीषितेन सादरप्रसारिते हस्ते स्फुटकपर्दिकानिक्षेपस्तथैव युष्माकं व्यवहारः । ]

ललिता —(स्वगतम्) दोणं सुट्ठु ओक्कंट्ठिदाणं आसासणं भंगीए करिस्सं । (इति परिक्रम्य, जनान्तिकम्) हला राहि ! जधारिहं दाणं विणा दुल्लहं अम्हाणं इदो पत्थाणं, ता तुह कंठट्ठिदं हारं चेअ सुलुक्कीकरेम्ह (इति बलादिव

---

मुद्रिकायाः क्षुद्रत्वं प्रमापयितुं ललितामुद्दिश्य प्राह सखि यथेति — नवनिधीनाम् अधिपतेः असंख्येयस्य द्रव्यस्य स्वामिनः कुबेरस्य कस्यापि महार्घस्य चिन्तामणेः मनीषितेन अभिप्रायेण लालसया सादरं प्रसारिते हस्ते स्फुटायाः कपर्दिकायाः काणस्य वराटकस्य क्षेपः यथा हास्यास्पदमप्राह्यं क्षोभकरञ्च स्यात् तथैव एष युष्माकं लक्ष्मीपतेर्विष्णोः कृष्णस्य पुरतः स्तोकायाः मुद्रायाः प्रदानरूपो व्यवहारः सर्वथा असमीचीन एवेति । अत्र दृष्टान्तालङ्कारः ।

ललिता नर्मोपहासं घटयितुं कामयमाना करणीयमात्मगतं चिन्तयति द्वयोरिति— द्वयो राधामाधवयोः सुष्ठु नितरामुत्कण्ठितयोः आश्वासनं समाधानं भङ्गया युक्तिविशेषेण करिष्यामीति । एवं सञ्चिन्त्य प्रकाशमाह जनान्तिकं परैरश्राव्यं हलेति — सखि राधे । यथार्थम् अर्थमनतिक्रम्य यथार्नुरूपमथवा तत्त्वतः दानं विना इतः अस्मात् घट्टस्थानात् निर्गन्तुं नैव शक्यमिति धृत्वा तव कण्ठे धृतो हारः शुल्करूपेण दत्तः इति ।

---

के अभिप्राय से फैलाये गये हाथ पर फुटी कौड़ी रखना, वैसे ही तुम लोगों का भी यह व्यवहार है ।

ललिता — (मन ही मन) अत्यन्त अधीर इन दोनों का युक्ति से समाधान करूंगी (घूम कर एक ओर) सखि राधिके ! उचित चुंगी दिये विना हम लोगों का यहाँ से चलना असम्भव है इसलिये तुम्हारे गले का हार चुंगी के लिये दे रही हूँ ।

---

throwing a broken cowrie into the respectfully extended hand of Kubera, the lord of nine treasures (= *nidhis*) with the desire of getting the great philosopher's stone (= *cintāmani*).

LALITĀ : (*to herself*) I shall give an indirect assurance to both of them (= Kṛṣṇa & Rādhā) who are anxious to meet each other. (*moving about — aside*) Dear Rādhā ! it is difficult for us to get away from here without paying the appropriate amount of tax, Let us, therefore, offer your necklace in lieu of it.

हारमुत्तार्य, सनर्मस्मितम् ) ओकंठीदे कीस अहीरासि ? एसा णिसिट्ठात्था मोत्तिआअली दूदिआ कण्हं अलंकादुं चलिदा, ता अहिसारे सज्जा होहि ।

[ द्वयो सुप्तूत्कण्ठितयोराश्वासन भङ्ग्या करिष्यामि ( इति परिक्रम्य, जनान्तिकम् ) हला, राधिके ! यथार्थ दानं विना दुर्लभमस्माकमित प्रस्थानम् । तत्तव कण्ठस्थितं हार शुल्की कुर्म ( इति बलादिव हारमुत्तार्य, सनर्मस्मितम् ) उत्कण्ठिते ! कस्मादधीरासि ? एषा निसृष्टार्था मौक्तिकावली दूतिका कृष्णमलङ्कर्तुं प्रस्थिता, तदभिसारे सज्जा भव । ]

राधा — अइ सम्भोअसरम्भिणि ! अल एदेण दम्हगम्हीरिमारम्हेण, एत्थ विआदमहामहम्मि अदक्खिणा वि तुमं दक्खिणासि णिम्मीदा पणपण

---

( एव ब्रुवाणा बलाद् हारमुद्धृत्य ) राधा सम्बोधयति, अयि उत्कण्ठिते किमेवमधीरा विह्वला भवसि । इय मुक्तावली तव कार्यसाधनाय कृष्णमलङ्कर्तुं निसृष्टार्था दूती भूत्वा प्रस्थिता, तदधुना द्रागेव प्रियसङ्गमो भवितेति अभिसारे प्रियमुपसर्तुं निर्वेशाय च सज्जा उद्यता भव ।

निसृष्टार्था दूती तावत् "उभयोर्भावमुन्नीय स्वय वदति चोत्तरम् । सुत्तयोर्भौ घटयेदेषा निसृष्टार्था निगद्यते" इति । तत्राभिसारिका नाम "याभिसारयते कान्त स्वय वाभिसरत्यपि । कृतावगुण्ठा स्निग्धैकसखीयुक्ता प्रिय व्रजेत्" इति लक्षणात् । सा चेयमिह ज्योत्स्नी नाम ।

ललितामुद्दिश्य राधा कथयति **अयीति** — सम्भोगाय सरम्भ उत्कण्ठा यस्या सा तादृशि सम्भोगसरम्भिणि ! अल बहुकृतमेनेन दम्भस्य गम्भीरिमा मिथ्याधैर्यं तस्य

---

( ऐसा कह कर जबर्दस्ती हार को उतार कर विनोद से मुस्कराती हुई ) उतावली ! अधीर क्यों हो रही है । यह कार्य साधिका दूती के रूप में मौक्तिकावली कृष्ण को अलकृत करने ( पटाने ) जा रही है, अब अभिसार के लिये तू तैयार हो जा ।

राधा — अयि, सम्भोग की उतावली ! इस तरह झूठ-मूठ की गम्भीरता का दिखावा व्यर्थ है, इस विवादस्वरूप महायज्ञ में दक्षिणा न होते हुए भी

---

*( thus Lalitā takes out the necklace as though under duress , and with sweet smile )*

Anxious mistress ! why are you getting so impatient ? This pearl necklace, acting as a shrewd, diplomatic messenger is leaving as an envoy to manage Krsna Therefore, get ready for visiting the love-tryst

RĀDHĀ Ah you ! who are extremely eager for mating ! enough of this feigned seriousness In this great sacrifice of dispute, though you have no gifts to offer to the priests *( dakṣiṇā )*, you have been converted yourself

सहीहि । [ अयि सम्भोगसंरम्भिणि ! अलमेतेन दम्भगम्भीरिमारम्भेण, अत्र विवाद-महामखेऽदक्षिणापि त्वं दक्षिणासि निर्मिता प्रणयेन सखीभिः । ]

ललिता — (कृष्णमवलोक्य) घट्टणाह ! एसा अणग्घा मोत्तिआवली मए ओपणिहीकिदा, अदो प्पदोसे सुवण्णोवणएण पुणो भअत्तो[1] मोआवइदव्वा । [ घट्टनाथ ! एषानर्घा मौक्तिकावली मयोपनिधीकृता । अतः प्रदोषे सुवर्णोपनयेन पुनः भवतो मोचयितव्या । ]

कृष्णः — (सहर्षं हारमादाय, स्वगतम्) सोह्ययं शङ्खचूडस्य चूडामणिरेव

आरम्भेण । अत्र अस्मिन् विवादरूपे महामखे अदक्षिणा दानद्रव्यविहीना पक्षे परच्छन्द-विमुखी सत्यपि सखीभिः प्रणयेन दक्षिणा प्रियमनोऽनुवर्त्तिनी निर्मिता । त्वमिदानीं सम्भोगसमुत्सुका सती सखीभिः दाक्षिण्यं तदानुकूल्यं प्रापितासीति तात्पर्यम् ।

राधायाः कण्ठात् बलादुद्गृहीतां मौक्तिकमालां कृष्णायार्पयन्ती ललिता तमाह **घट्टनाथेति** — अनर्घा अमूल्या मौक्तिकावली तव हस्ते शुल्कापाकरणाय उपनिधीकृता विश्वासार्थं द्रव्यापेक्षया न्यासीकृता, सा प्रदोषे सन्ध्योपगमे सुवर्णस्य उपनयेन प्रदानेन पक्षे सुवर्णायाः शोभनवपुष्यो राधायाः समर्पणेन पुनः भवतः भवदीयहस्तात् निक्षेप-रूपेण स्थापिता मोचयितव्या प्रत्यावर्त्तनीयेति ।

कृष्णः सहर्षं तं मौक्तिकहारमादाय गृहीत्वाऽऽह स्वगतम् **सो ह्ययमिति** — सो हि अयम् – इत्यत्र "एतत्तदोः सुलोपस्य हलि नियमात्" स ह्ययम्—इत्येव पाठः साधुः भवेत् । इह प्रत्यभिज्ञा पूर्वदृष्टस्य स्मृतिरूपा । स एवाऽयं हारः यः शङ्खचूडस्य चूडायां

(> प्रिय की मनोवृत्ति के विपरीत) भी तुझे सखियों ने स्नेह वश दक्षिणा ( > प्रियतम के मन के अनुकूल) बना दिया ।

**ललिता** — (कृष्ण की ओर देख कर) घट्टनाथ ! इस बहुमूल्य मौक्तिकावली को उपनिधि (= धरोहर) के रूप में धर रही हूँ; अतः शाम के समय सुवर्ण [ > सुवर्णा = सुरूपवती ] को देकर फिर आप से छुड़ा लूँगी ।

**कृष्ण** — (प्रसन्नता के साथ हार लेकर मन ही मन) यह वही शङ्खचूड की चूड़ा में

into a gift [ >though you are perverse ( = *adakṣiṇā* ) you have been made complaisant ( *dakṣiṇā* ) ] out of love by your friends.

**LALITĀ :** *( looking at Kṛṣṇa )* Toll-gate chief ! this invaluable pearl necklace is deposited by me as a security. So when gold ( = *suvarṇa* ) ( > fair Rādhā = *suvarṇā* ) is brought to you in the evening this shall be released from you.

**KṚṢṆA :** *( taking the necklace with pleasure – to himself )* The crest-gem of Śaṅkhacūḍa, which was, out of courtesy, given

1. "हुमचो (भवतः)" – इति पाठभेदः ।

ायकीकृतोऽस्ति, यः सानुकम्पमार्येण प्रलम्बरिपुणा राधिकायै प्रसादीकृतः, देनेन ममाधुना प्रत्याशाबीजस्याङ्कुरावस्था विस्तृता ।

( इति हारेण स्वकण्ठं प्रसाधयति )

राधा[1] — ( जनान्तिकम् ) ललिदे, पेक्ख भाअधेअं तवस्सिणीए मोत्तिआवलीए । [ ललिते ! पश्य भागधेयं तपस्विन्या मौक्तिकावल्या । ]

ललिता —

तुह णिसेवि उण राहे त्थणसंभुं[2] मोत्तिआवली सुद्धा ।
हरिणो विहरइ हिअए तुह कहणिज्जो कहं महिमा ॥९२॥

ध्रियमाणो मणि नायक मध्यमणिस्तद्रूपता नीत अस्ति, यश्च सानुकम्प प्रश्रयवशात् आर्येण ज्येष्ठभ्रात्रा प्रलम्बासुरस्य रिपुणा बलरामेण राधिकायै प्रसादीकृत अनुग्रहरूपेण प्रदत्त । तत् अनेन हारेण पूर्वचिह्नेन इव मम प्रत्याशा राधावाप्तिस्तद्बीजस्य अङ्कुरावस्थता विस्तृता—एव ब्रुवता कृष्णेन स्वकण्ठ प्रसाधित अलङ्कृत । अत्र नियताप्तिरूपा कार्यावस्था ।

कृष्णगलावलम्बिन्यै मुक्तावल्यै असूयन्ती राधा परैरश्राव्यतया ललितामाह पश्येति— तपस्विन्या पूर्वकृततपश्चर्यया ( निर्जीवत्वाद्वराक्या ) अस्या मौक्तिकावल्या भागधेय सौभाग्य निभाल्येति ।

एवमसूयादिग्धाममर्पदग्धां राधामुल्लासयितु विदग्धा ललिता प्राह तव निषेव्येति — हे राधे ! तव स्तनशम्भु स्तन एव शम्भु शङ्करस्य पिण्डी [ तदाकारत्वात् तादात्म्यम् ] त निषेव्य तत्सयोगमनुभूय मौक्तिकावलीय तथापि शुद्धा निर्मला एव पुन हरे

रखी हुई मणि यहाँ मध्यमणि के रूप में है, जिसे स्नेहवश दादा बलराम ने राधिका को प्रसाद रूप में दिया था । इसलिये अब राधा की प्राप्ति की आशा रूप बीज के अंकुर की अवस्था बढ़ गई है ।

( ऐसा सोचकर हार अपने गले में पहिन लेते हैं )

राधा — (एक ओर) ललिते ! इस तपोनिमग्न से सुशोभित (बेचारी) मौक्तिकावली का भाग्य देखो ।

ललिता — राधे ! शङ्कर की पिण्डी के समान तुम्हारे कुचों के सयोग का अनुभव करके ( > तुम्हारे स्तन से च्युत होने पर ) फिर भी निर्मल, तुम्हारी

to Rādhā as a gift by ārya Balarāma, the slayer of Pralamba demon, has been used as a central gem in this necklace So, now the chances of the seed of my hope putting forth sprouts have become ample

( *decorates his neck with the necklace* )

RĀDHĀ (*aside*) Lalitā ! look at the fortune of this ordinary pearl-necklace !

LALITĀ · 92 Rādhā ! this spotless pearl necklace having served the image of Siva in the form of your bosom is now

[1] सर्व राधोक्ति पाठान्तरे न दृश्यते । [2] "स्थनसम्भो-" इति क्वचित्पाठ ।

[ तव निषेव्य पुना राधे स्तनशम्भुं[1] मौक्तिकावली शुद्धा ।
हरेर्विहरति हृदये तव कथनीयः कथं महिमा ॥९२॥ ]

राधा — कुडिले, अलं पलोहेण[2], पेक्खिीअदु इदो वि पऊरं भंगुराए

कृष्णस्य हृदये हृत्पटले विहरति विलसति इति अद्भुतमेव । तद्यथा शम्भुं सेवित्वा हरिं भजते, एकेन शम्भुना धृताऽपि शुद्धैव, यतः एकेन धृतं सन्माल्यादिकं निर्माल्यं भवति जनान्तरधारणायोग्यमेवेति सामान्यनियमात् । वस्तुतः इदं प्रथितमेव यत्तैकवर्षपर्यन्तं विहितायामेव शिवोपासनायां विष्णोर्भक्तिमातनोति सुकृती जनः । अत इयं माला स्तनरूपं शम्भुमुपास्य विशेषमहिम्ना शुद्धा सती पुनर्हरेर्वक्षसि राजते । यस्या मौक्तिकावल्या एवंदृशः प्रभावः तदा तव महिमा कथं नु कथनीयः अनिर्वचनीय एव ।

अत्र एकस्य निषेवणेऽपि शुद्धात्वख्यापनात् "सति हेतौ फलाभावे" विशेषोक्तिरलङ्कारः । कथनीयतासम्बन्धेऽपि महिम्नोऽकथनीयत्वकथनात् सम्बन्धेऽप्यसम्बन्धरूपातिशयोक्तिः । स्तन एव शम्भुरित्यत्र रूपकमलङ्कारः । शिवस्य पाषाणमयी लिङ्गाकारा मूर्तिः पिण्डीति कथ्यते, तस्यामेव शिवभावनया तस्या एव शम्भुत्वम् वर्त्तुलत्व-स्थूलत्व-दृढत्वस्य स्तनगतस्य प्रतिपिपादयिषया स्तने शम्भुत्वारोपः । पीवरवक्षोजस्य कृते उपमानत्वेन शम्भोः कल्पनं प्राक्तनकविप्रबन्धेषु न दृष्टचरम्, किन्तु क्रिस्तीये पञ्चदशे शतके समुल्लसितैः गौडीयैः कविभिः मैथिलकोकिलविद्यापतिप्रभृतिभिः समुद्भावितं स्वीयप्रतिभाभातं स्तनस्योपमानद्वयम् — एकं शम्भुमूर्तिरूपमन्यच्च न्युब्जकनकशरावरूपम् । एवञ्च षोडशशतके क्रिस्तीये एधमानः कविवरेण्यो रूपगोस्वामिमहाभागः तदेवोररीकृतवान् । 'स्तनस्रस्ता' इति पाठे कुचच्युताऽधुनाऽच्युतवक्षसि विहरतीत्यर्थः ।

इयं राधामुल्लासयितुं ललितायाश्चाटूक्तिः । प्रसादगुणा वैदर्भी रीतिः । प्राकृते गाथा च्छन्दसा निबद्धा, संस्कृतच्छायायाम् आर्या जातिः । उभयत्र "प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि, अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या" ( आर्यैव प्राकृते गाथेति कथ्यते ) । इति लक्षणसत्त्वेऽपि, प्रथमे पादे 'णिसेविअ' इति पाठभेदे त्रयोदशमात्राः — इति सुधीभिरवधेयं हतवृत्तत्वम् ॥९२॥

छद्मना कृतामिमां चाटूक्तिं याथातथ्येन विभावयन्ती राधा ललितां सिरुषं आक्रोशति

---

मौक्तिकावली कृष्ण के वक्षःस्थल पर सुशोभित है ; तो भला, तुम्हारी महिमा का क्या कहना ? ॥९२॥

राधा — कुटिले ! यह प्रलोभन ( पाठभेद = प्रलाप ) रहने दो । शीघ्र ही स्नान

sporting on the chest of Hari (*v. l. stana-srastām* having attached itself to you and now dropping from your breasts). Ah, how can your greatness be extolled !

RĀDHĀ : Rogue ! enough of this sycophancy. Look at this even

1. "स्तनस्रस्ताम्" – इति पाठभेदः ।
2. "पलावेन" – इति पाठान्तरम् ।

भमरकलंकिदाए वणमालाए सोहाग्गलीलाइद । [कुटिले ! अल प्रलोभेन[1], प्रेक्षता-मितोऽपि प्रचुर भङ्गुरया भ्रमरकङ्किलाया वनमालाया सौभाग्यलीलायितम् । ]

( इति सस्कृतमाश्रित )

विशुद्धाभिः सार्द्धं व्रजहरिणनेत्राभिरनिशं
त्वमद्धा विद्वेषं किमिति वनमाले रचयसि ।
तृणीकुर्वत्यस्मान् वपुरघरिपोराशिखमिदं
परिष्वज्यापादं महति हृदये या विहरसि ॥९३॥

---

**कुटिल इति** — अयि वक्रे ललिते एव प्रलोभेन (प्रलापेन जल्पनेन वा — इति पाठभेदे ) अह महिमशालिनीति गौरवख्यापनरूपेणाऽलम्, यत मदपेक्षयाऽपि बहुतरं सौभाग्य बहन्तीमिमां वनमाला प्रेक्षस्व । इतोऽपि प्रचुरं मदपेक्षयाऽप्यधिक भगुराया लघुना समयेनैव म्लानतामुपेयुषी तस्या, परञ्च भ्रमरै मधुलिड्भि कलङ्किताया कालिम्ना सयोजिताया, पीतरसाया अस्या कृष्णस्य वनमालाया कण्ठादापादलम्बिन्या मालाया सौभाग्यस्य लीलायितम् विलास प्रेक्षतामिति ।

एव ललितामुद्बोध्य, प्रतिनायिकाभावेन निरूपितायै वनमालायै ईर्ष्यन्ती राधा तां सम्बोधयति साक्षेपं **विशुद्धाभिरिति** – हे वनमाले ! विशुद्धाभि निष्कपटाभि न क्वचिदपि तवाप्रियमाचरन्तीभि व्रजहरिणनेत्राभि व्रजाङ्गनाभि (अस्माभि ) सार्धं सह विद्वेषं किमिति केन हेतुना अनिश रात्रिन्दिवमद्धा तत्त्वतो रचयसि करोषि । अहोरात्रस्त्वमकारणमेव गोपी प्रति तात्त्विकमवहेलन करोषि । अनपकारिणीषु अपकारस्या नौचित्यात् । किम्प्रकारकोऽय विद्वेष इति तत्स्वरूप व्याकरोति – या त्वमस्मान् तृणीकुर्वती तृणवत् तुच्छा गणयित्वा अघरिपो अघासुरस्य निहन्तु अघाना पापानाञ्च दलयितु कृष्णचन्द्रस्य इद रम्य वपु शरीरम् आशिख शिखात आरभ्य आपाद चरणपर्यन्त परिष्वज्य समालिङ्ग्य तस्य महति विशाले हृत्पटले विहरसि स्वच्छन्द दन्दोलयसि । अस्माक परिष्वङ्गयोग्ये कृष्णवक्षसि अस्मानवगणय्य स्वैरमाचरणचूड विहरसीति विद्वेष ।

---

हो जाने वाली, भ्रमरों द्वारा जिसका रस पिया जा चुका है ऐसी इस वनमाला का हमसे भी कहीं अधिक सौभाग्य विलास देखो ।

( संस्कृत के माध्यम से )

वनमाले ! सरल स्वभाव वाली व्रज की मृगनयनियों के साथ रात दिन तुम सचमुच का यह विद्वेष क्यों करती रहती हो । हम लोगों को तुच्छ बना कर, चोटी से चरण तक अघरिपु ( = १ अघासुर के विनाशक,

more abundant play of fortune of this frail bee-tainted *Vanamālā* (*cap-a-pie* garland) (*In Sanskrit*)

93. Ah Vanamālā ! why do you, indeed, always declare disdain for the innocent fawn-eyed women of Braja Treating us with contempt — as though we were mere blades of grass — and embracing head to foot the

---

1 "प्रलापन"-इति पाठान्तर ।

**मधुमङ्गलः** — कल्लाणि ललिदे, महाघट्टपालिंदो तुम्हेहिं आणंदिदो, ता एसो बुभुक्खिदो एक्काए हेअंगईणगब्भाए गुरुगग्गरीए काअत्थो वि काअत्थो किज्जउ । [ कल्याणि ललिते ! महाघट्टपालेन्द्रो युष्माभिरानन्दितः, तदत्र एष बुभुक्षितः एकया हैयङ्गवीनगर्भया गुरुगर्गर्या कायस्थोऽपि कायस्थः क्रियताम् । ]

**विशाखा** — हंहो लोलुव, मा क्खु एवं भणाहि, सत्ततंतुणो किर

---

अत्रोत्तरार्धस्य पूर्वार्धे प्रतिपादितं वस्तु प्रति हेतुत्वात्काव्यलिङ्गमलङ्कारः । विशुद्धाभ्यस्त्वं अपकरोषीति विना हेतुं विद्वेषरूपकार्यस्य उद्भावनाद् विभावनालङ्कारश्च । तृणीकुर्वतीत्यत्र च्विप्रत्ययोऽभूततद्भावे । आङ् मर्यादाभिविध्योरित्यनुशासनात् शिखां मर्यादीकृत्य पादौ गृहीत्वा लुञ्चतीति अभिविधिः ।

अत्र निर्जीवायाः वनमालायाः ईर्ष्याऽयोग्यत्वे राधायाः तत्सत्त्वे ईर्ष्यानुप्राणितो मादनो नाम रत्याख्यः स्थायी भावो मोहनात्परात्परोऽभिव्यज्यते इत्युज्ज्वलनीलमणिः । अत्र वनमालायां चेतनात्वारोपः सापत्न्यभावारोपणात्समासोक्तिरलङ्कारश्च स्थायिनं पुष्णाति । अत्र प्रसादमाधुर्ये गुणौ, वैदर्भी रीतिः, शिखरिणी च वृत्तम् ॥९३॥

अधुना स्वार्थमनुसन्धित्सुर्मधुमङ्गलः ललितामाह **कल्याणीति** — अयि भव्ये सुभगे ललिते ! महाघट्टपालेन्द्रः कृष्णः युष्माभिः परिष्वङ्गादिनाऽऽनन्दितः । अत्र परिष्वङ्गचुम्बनादीनां व्यापाराणां नाट्येऽनभिनेयत्वात् गम्यतया बोधनाय भरतस्य अनुशासनमनुरुध्यान्तराले सम्पन्नं नर्मव्यवहारं मधुमङ्गलमुखेन बोधयति सामाजिकान्निपुणः कविरित्यवधेयम् । वरिष्ठोऽधिकारी तावत्सन्तोषितः, अधुना एष बुभुक्षितः क्षुत्क्षामः असौ मद्रूपः कायस्थः गणकः हैयङ्गवीनगर्भया नवनीतपूर्णया गुरुगगर्या महत्या घट्या कायस्थः काये शरीरे तिष्ठन् स्वस्थः स्फूर्त्तकायः क्रियताम् । मह्यं नवनीतं पारितोषिकरूपेण देहीति ललिता याचते ।

मध्ये विशाखा तं निषेधति **हंहो इति** — अरे लोलुप गृध्र ! मा खलु एवं

---

१. पापनाशक) कृष्ण के इस शरीर से आलिङ्गित हो, उनके विस्तृत वक्षःस्थल पर तुम विहार करती रहती हो ॥९३॥

**मधुमङ्गल** — भद्रे ललिते ! घाट के बड़े अधिकारी तो आप लोगों द्वारा तृप्त कर दिये गये, अब नवनीत भरी इस बड़ी गगरी द्वारा गणित विद्या के पारङ्गत इस भूखे लिपिक की काया को भी चेतन करिये ।

**विशाखा** — अरे लोलुप ! यों मत कहो । यह नवनीत तो सप्ततन्तु (यज्ञ) के लिये है ।

---

body of the slayer of demon Agha (= Kṛṣṇa), you sport on his broad chest (and enjoy life).

MADHUMAṄGALA : Blessed Lalitā ! the great toll-gate chief is propitiated by you. Now, this hungry Kāyastha (the accountant) be gratified with a heavy pot, full of fresh butter, so as to make him feel quite fit in his body (*kāya+stha*).

VIŚĀKHĀ : Oh greedy fellow ! Don't say so; this fresh butter is

हेअंगइणं एदं । [ इहो लोलुप ! मा खलु एवं भण, सप्ततन्तो किल हैयङ्गवीनमेवत् । ]

मधुमङ्गल — विसाहे, धण्णाओ क्खु जण्णिअबम्हणीओ जाहिं अप्पघरस्स वि त अगिरसस्स उवेक्खिअ तस्स सुट्ठु मिट्ठण्णेहिं सव्वे बल्लआ भुजाविदा, तुम्हेहिं उण परघरस्स सत्ततत्तुणो जोग्गेहिं वि णवणिदेहिं णवतंतुओ वि एक्कलो एसो वि ण भुजाविअदि । [ विशाखे ! धन्या खलु याज्ञिकब्राह्मण्य याभिरात्मगृहस्यापि तदाङ्गिरससत्रमुपेक्ष्य तस्य सुष्ठु मिष्टान्नै सर्वेबल्लवा भोजिता, युष्माभि पुन परगृहस्य सप्ततन्तो योग्यैरपि नवनीतैर्नवतन्तुकोऽपि एकल एषोऽपि न भोज्यते । ]

---

भण नवनीत याचस्व यतो नवनीतमिद सप्ततन्तो यज्ञस्य कृतेऽस्ति, मानुषस्य कृते अनुपयोज्यमेवेति । सप्तभि भूर्भुवस्स्वरादिभि सप्त महाव्याहृतिभि अग्निजिह्वाभिर्वा तन्यते इति अथवा सप्त तन्तव संस्था – पाकसंस्था पशुसंस्था वा सप्त यस्य स सप्ततन्तु । तन्तु = तन् + तुन् ।

अन्यासामुदारमतीनां विप्रपत्नीनां चरितमुदाहरति मधुमङ्गलो **विशाख इति** — ता याज्ञिकब्राह्मणानां पत्न्य धन्या साधुवादार्हा याभिरात्मगृहस्य आङ्गिरस सत्रं यज्ञमुपेक्ष्य स्वव्ययेन उपपादितै सुष्ठु सुरचितै मिष्टान्नै सर्वे बल्लवा गोपा भोजिता । युष्माभिस्तु परगृहस्य परकीयद्रव्यसाधितस्य सप्तत तो योग्यैरपि नवनीतै नव तन्तव त्रीणि त्रीणि सूत्राणि यस्मि स नवतन्तु यज्ञोपवीतमस्यास्तीति नवतन्तुक एकल एक एव द्विज अयं जन न भोज्यते – इत्यहो कार्पण्यम् ।

---

मधुमङ्गल — विशाखे ! वे याज्ञिकों की पत्नियां सराहनीय हैं, जिन्होंने अपने घर के उस आंगिरस यज्ञ की भी उपेक्षा करके सुन्दर पक्वान्न सभी ग्वालों को खिला दिये, और आप लोगों से तो पराये घर के यज्ञ के लिये भेजे गये नवनीत से अकेला यह नवतन्तुक (यज्ञोपवीतधारी द्विज) भी किञ्चित् नहीं खिलाया जा सकता है ।

---

meant for the sacrifice (which consists of seven parts — *saptatantu*)

MADHUMANGALA Visakha ! blessed, indeed, are the wives of the sacrificial priests who conniving even at their own household sacrifice by name, *Angirasa*, fed all the cowherds with dainty dishes meant for it You, on the other hand donot feed even one person vested with nine chords (*nava tantu* of the sacred thread worn by the initiated twice born) with fresh butter meant for a sacrifice arranged at the expense of others.

कृष्णः — ललिते ! यद्देप महाघट्टेश्वरस्य महोपहाराय हारो निसृष्टस्त-दतीव सम्यगनुष्ठितम् । साम्प्रतमुद्यानचक्रवर्तिनोऽप्यभीष्टशुल्केन सपर्या पर्यालोच्यताम्[1] ।

ललिता — ( सप्रणयरोषम् ) तुए जाणिअ पत्तह्मि[2], ता ण क्खु अजुत्ता एषा विडंवणकदत्थणा । [ त्वया ज्ञात्वा प्राप्तास्मि[2] तस्मान्न खल्वयुक्ता एषा विडम्बन-कदर्थना ।

नान्दीमुखी — महादाणींद, अप्पणो अहिदं दाणं दिट्ठं करिज्जउ जहा

---

कृष्णो हारप्रदानाय ललितामभिनन्दन् तत ऊर्ध्वं दातुमुपयाचते यद्देप-इति — महाघट्टस्य पालकस्य अध्यक्षस्य महोपहाराय मूल्यवतः वस्तुनो दानाय भवतीभिः हारः निसृष्टः प्रदत्तः ( व्यञ्जनया दौत्ये परिकल्पितः ) तदतीव सम्यगु-चितम् अनुष्ठितं कृतम् । साम्प्रतमुद्यानचक्रवर्त्तिनो महामन्मथराजस्य कृते अभीष्टस्य वस्तुनः शुल्करूपेण दानद्वारा सपर्या सम्भावना पर्यालोच्यतां चिन्त्यताम् ।

हारप्रदानेनाप्यसन्तुष्टं कृष्णं प्रति कोपायन्ती प्रणयपूर्वकमाह त्वयेति—त्वत्स्वरूपं ज्ञात्वाहं त्वया प्राप्ताऽस्मि, मुद्धयाऽहं तव वशंवदत्वं गताऽस्मि, अधुना तत्फलस्वरूपेण एषा विडम्बनरूपा कदर्थना दुर्गतिः अथवा कुत्सिता अर्थना भूयोभूयोऽनुचिता याचना न खलु अयुक्ता । स्वभावेन हठिलस्य तव कृते सर्वमुपपन्नमेवेति आक्रोशः ।

बहुचर्चितं विषयममुं समापयितुमुद्दिश्य नान्दीमुखी कृष्णस्य हार्दमनुयुंक्ते महा-

---

कृष्ण — ललिते ! महाघट्टेन्द्र की चुंगी की धनराशि के बदले में तुमने उपहार-स्वरूप जो यह हार दिया वह तो बड़ा ही अच्छा किया । अब उद्यान-चक्रवर्ती की मनचाही चुंगी वाली सेवा पर भी ध्यान दीजिये ।

ललिता — ( स्नेहिल रोषपूर्वक ) मैं तुमसे भली भाँति परिचित हूँ । इसलिये दुर्दशा वाली बात कोई अनहोनी बात नहीं है ।

नान्दीमुखी — घाट के अध्यक्ष महाशय ! आप ठीक-ठीक बताइये कितनी चुंगी लेंगे

---

KRṢṆA : Lalitā ! you did very well in delivering the necklace as a valuable present to the great chief of Tollgate. Now, you may think of honouring the sovereign Lord of Gardens with the much-coveted toll-tax.

LALITĀ : *( in coquettish anger )* I know you fully by your race, hence such a vexatious torture is certainly not unexpected of you.

NĀNDĪMUKHĪ : O great chief ! It may definitely be mentioned

---

1. क्वचित् "सपर्यान्विष्यताम्" - इत्येव पाठः । 2. "ज्ञात्वा" प्राप्तेमि" - इति पाठभेदः ।

मज्झत्थीभविअ मए परिच्छिज्जइ । [महादानीन्द्र ! आत्मनोऽभिमतं दान द्रढ कथ्यताम्, यथा मध्यस्थीभूय मया परिच्छिद्यते ।]

कृष्णः — नान्दीमुखि ! समाकर्ण्यताम् ।

'गदितुमधिकमार्यापारिषद्यास्तवाग्रे[1]
कथमुचितमथेष्टं केवलं मे परार्द्धम्[2] ।
इह यदि तदभावं वक्षि[3] किं तत्र कुर्यां
भवतु मयि परार्द्धं न्यस्य शिष्टाः प्रयान्तु ॥ ९४ ॥

---

**दानीन्द्रेति** — कृष्ण ! यदात्मन भवत अभिमत स्वीकार्यं दान द्रढ सत्य सत्य कथ्यतां येन युवयो मिथो मुधा विवदतो पक्षयो मध्यस्थीभूय मध्यस्थवृत्तिमालम्ब्य मया परिच्छिद्यते निश्चीयते येन विवादश्च समाप्येत ।

कृष्ण प्रस्तौति स्वाभिप्रेत **गदितुमिति** — हे नान्दीमुखि ! आर्याया पौर्णमास्या परिषद इय पारिषदी तस्या पारिषद्या मण्डलीभाज, तव अग्रे पुरत अधिक गदितु वक्तु कथमुचित भवेन्नैवेत्यर्थं । अथ वच्मि यन्मे केवल परार्द्ध परार्धसंख्यामित शुल्क इष्टमभिप्रेतम् । हार्दन्तु यद्युष्मासु सर्वोत्कृष्ट देय भवेत् तस्मा एवाह स्पृहयामि । इहाऽस्मिन् प्रसङ्गे यदि तदभाव महा प्रदानाय तस्य परार्धस्य अभाव वक्षि कथयसि चेत् तदा किं तत्र कुर्यां, निरुपायोऽस्मि सवृत्त । तदानीं परार्द्ध परञ्च यदर्ध परार्धमितस्य शुल्कस्य अर्धं मयि न्यस्य मम हस्तसात्कृत्वा भवतु देयत्व सम्पन्नमस्तु, तस्मात् परार्धात् शिष्टा अवशिष्टाश्च प्रयान्तु लुप्यन्तां नाम — तावतैव एता मोच्यन्ते इति बहिरङ्गम् । पक्षे हार्दन्तु — भवतु अस्तु शुल्कस्याभाव, मयि शरीरस्य परम् अर्धं उत्कृष्टो भाग परार्द्ध *cf* better half प्रियाद्दप राधाख्यं न्यस्य निक्षिप्य प्रदाय, शिष्टास्तत्सख्य प्रयान्तु स्वैरमितो गच्छन्तु नाम । विध्यर्थे लोट् । अत्र "परार्द्धान्यस्य शिष्टा प्रयान्तु" इति प्रायश उपलभ्यमान पाठस्तु असाध्य प्रतिभाति ।

---

ताकि मैं मध्यस्थता करके आप लोगों का निपटारा कर सकूँ।

कृष्ण — नान्दीमुखि ! ध्यान देकर सुनिये —
मुझे केवल परार्द्ध संख्या । (संख्या का सर्वोच्च मान), [ > पूर्वं = धर्म और अर्थ, पर = काम और मोक्ष उसमें पर का अर्द्ध = काम की प्रक्रिया ]

---

what amount as toll tax would be acceptable to you so that I may mediate and fix the definite amount to be paid

KRṢNA — Nāndīmukhī ! Would it be proper for me to mention more before a respectable member of the revered Paurṇamāsī s Council like you ? Now, only an amount

---

1 'वदितु' – इति पाठभेद । 2 "°–पारिषद्यासु वामे" – इति पाठान्तरम् ।
3 "तव भाव वक्षि" – इति पाठान्तरम् ।

**नान्दीमुखी** — रंगिल्लपुंगव, चित्ता तुह चित्ताणुवट्टिणी, ता एसा च्चेअ सुलुक्काइदा । [ रङ्गिल्लपुङ्गव ! चित्रा तव चित्तानुवर्तिनी, तदेषैव शुल्कायिता । ]

**कृष्णः** — हस्तोपकण्ठवर्तिनी चित्रा, तदसौ नातिदुर्लभा ।

**पौर्णमासी** — ( प्रविश्य ) नागर, नागरीमूर्द्धाभिषिक्त ! यत्र निबद्धमहा-

---

अत्र नायकस्यौदार्यं नियताप्तिसन्दर्भ स्थान एवाभिव्यक्तम् । अत्र प्रसादो गुणः, वैदर्भी रीतिः । मालिनी च वृत्तम् ॥९४॥

प्रस्तावममुं सुचिन्त्य नान्दीमुखी प्राह **रङ्गिल्लेति** — हे रङ्गिल्लेषु विलासिषु पुङ्गवः ऋषभ इव ! चित्रा एषाऽस्मत्सखी तव चित्तमनुवर्त्ततेऽसौ तादृशी मनोऽनुकूलास्ति । तदत एषा चित्रा एव शुल्कामिता शुल्करूपेणाचर्यते । शुल्क इव आचरतीति शुल्कायति — आचारार्थे क्यच् ततो निष्ठायां क्तान्तेन स्त्रियां टाप् ।

राधायै स्पृहयन् कृष्ण आह **हस्तेति** — अस्तु चित्तानुवर्त्तिनी चित्रा, किन्तु सा तु हस्तस्य उपकण्ठं समीपं वर्त्तते असौ हस्तगता एव अतो नातिदुर्लभा सुगम्येत्यर्थः ।

अत्रान्तराले नाटकीयवस्तुनश्चतुर्थी नियताप्तिरूपामवस्थां साधु उल्लास्य अधुना

---

ही अभीष्ट है । आप सभ्य जनों के समक्ष अधिक कहना कहाँ तक उचित है, उस पर भी यदि उसका अभाव ही बताती हो, तो मैं कर ही क्या सकूँगा । ख़ैर, मेरा परार्द्ध ( चुंगी की निर्णीत सर्वोच्च द्रव्य राशि < काम की रीति < पर + उत्कृष्ट, अर्ध = प्रिया ) यदि मिल जाय तो ( शेष ) सभी जा सकती हैं ।

**नान्दीमुखी** — महाविलासी ( विलासप्रियाग्रणी ) ! चित्रा तुम्हारे मन के अनुकूल है, इसलिये यही चुंगी के रूप में प्रस्तुत की जा रही है ।

**कृष्ण** — चित्रा तो मेरे हाथ में ही है, इस लिये यह बहुत दुर्लभ नहीं है ।

**पौर्णमासी** — ( प्रवेश कर ) विदग्ध, चतुर रमणी के सिर चढ़े ! जिसके विषय में तुमने

---

of ten thousand crores of gold coins ( *parārdha* ) is all that I want. If you say now that it is not there, what can I do! All right, put forth the amount of *Parārdha*, the highest number ( >the most precious one among you i. e. Rādhā ), and the rest of the distinguished persons become free to go.

NĀNDĪMUKHI : You bull amongst the lustful ! Citrā suits your taste. So it is she that is offered to you in lieu of the tax.

KṚṢṆA : Citrā is well within my reach, and therefore, not very difficult to have.

PAURṆAMĀSĪ : ( *Enters* ) You, urbane, clever ladies' man !

स्पृहोऽसि तां किल परार्द्धेनापि दुर्लभामनर्घामेव जानीहि ।

**कृष्ण.** — ( सापत्रपमभिवाद्य ) भगवति ! केवलं शुल्कवित्तानामुपलब्धये गृहीताग्रहोऽस्मि, न तु काकिणीपादमूल्याना भवद्गोपिकानाम् ।

**राधा** — भअवदि, दिट्ठिआ विडंबणंबुरासिणो पारं अम्हेहिं दिट्ठं, जं

---

फलागमरूपां पञ्चमीं कार्यावस्थामुन्मेषयितुकाम कविवर पताकानायिका भगवतीं पौर्णमासीं प्रवेशयति पटीक्षेप विनैव । अतोऽर्थप्रकृतिरूपस्य कार्यस्य अवस्थारूपस्य च फलागमस्य सहगामित्वान्निर्वहणसन्धि प्रवर्त्तते ।

एव प्रविश्य पौर्णमासी कृष्ण सम्बोधयति **नागरेति** — हे चतुर ! नागरीणां मूर्धनि अभिषिक्त प्रतिष्ठापित । समस्तचतुराङ्गनाभि स्वीयमौलिमणितया स्वीकृत । ( यद्यप्येवमसि तथापि ) यत्र यस्यां ललनायां निबद्धा महती स्पृहा येन तादृश अन्या व्यतिरिच्य यामेव दृढतया कामयसे सा किल निश्चयेन परार्द्धेनापि दुर्लभा, वस्तुत अनर्घामिव मूल्येनादातुमयोग्यामेव जानीहि । ते स्पृहेल्मिा महिला केनापि मौल्येन विनिमातुमशक्यैव । पौर्णमासी उत्तमपात्रमत सर्वदा सस्कृतेनैव वक्ति इत्यवधेयम् ।

सहसोपस्थितां सम्मान्यां भगवतीं विलोक्य जायमाना त्रपामपास्य धीरतया तामभिवाद्य कृष्ण आह **भगवतीति** — कस्या अपि नास्ति मे स्पृहाऽह स्वनियोगानुष्ठान शुल्कादाने एव गृहीताग्रह दृढनिश्चय अस्मि । न तु काकण्या वराटिकाया पादस्तुरीयो भाग तावन्मात्रमेव मूल्य यासा क्षुद्राना भवद्गोपिकाना भवत्या परिपालिताना गोपकन्यानामुपलब्धये इत्यन्वय । अत्र भगवत्या पुरतोऽपि धार्ष्ट्य दधानो नायक तदुक्तं तथ्यमपि निषेधितु समर्थ शाठ्यमभिव्यनक्ति ।

विलोक्याभिभाविकां समाश्वस्तेव नायिका भगवतीं पौर्णमासीमाह **दिट्ठियेति** — दिष्टया भाग्योपचयेन अस्माभि विडम्बना दुर्गति अम्बुराशि सागर एव ( अपार-

---

बड़े अभिलाष बाँध रखे हैं, उसे ( राधा को ) परार्द्ध से भी न मिलने वाली अमूल्य ही समझो।

**कृष्ण** — ( नि सङ्कोच भाव से अभिवादन कर ) भगवति ! चुंगीवाली रकम की प्राप्ति के लिये ही मेरा सदाग्रह है, न कि कौड़ी की चार, आप की गोपियों के लिये।

**राधा** — भगवति ! बड़े सौभाग्य की बात है, जो कि आप स्वत आ गईं, और

---

Know for certain that she, on whom you have all your desires concentrated, is too invaluable to be had even for ten thousand crores of gold coins

**KRṢNA** ( *bowing bashfully* ) Your holiness ! I am insisting only on the tax amount, certainly not for your cowherdesses worth a two pence ( *Lit* a quarter of a *cowrie* )

**RĀDHĀ** Your holiness ! we have luckily seen the other shore

सअं एत्थं तत्तहोदी समाअदा । [भगवति ! दिष्ट्या विडम्बनाम्बुराशेः पारम-स्माभिर्दृष्टं यत्स्वयमत्र भवती[1] समागता । ]

पौर्णमासी — (जनान्तिकम्)

दानीन्द्रस्य[2] प्रसभमनुरीकृत्य मानोद्‌धुराणां
दानं विश्वप्रकटमटवीमण्डलाखण्डलस्य ।
संरब्धानां कलहलहरीलुब्धतादुर्मुखीनां
पातः शातोदरि न भविता किं विडम्बा[3]म्बुधौ वः ॥९५॥

त्वादगाधत्वादौपम्यम्) तस्य पारमन्तं दृष्टम्, तत्र हेतुमाह यदिति — स्वयमत्र घटनास्थले तत्रभवती पूज्या भगवती समागता – अस्मानुद्धर्तुमिति शेषः । अत्राम्बुराशि-पदं न योगरूढं केवलं समुद्राभिधायकम् । अत्र समयो नाम निर्वहणाङ्गम् ।

एवमाश्वस्तां राधां पौर्णिमासी परैरश्राव्यतया विडम्बनायाः कारणं यूयमेव भवथ इत्युपपादयति दानीन्द्रस्येति — अयि, शातं कृशमुदरं यस्यास्तत्सम्बुद्धौ हे शातोदरि कृशमध्ये ! तन्वीत्यर्थः । 'शो तनूकरणे' – इतिधातोः क्तान्तं शातमितिरूपम् । विश्वस्मिन् प्रकटं सर्वेषां विज्ञातं यथा भवेत्तथा अस्याः अटव्या यन्मण्डलं परिसरस्तस्य आखण्डलस्य इन्द्रस्य स्वामिनः दानीन्द्रस्य दानं शुल्कग्रहणमस्यास्तीति दानी चासौ इन्द्रश्च प्रभुः तस्य दानं देयं शुल्कं प्रसभं हठादनुरीकृत्य अस्वीकृत्य मानेन स्वाभिमानेन उद्धुराणां दृप्तानाम् अत एव संरब्धानां कुपितानामत एव कलहस्य लहरीषु तरङ्गेषु या लुब्धता लालसा तया दुर्मुखीनां कटुवचसां कलहलोलुपतयाऽवाच्यवादिनीनां वः युष्माकं विडम्बाम्बुधौ विडम्बः (अच्) एव अम्बुधिः समुद्रस्तस्मिन् पातः निमज्जनं किं न भविता – अपि तु नूनं भवितेति काकुः । साधिकारस्य विश्वविदितस्य शुल्कग्राहिणः यद्देयं तददत्वा गर्वभरेण क्रुद्धाः क्रोधवशात्कलहप्रियत्वात्परुषभाषिण्यो यूयं चेत् दुर्गतिं प्राप्तास्तत्र किमद्भुतम् । स्वीयकर्मणा दुर्गतिं भजथेति तात्पर्यम् ।

अत्र इन्द्राखण्डलेति पदद्वयं केवलं स्वाम्यवाचीति कृत्वा भृशमपुष्टार्थकम्

---

इस दुर्दशा के सागर का हम लोगों ने किनारा देख लिया ।

पौर्णमासी — (अलग से) जग विख्यात, इस वन प्रदेश के इन्द्र, चुंगी के स्वामी की चुंगी देना हठात् अस्वीकार कर, अभिमान में चूर, रोष भरी, कलह तरंगों का

of this deep of distress, since you are personally present here.

PAURṆAMĀSĪ : 95. Slender-waisted woman ! having violently refused to pay the tax due to the Chief, the world-renowned overlord of the entire forest circle, how can you, women of unrestrained pride, excited and exces-

1. "स्वयं तत्रभवती" – इति पाठान्तरम् । 2. "दानेन्द्रस्य" – इति क्वचित् ।
3. "विडम्बाम्बुधौ" – इति पाठभेदः ।

ललिता — भअवदि, पेक्ख दुल्लहो एसो हारो अम्हेहिं दिण्णो तह वि ण मुक्किह्म। [ भगवति ! पश्य दुर्लभो हारोऽस्माभिर्दत्तस्तथापि न मुच्यामहे। ]

पौर्णमासी — ललिते ! पश्य भवतीना कलहकूट[1]कषायेण पाटलितचित्त-

नातिहृद्यम् तत्प्रयोगवशादुपस्थित गौण्या वृत्त्या औपम्य तादात्म्य वा सामान्याभिधेयतां धत्ते काव्योपस्कारकनाविहीनामेव। कलहलहरी – विडम्बाम्बुधिरित्यत्र परम्परित रूपकम्। पातम्प्रति दुर्मुखत्वस्य हेतुत्वेन प्रतिपादनादत्र हेतुरलङ्कार। किं न भवितेत्यत्र अर्थापत्तिश्च। पुन पौर्णमास्या दर्शनमात्रेण सुखिताया राधाया सङ्कटोद्धारस्तु दूरऽस्तु प्रत्युत ससखी सैव सङ्कटहेतुरिति आक्रोशरूपस्यानर्थस्य आपत्तिवशात् "प्रारब्धस्य च वैफल्यमनर्थस्य च पूरणम्' – इति लक्षणयोगादत्र विषमालङ्कारश्च। यद्यानीन्द्राय देयं तद्देयमेवति, झगित्येवापाकरणीयमिति सुकर पन्था प्रदर्शित नायकनायिकयो फलप्राप्तिकारक। *cf* स्वापराधविपन्नानां विपत्ति केन शोच्यते [ आभाणक ]

अत्र प्रसादो गुण, उपपत्तिर्नाम नाट्यालङ्करण, वदर्भी रीति, उपनागरिका वृत्ति, वृत्तञ्च मन्दाक्रान्ता ॥९५॥

शुल्कप्रदानदोषमात्मनो व्यावर्त्तयन्ती ललिता पौर्णमासीं निवेदयति **भगवतीति**– दुर्लभ अयमनर्घो हार मौक्तिकमाला अस्माभि शुल्कत्वेनार्पित तथापि वय न मुच्यामहे (कर्मणि लट्)।

हारेण नाय साध्वोऽधुना कटुव्यवहारेण कुपित इति बोधयति भगवती ललितां **पश्येति** — भवतीनां सर्वासा कलहपूर्णो य कूट छलम् तत्र कषायण रागेण पाटलितम् रञ्जितम् पाटल लोहित रूप नीतम् चित्तमेव दुकूल यस्य तादृशोऽसौ शिखण्डचूड बर्हापीड कृष्ण (इदानीं) प्रतिकूल एव अनुनेय असाध्य एवास्ते। अत्र

---

अभिलाष लिये, कठोर-भाषिणी तुम लोग दुर्दशा के सागर में गिरोगी नहीं तो और होगा क्या ? ॥ ९५ ॥

ललिता — भगवति ! देखें हम लोगों ने एक अलभ्य हार दे दिया, तब भी हम छुटकारा नहीं पा रही हैं।

पौर्णमासी — ललिते ! देखो, तुम लोगों के कलह भरे छल के कषाय रंग से शिखण्ड चूड (मयूरपङ्खधारी काकपक्ष से सुशोभित) का हृदयाम्बर शोणित

---

-sively abusive under the brain waive of longing for a quarrel, fail to have a fall in the ocean of distress ?

LALITĀ Your holiness ! see, a rare necklace has been given by us, and yet we have not been released

PAURNAMĀSĪ Lalita, look here. This Sikhandacūḍa ( = Kṛṣṇa with a peacock feather over his head ) is surely hostile,

---

1 "कटु" –° – इति पाठभेद।

दुकूलः प्रतिकूल एव शिखण्डचूडस्तिष्ठति, तदस्य विना प्रियोपहारमहार्य-संरम्भ[1]डम्बरोऽसौ मनस्वी ।

**नान्दीमुखी** — भअवदी, आणवेइ, एमाणं मज्झम्मि एदं भारं को क्खु वहिस्सदि । [ भगवति ! आज्ञापय, आसां मध्ये एतं भारं का खलु वक्ष्यति ? ]

**पौर्णमासी** — या पञ्चसु सरोजाक्षि परमाराधिका भवेत् ।
धरा सैवास्य विज्ञेया धुरीणाराधने धुरि ॥९६॥

---

चित्ते दुकूलत्वारोपः साभिप्रायः, दुकूलस्य मार्दवमार्जवं श्लक्ष्णत्वं स्निग्धत्वञ्च सहजधर्माः, तादृक् पेशलं चेतः भूयोभूयः कलहपूर्णेन छलिना व्यवहारेण जडतां नीत इत्यर्थः । पाटलं कृतमिति पाटलितं शोणितरङ्गरञ्जितम् । अत्र परम्परितं रूपकम् । अतः असौ मनस्वी दृढमनाः ( मनस् + विनिः प्राशस्त्ये ) प्रियोपहारं विना प्रियस्य वस्तुनः प्रियाया वा उपहारं समर्पणं विना अहार्यः असाध्यः अनपनेयः संरम्भस्य डम्बरः कोपावेशो यस्य तादृश एव तिष्ठति वर्त्तते इति भावः अतस्तदानुकूल्येनैव वर्त्तितव्यमित्युपदेशादत्रोपदिष्टं नाम नाट्यलक्षणमुक्तं भवति ।

सर्वासु तासु वरिष्ठा नान्दीमुखी भगवतीं पृच्छति का नामैतास्वेतादृशी या कुपितस्य सान्त्वनाय बलिर्भूत्वा एतं कार्यभारं वोढुमलम्भवेदिति **आज्ञापयेति** — वक्ष्यतीति वहतेर्लृटि रूपम् ।

प्रत्युत्तरति पौर्णमासी **येति** — या एतासु पञ्चसु ( निर्धारणे सप्तमी ) सरोजे इवाक्षिणी यस्यास्तादृशी सरोजाक्षी कमलनयना परमाराधिका परम् आराधिका

---

हो गया है, और वे विपरीत ही दिखाई पड़ रहे हैं । इसलिये अब इनका प्रिय उपहार दिये बिना इन महाशय का क्रोधावेश मिटाना सम्भव नहीं ।

**नान्दीमुखी** — भगवति ! आप ही बता दें, इन बालाओं में कौन इतना बड़ा भार उठा सकेगा ?

**पौर्णमासी** — कमलनयने ! इन पाँचों में दूसरे को ( > पर ब्रह्म स्वरूप कृष्ण को ) प्रसन्न कर लेने में अत्यन्त दक्षिण ( परम् + आराधिका ), [ परमा +

---

for the silk of his mind has been rendered fast red with the decoction of your quarrel. So without an agreeable present, he seems determined now to maintain his unappeasable wrath.

NĀNDIMUKHI : Your holiness ! please order which of these will bear this brunt ?

PAURṆAMĀSĪ : 96. Lotus-eyed one ! only she, who is the most competent in appeasing *( paramam + ārādhikā )* ( >most

---

1. "संरम्भ-°" – इति पाठान्तरम् ।

(ललिता मनागिव स्मित्वा राधिका पश्यन्ती दृगन्तं घूर्णयति, राधिका चिन्तामिव नाटयन्ती वृन्दाकर्णमूले लगति)

वृन्दा — भगवति ! वेदिमध्यमेयं निवेदयति — "हन्त विश्ववेदिनि !

उत्कृष्टतया परप्रसादनदक्षा, परमा उत्कृष्टा राधिका रेफेण अधिका नाम्ना एतादृशी राधिका, वस्तुतस्तु पर उद्रिक्त समुल्लसित यो मार मनसिज कामोऽधिको विशेषेण प्रबल॰ यस्या सा पर माराऽधिका कृपयन्ती रभसा केलिवेगसहा भवेत्।

[अत्र परमाराधिकेत्यत्र मुद्रालङ्कारो यत्र भङ्ग्यन्तरेण नामोल्लेख कृत राधिकेति। सा खलु एव अस्य षट्चक्रवर्त्तिन आराधने प्रसादने सन्तोषणाय धुरीणा निपुणा, अथवा धुरीणा कलाकौशलसम्पन्न पटु यदाराधन तस्मिन् साविष्टाम्। अथवा धुरीणस्य चतुरस्य आराधने धुरि अग्रे विज्ञेया, कथम् धरा इति — परस्मै देयद्रव्यस्य कृते दीयमानमकुप्य वसु धरा इत्युच्यते। अत्रापि दानमस्त्येव शुल्कस्येति निगूढोऽर्थ, तस्य दानस्य कृते धरारूपेणानर्घा धुरि विज्ञेया प्राधम्येन गणनीयेति भाव। अथवा राध्र गतौ इत्यतो लुडन्तस्य राधनपद गमने वाच्यम्। अत राधने धुरीणा गमने प्रशस्ता धौरा इति धरास्थाने पाठान्तरम्।

या खलु परमसुन्दरी परप्रसादनपटु समुद्दीतस्मरस्मेरा सा एव कृष्णाय दानरूपेण (धरात्वेन) देया — सा च परमा सर्वोत्कृष्टा राधिका एवेति तात्पर्यम्। अत्र श्लिष्टा कष्टा भणितिर्बदरपाक, च वस्तुमात्राभिधानोपयोगि पथ्यावक्त्र वृत्तम्॥९६॥

नर्मसखी ललिता श्रुत्वामु प्रस्ताव राधिकायामसूयन्ती सैर्ष्यमिव पश्यन्ती दृगन्त घूर्णयति अपाङ्ग मीलितोन्मीलितेन नर्त्तयति तेन चाकूत हार्द गमयति। मनागिव स्मित्वा = अत्यन्तमीषत् स्मेरमुखी भूत्वा इत्यर्थ।

अत्रान्तरेऽन्त प्रमुदिताऽपि नायिका चिन्तामिव नाटयन्ती कथ प्रसङ्गोऽसौ भवेदिति चिन्तया तदनुभाववशात् वृन्दाया कर्णमूले लगति श्रोत्राश्रयिणी भूत्वा स्वीयां चिन्तामाविष्करोति।

राधाया एतादृशमनुभाव विलोक्य क्षण विषयमन्यत्र क्षेप्तु वृन्दा पौर्णमासीं निवेदयति भगवतीति — वेदिवत् विलग्न मध्य कटिप्रदेशो यस्या सा वेदिमध्या

---

राधिका = उत्कृष्ट राधा, पर + मार + अधिका = प्रबल कामवती] हो, वही इस काम के लिये अग्रगण्य समझी जाय॥९६॥
(ललिता जरा सा मुस्करा कर राधिका को देखती हुई, आँख का कोना दबाती है, राधा चिन्ता का अभिनय करती हुई वृन्दा के कान के पास लग जाती है)

वृन्दा — भगवति ! यह कृशोदरी राधा निवेदन कर रही है — "हे प्रपञ्च के

gratifying, excellent Rādhā = *Paramā* + *Radhikā*) of the five, should be considered as the befitting present (a fit person to be used) for solacing him

VRNDĀ Venerable lady! this slender-waisted Rādhā submits,

प्रपञ्चितचारुचातुरीचमत्कृतिं ललितामेवात्र महासङ्कटे निरटङ्कयदालिमण्डलम्; केवलमसौ प्रतीक्ष्यायास्तवानुज्ञां प्रतीक्षमाणा समक्षमेवावतिष्ठते ।

**ललिता** — (स्मितं कृत्वा) हिअअ-रअणस्स विजअम्मि संवुत्ते अलं इमाए हठरंगरक्खाए । [ हृदयरत्नस्य विजये संवृत्तेऽलमनया हठरङ्गरक्षया । ]

---

कृशोदरी राधा निवेदयति **हन्तेति** — विश्वं वेत्त्यसौ विश्ववेदिनी तत्सम्बुद्धौ हे सर्वज्ञे भगवति ! त्वदागमनात्पूर्वं आलिमण्डलं अस्माकं सखिमण्डलं अत्र महासङ्कटे ललितां, प्रपञ्चिता विस्तारं नीता चारुचातुरीजन्या चमत्कृतिः यया तामेव निरटङ्कयत् निरणैषीत् । शुल्कनया कृष्णस्य मनस्विन आराधनाय वाक्चातुरीसम्पन्नेयं ललितैवो-पयुक्ता स्यादिति पूर्वमेवास्माभिः सर्वाभिः निर्णीतमेव । इदानीं समर्पणाय तथा कर्तुमियं ललिता प्रतीक्ष्यायाः पूज्यायाः तव अनुज्ञां प्रतीक्षमाणा समक्षमेव अवतिष्ठते उपस्थिता अस्ति । "समवप्रविभ्यः" इत्यनुशासनादनावपूर्वकस्थाधातोरात्मनेपदत्वम् ।

सर्वं करणीयं निश्चयकोटिं गतेऽपि वृन्दाया भणितिमस्थाने मत्वा विहस्य ललिता ब्रूते **हृदयेति** — अस्माकं हृदयरत्नस्य कृष्णचन्द्रस्य विजये स्वाभीष्टोपलब्धिरूपे संवृत्ते जाते सति पौर्णमास्या च प्रतिश्रुते अलं पर्याप्तमेव भवतु अनया हठात् रङ्गस्य रक्षया राधामाधवलीलायामन्तरायकरणेन — बहु चर्चितमिदम् ।

अत्र ललिताया उक्तिर्युक्तिनाम नाट्याङ्गमुपस्थापयति । अत्र सस्मितोक्तौ वर्णघटना कामपि माधुरीं भजते यथा 'अलमनया हठरङ्गरक्षया' इति गद्यखण्डः 'भवति नजायथ मालती (यमुना) जरौ' इति लक्षणयोगाद् मालतीचरणघटितो रम्यं वृत्तगन्धमावहतीति सचेतोभिर्विभाव्यम् ।

---

रहस्य को भलीभांति जानने वाली ! अपनी चारु चातुरी से चमत्कार का प्रसार करने वाली ललिता को ही सहेलियों ने इस महासङ्कट से उद्धार के लिये निर्णीत किया है, और ललिता, पूजनीया आपकी सहमति की प्रतीक्षा करती हुई, सामने ही खड़ी है।"

**ललिता** — (मुस्करा कर) प्राणवल्लभ हृदयमणि की जीत हो जाने पर अब यों ही रंग गाँठना ठीक नहीं ।

---

"Oh knower of the ways of the world ! The friends' circle has assigned the task of rescuing us from this great calamity only to Lalitā whose admirably charming skill is well-established. Here is she, standing before you, only waiting for the permission of your venerable holiness.

**LALITĀ** *(smiling)* when Jewel of the heart has been won over, enough of this show of forced sparing of one's own self.

**पौर्णमासी** — नायुक्तमुक्तं ललितया ।

**राधा** — ( किञ्चिदुच्चैरिव ) भअवदि, प्पसीद प्पसीद, एमस्सि दुरंत-व्वसणेहिं कठोरघट्टीवालहत्थे मा क्खु कादरो पइदिदक्खिणो एसो जणो सुलुक्किअदु । [ भगवति ! प्रसीद, प्रसीद । अस्मिन् दुरन्तव्यसने कठोरघट्टपालहस्ते मा खलु कातर प्रकृतिदक्षिण एष जन शुल्क्यताम् । ] (इति संस्कृतेन )

> भ्राम्यत्येष गिरेः कुडङ्गकुहरे कृष्णो भुजङ्गाग्रणीः,
> स्पृष्ट्वा येन जनः प्रयाति विषमां कामप्रसाध्यां दशाम् ।

---

ललितया सह मन्यमाना भगवती प्राह **नायुक्तमिति** — यदुक्त ललितया तत् अयुक्त अनुपपन्नमसमीचीन नास्ति ।

शुल्कायितत्वेन श्रीराधार्पणस्य निश्चप्रचत्वे स्वाक्रोश गमयितुमिव किञ्चिदुच्चै तारस्वरेण बभाण राधा **भगवतीति** — प्रसीद प्रसीद मयि कृपा कुरु । अस्मिन् दुरन्ते बहुकालव्यापिनि व्यसने सङ्कटरूपे अस्य कठोरस्य घट्टपालस्य हस्ते मा खलु कातर भीरु प्रकृत्या निसर्गेणैव दक्षिण सरल परच्छन्दानुवर्त्ती एष जन शुल्क्यताम् दानरूपेणा-र्प्यताम् — इति स्वस्य भीरुता ख्यापयन्ती आत्मन पेलवत्व, सम्प्रदानस्य च भयावहत्व ज्ञपयति **भ्राम्यतीति** — गिरे गोवर्धनपर्वतस्य कुडङ्गस्य तरलताग्रहस्य कुहरे निम्ने परिसरे एष कृष्ण काल भुजङ्गाग्रणी महासर्प भ्राम्यति इतस्तत सञ्चरति येन स्पृष्ट्वा यस्य सयोगेन जन काम् (+अपि ) विषमां दारुणां अप्रसाध्याम् अचिकित्स्यां दशां स्थिति प्रयाति । यस्य स्पर्शमात्रेण दशेन तावद्दूरे आस्ताम् जन निरुपायां दुर्गतिं भजते । अत एतादृशि व्यतिकरे मम कियत् अभद्र भद्र वा दु ख सुख वा भवितेति आकलयितु

---

**पौर्णमासी** — ललिता ने अनुचित नहीं कहा है ।

**राधा** — (कुछ ऊँचे स्वर में) भगवति ! क्षमा करें, आप प्रसन्न हों, और इस अन्तहीन सङ्कट स्वरूप निष्ठुर घट्टपाल के हाथ में स्वभाव से सरल, भीरु इस राधा को शुल्क रूप में न दें । (संस्कृत के माध्यम से )

गोवर्द्धन पर्वत की झाड़ियों की गुफाओं के इर्द गीर्द यह महाविषधर काला नाग [ > कामी प्रवर कृष्ण ) चक्कर काटता रहता है, जिसे छूते

---

PAURNAMĀSĪ There is nothing wrong in what Lalitā says.

RĀDHĀ *Please, please, your holiness ! in this abject calamity, do not consign this shy person ( in me ) who, by nature, is straightforward, into the hands of this harsh toll gate chief in lieu of toll tax.* *( In Sanskrit )*

97 This huge black serpent ( >Kṛṣṇa, the foremost among the lewd ) roams about in the deep declivity of this mountain, by whose mere touch people pass into a

**नाभद्रं न च भद्र[1]माकलयितुं शक्तास्मि दृष्टिच्छटा-**
**मात्रेणास्य हताहमिच्छसि कुतः प्रक्षेप्तुमत्रापि माम् ॥ ९७ ॥**

( इति लीलया शुष्कं रुदती पादोपकण्ठे लुठति )

---

परिच्छेत्तुं न शक्ताऽस्मि । संशयानाऽहं कीदृशः परिणामः स्यादिति निर्णेतुमसमर्थाऽस्मि । यतः अस्य दृष्टेः अवलोकस्य या च्छटा क्रमः तावतैव दर्शनप्रसङ्गेनैव केवलमहं हतास्मि । अतः भगवति ! अत्रापि एतस्मिन् महासङ्कटे माम् कुतः केन कारणेन मम केनापराधेन प्रक्षेप्तुं निर्ममतया पातयितुम् इच्छसि — सर्वथानर्थ एव इति ।

अत्र श्लेषमर्यादया पुनः अस्य गिरेः निकुञ्जेषु एष पुरोवर्त्ती कृष्णः भुजङ्गाग्रणीः विलासिषु प्रमुखः सञ्चरन्नास्ते, यस्य स्पर्शेन जनः कामप्रसाध्यां केवलं कामोपभोगेनैव प्रशमनीयां दशां अष्टमीं स्मरावस्थामवाप्नोति — यस्य दर्शनमात्रेणैवाहं कामोपहता भवाम्यतो नाहं जाने तस्य संयोगमुपेत्य मे कल्याणं भविताऽथवा अशुभं स्यादिति । अत्र हे भगवति ! शङ्काकुले प्रसङ्गे किमिति मां त्यजसीति सानुनयं पृच्छति वाञ्छन्त्यपि अनिच्छन्तीव तिष्ठति राधा । अत्र संशयो नाम नाट्यभूषणम् । पूर्वार्धे सभङ्गश्लेषः, परार्धे काव्यलिङ्गमलङ्कारश्च । वैदर्भीरीतिरुपनागरिकावृत्तिः, प्रसादगुणः, शार्दूलविक्रीडितश्च वृत्तम् ॥ ९७ ॥

इति एवं ब्रुवाणा शुष्कमनस्रं वाष्पप्रपातं विना रुदती भगवत्याः पादयोः उपकण्ठे समीपं लुठति देहमितस्ततः पार्श्वयोः चालयन्ती पतति — भयस्यानुभावोऽयम् । शुष्कमिति क्रियाविशेषणं साभिप्रायं सत् दम्भं प्रदर्शयति । उपकण्ठे — इति अव्ययीभावः 'तृतीया सप्तम्योर्बहुलम्" इत्यनेन साधुः ।

---

ही प्राणी किसी दारुण, असाध्य [ > काम + प्रसाध्याम् = मनोजलीला से ही दुरुस्त होने वाली ] दशा तक पहुँच जाता है। ऐसी अवस्था में मैं भला-बुरा समझने में असमर्थ हूँ। इसकी चितवन मात्र की अदा से ही मैं घायल हो चुकी हूँ, तब भी आप इस सङ्कट में मुझे क्यों धकेलना चाह रही हो ॥ ९७ ॥

( नखरे से बिना रुलाई की रोती हुई, पैरों पर लुढ़क जाती है )

---

painful, incurable state (>a distressful condition capable of being cured only through Cupid). As such, I am not competent to decide what is wholesome and what is otherwise. (As far as I am concerned) I feel undone by the mere flash of his eyes. Even in such a plight why you want to throw me ?

( *she pretends to weep with dry eyes & rolls at her feet* )

---

1. "भद्रमा कलयितुम्" – इति क्वचित्पाठः ।

पौर्णमासी — (भुजाभ्यामाश्लिष्य) वत्से ! मा रोदन कृथाः, सर्वमिदं ते शुभोदर्कं भविष्यति ।

कृष्ण — भगवति ! सत्य भागधेयभागस्मि, यदत्र साधीयसि समये तवोपस्थितिर्बभूव, तत स्वीकृतशुल्कमेवात्मानमवधारयामि ।

---

एव विह्वलामिव राधाम् उत्थाप्य भुजाभ्याम् आश्लिष्य सान्त्वयन्ती पौर्णमासी प्राह **वत्स इति** — अयि वत्से कामलहृदय ! मा रोदन कृथा । कृथा इति कृधातो माङि लुङ्, माङ्योगे अडाटौ नस्त इत्यनन अकृथा इत्यस्य स्थाने कृथा इति प्रयोग । सर्वमिद यदुपकल्प्यमान तत् त तव कृत शुभ उदर्क आयति परिणामो वा यस्मिन् तादृश भविष्यति । तव हितायैव कल्पिष्यत इत्यथ ।

स्वानुकूल्यमेवेद मनोरथपूरकमिति कृत्वा भगवतीमभिनन्दति कृष्ण **सत्यमिति** — भागधेय सौभाग्य मत्तस्सौ भागधेयभाक् नूनमहमस्मि, यत साधीयसि प्रशस्यतरे समये प्रसङ्गे त्वादृश्या उपस्थितिर्यदा परमपेक्षिताऽऽसीत्तदानीमेव तवात्रोपस्थितिर्बभूव । ततो मया प्राप्तुमासीयच्छुल्क तन्मया सर्वमधिगतमेवेति आत्मानमवधारयामि निश्चिनोमि । स्वीकृतशुल्क प्राप्तशुल्कमित्यथ । पुर एव विद्यमानाया पौर्णमास्या उपस्थिति सञ्जातेत्यत्र अभूदिति वक्तव्ये बभूवेति अनद्यतनपरोक्षाथ विहितस्य लिट प्रयोग हर्षातिरेक गमयति यद्वशादपरोक्षमपि परोक्षमिव जातम्, वस्तुतोऽपि नायिकां प्रति निबद्धदृशस्तस्य (कृष्णस्य) पुरत कदा नु पौर्णमासी उपयातेति नाबुध्यतैव नायक । अत एव पौर्णमास्या असूचितप्रवेश एवाकारि कविना यद्यपि भरतोक्तदिशा तु "तत प्रविशति पौर्णमासीति" नासूचित पात्रप्रवेश कार्य इति विधानस्यापि नानुसृतत्वमेव । अतो लकारव्यत्यासोऽत्र साभिप्राय इत्यवगन्तव्यम् । अत्र भाषण नाम निर्वहणसन्ध्यङ्गमुक्तमस्ति ।

---

**पौर्णमासी** — (बाहुओं में लेकर) प्यारी बेटी ! रोओ मत, तुम्हारे लिए इस सबका परिणाम भला ही होगा ।

कृष्ण — भगवति ! सचमुच में भाग्यशाली हूँ जो कि यहां बड़े मौके के समय आपकी उपस्थिति हुई, इसी से में अपनी चुंगी भर पाया, ऐसा समझ रहा हूँ ।

---

PAURNAMĀSĪ (*Encircling Rādhā in her arms*) Dear child ! donot weep All this will end well with you

KRṢṆA Venerable lady ! I am really fortunate in that your presence occured here at an excellent moment I, therefore, consider that I have been paid all my dues of tax.

**पौर्णमासी** — ( जनान्तिकम् ) रामणीयकनिधे[1] ! रमणीमणिरेव तवोप-कण्ठस्थलशोभनी बभूव, किमन्येन फल्गुना शुल्केन ।

**कृष्णः** — ( सानन्दमात्मगतम् ) दिष्ट्या यदभीष्टा शुल्कीकृता भगवत्या राधिका । ( प्रकाशम् ) भगवति ! सत्यमस्य मेदुरमहारागकौमुदीडम्बरकरम्बितस्य रमणीरत्नस्य लब्धये भगवत्याः प्रसादवीथिमन्तरेण नान्या युक्तिरभिवर्त्तते ।

---

जनान्तिकं पराश्राव्यं कृष्णं सम्बोधयति पौर्णमासी **रामणीयकेति** - रामणीयकस्य सकलसौन्दर्यसञ्चयस्य ( अत्र समूहार्थे कप्रत्ययः ) निधे ! रमणीषु मणिः रत्नमेव–"जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते" तथा सर्वोत्कृष्टां ललनां त्वमवाप्सीः । तव कण्ठे इति उपकण्ठम् एव स्थलं तस्य शोभनीबभूव । अत्र शोभनोपपदात् "कृभ्वस्तिभ्यश्च्वे" त्यनेन कालसामीप्यद्योतनाय भविष्यत्यर्थेऽपि लिट् । जात एव राधालाभ इत्यवेहीति तात्पर्यम् । अत्र सर्वत्र प्रत्ययगतवक्रता बोध्या । अन्येन रमणीरत्नादतिफल्गुना क्षुल्लकेन शुल्केन निष्कादिरूपेण किम् प्रयोजनमधुनेत्याकूतम् ।

मनसि समाश्वस्तो नायकः प्राह स्वगतम् **दिष्ट्येति** – सौभाग्यवशात् यदभीष्टा या अभिप्रेता सा राधिका भगवत्या शुल्कीकृता शुल्कार्थे दातुं सङ्कल्पिता इति चिन्तयन् प्रकाशं सर्वश्राव्यं प्राह **भगवतीति** — मेदुरः कर्बुरितो यो महारागः पाटलरङ्गस्तत्सम्भिन्ना कौमुदी चन्द्रिका तस्या डम्बरेण अतिशयेन करम्बितस्य सम्पृक्तस्य सुशोभितस्य रमणीषु रत्नस्य लब्धये भगवत्याः प्रसादः अनुग्रहः एव वीथिं प्रतोलीं तदुपसर्पिणीं पथ्यां अन्तरेण विना ( अन्तराऽन्तरेण युक्तेति द्वितीया ) अन्या युक्तिरुपायः न अभिवर्त्तते अभि समीपे वर्त्तते सुलभा नास्तीत्यर्थः । कौमुदीस्थानीया राधायाः सुषमा, तत्र मेदुरो महारागः इति माञ्जिष्ठं रागं सूचयति । अत्र उपकृतिर्नाम नाट्याङ्गम् ।

---

**पौर्णमासी** — ( एकान्त में ) सकल सौन्दर्य रत्नाकर ! ललनारत्न ही तुम्हारे गले की शोभा बन गई, दूसरे तुच्छ शुल्क से क्या प्रयोजन ? ।

**कृष्ण** — ( आनन्द विभोर हो, मन ही मन ) सौभाग्य से मनचाही राधिका को ही भगवती ने शुल्क के लिए निश्चित कर लिया । ( समक्ष ) भगवति ! सचमुच स्निग्ध माञ्जिष्ठ राग की छटामयी [ पद्मराग सी लालिमा लिये ]

---

PAURṆAMĀSĪ : *(aside)* Treasure of loveliness ! the very gem of a beautiful woman is well at your disposal *(lit. adorns your neck)*. What boots it to you then to think of having the trivial tax amount !

KṚṢṆA : *(gladly, to himself)* Thank God. Beloved Rādhā has been equated with tax by her holiness. *(aloud)* There was no other way than your grace to acquire this gem

---

1. "रामानायकनिधे:" – इति पाठभेदः ।

पौर्णमासी — ( सनमस्मितम् ) नागरेन्द्र ! मया चिन्तामणिरियं प्रस्तुता, भवता तु कान्तामणिरवधारिता ।

कृष्ण —( सलज्जस्मितम् ) मद्गिरामप्यत्रैव विश्रान्तिः, यदेतस्य ललनाललामस्य सङ्गमे भगवत्पारिषद्याः साचिव्यविद्यासम्पदेव हेतुरासीत् ।

पौर्णमासी उपहास कुर्वतीव कृष्णमाह **नागरेन्द्रेति** — चतुरेषु रसिकेषु अग्रगण्य ! इय प्रस्तूयमाना वस्तुत चिन्तामणि सर्वार्थसिद्धि मया तुभ्यमर्प्यते, भवता तु सा केवल कान्तासु मणिरिवोत्कृष्टेति अवधारितम् । त्व तावद्वस्तुनोऽनर्घता परिच्छेत्तु नालमभूरेति विनोद ।

कृष्ण पौर्णमास्या सह मन्वान स्वस्य सूक्ष्मालोचनेऽपटीयस्त्व स्वीकुर्वन्निव सलज्ज स्मित्वा प्राह भगवतीं **मद्गिरि** — मद्गिरा मम वाचामपि अत्रैव एतस्मिन्विषये इमां ललनामधिकृत्य विश्रान्ति , कीदृशी सेति मद्वाचामगोचरैवेति तात्पर्यम् । अनासम्बन्धे सम्बन्धरूपातिशयोक्ति । **यदेतस्येति** — अस्या ललनाललामस्य रमणीरत्नस्य सङ्गमे भवत्पारिषद्या वृन्दादय तासां साचिव्य साहाय्यं तस्य विद्या कला तस्या सम्पत् विशेषोत्कर्ष एव हेतु कारणमासीत् । यदि अत्रभवत्य एता पारिषद्या मण्डलानुगा सख्य साहाय्य नैवाकरिष्यन् नाभविष्यदेव तस्या लब्धिरिति पौर्णमास्या सखीनां साहाय्य पताकेत्येवेत्यङ्गीकृत्यात्मन औदार्य व्यनक्ति नायकः — इति पारिषद्यासाचिव्येति समस्त पाठे । भगवत्पारिषद्या इत्यत्र स्वीकृते भिन्नपदे पाठे भगवत परमेश्वरस्य पारिषदी या भगवती त्व तस्या साचिव्यमन्तराऽशक्यैवासात्कार्यसिद्धिरिति तात्पर्यम् । एव कृते पौर्णमास्या भगवत साहचर्यात् विशिष्टशक्तिमत्ता ख्याप्यते । अन्यदुभयपाठे सममेव ।

---

चाँदनी की अपार सुषमा से सम्पन्न, इस रमणीमणि की प्राप्ति के लिये आपके अनुग्रह की पगडण्डी के सिवा दूसरी कोई युक्ति नहीं है ।

पौर्णमासी — ( विनोदी मुस्कान के साथ ) चतुरशिरोमणि ! मैंने यह चिन्तामणि प्रस्तुत की है, और आप ने तो इसे कान्तामणि मान लिया ।

कृष्ण — ( लाज भरी मुस्कान के साथ ) अब मेरे पास कहने को कुछ शेष नहीं रहा । इस रमणीमणि के मिलन में भगवती (के सभासद) का मन्त्रणापूर्ण विद्या विभव ही कारण है ।

---

of a beautiful belle — this gem, a variegated mass of moonshine of rubicund abundant love

PAURNAMĀSĪ ( *affectionately smiling* ) Most elegant fellow ! by me she was presented to you as a Wish-gem (= *Cintāmaṇi*, the gem longed for by you ), but by you she is taken as a gem of a woman

KṚṢNA ( *smiling bashfully* ) It is here only that my words rest. For, the acquisition of such a top beauty owes its source to the very excellent tactful help of the divinity like you. ( > of members of your corps. )

**पौर्णमासी** — ( सनर्मस्मितम् ) चातुरीविद्यामहोपाध्याय ! कृतं वैलक्ष्य-वैभवेन, चिन्तामणिलाभ एवावश्यं कान्तामणिलाभाय कल्पते, न हि प्रत्यूष-शोभायामुपस्थितायां भानुजायाः श्रियो विष्णुपदसेवायां व्यभिचरिष्णुता घटते।[1] ततस्त्वमद्य पूर्णोऽसि ।

**वृन्दा** — पूर्णिमायामुपस्थितायां को नाम कलानिधेरपूर्णतावकाशः ?

कृष्णं प्रोत्साहयन्ती पौर्णमासी प्राह **चातुरीति** — हे ! चातुरी सम्बन्धिनी या विद्या तस्या महोपाध्याय देशिक ! वैलक्ष्यवैभवेन त्रपाया अनुभवेन प्रकटनेन चालम् । मा वृथा औपचारिकीं त्रपामाविष्कुरु । यतः चिन्तामणेः लाभे जाते सति स लाभः कान्तामणेर्लाभाय कल्पते एव । सर्वार्थप्रदस्य चिन्तामणेरुपलब्धौ सर्वान्तःपाति कान्ताख्यद्रव्य-मपि लब्धमेव, महर्घे वस्तुनि स्तोकस्य, व्यापके व्याप्यस्य वान्तर्भावात् ॥ ततः तस्मादेत-ल्लाभात्त्वमद्य पूर्णः सर्वाभीष्टसम्पन्नः असि । एवमपि सिद्धान्ते राधामाधवयोरेकमूर्तित्वापादने पूर्णस्यापि माधवस्य राधां विनाऽपूर्णत्वकल्पनायोगात् । अत्रानन्दो नाम सन्ध्यङ्गम् ।

एवं ब्रुवतोः परस्परं प्रशंसतोः वृन्दाऽपि उभयोश्चाटुमातनोति **पूर्णिमायामिति**— कृष्णस्तु भगवान्स्वयमिति वैष्णवानां प्रतीतेः भगवतो नारायणस्य समस्ताभिः कलाभिः सम्पन्नत्वात् कृष्णस्य कलानिधित्वं प्रसिद्धं सविशेषाह्लादकत्वादिन्दुरूपत्वञ्च । पौर्णमास्यां तिथौ प्रतिकलमेधमानश्चन्द्रबिम्बं समग्रकलासम्पन्नं भवति । तत्र श्लेष-वक्रोक्त्या भण्यते

---

**पौर्णमासी** — चातुरी विद्या के आचार्य ! उपकृत भावना से संकुचित होने जैसी कोई बात नहीं । चिन्तामणि की प्राप्ति हो जाने पर कान्तामणि का लाभ तो हो ही जाता है । सचमुच प्रत्यूष वेला में सूर्य के किरणों की प्रभा सर्वत्र आकाश को सदा ही देदीप्यमान करती है । [ < आश्चर्य नहीं कि प्रत्यूष के समय भानुजा श्री यमुनाजी की लहरों की शोभा ( विष्णुपद ) भगवान् कृष्णचन्द्र के चरणों की सेवा में सर्वदा तत्पर रहे । ] इस लिये अब आप सर्वथा परिपूर्ण हैं ।

**वृन्दा** — पूर्णिमा आ जाने पर कलानिधि = सोलह कलाओं से सम्पन्न चन्द्रमा,

PAURṆAMĀSI : Learned master of skills ! enough of this grand affectation. The very acquisition of a Wishgem facilitates the acquisition of a gem of the beloved. In fact, it is no deviation, if, along with the splendour of the twilight, the lustre shed by the Sun serves the sky (*Viṣṇupadam*) by radiating it all through. ( > It is always true that the grace of the Yamunā ( = *Bhānujā* ) unfailingly associates at the twilight with the feet of Lord Viṣṇu = Kṛṣṇa ). So this is the day of your fulfilment.

VṚNDĀ : When the Full moon day is there, where is the room

1. "अत्र न दीसारम्भ···परते" — इसन्तोऽद्यः क्वचित्पाठः ।

पौर्णमासी — वृन्दे ! राधामनुरुद्ध्यमानेन विधुनैव मधुरीकृतेयं माधवीया पौर्णमासी ।

यत् भगवतापौर्णमासीरूपाया पूर्णिमायामुपस्थितायां कलानिधे कृष्णचन्द्रस्य अपूर्णतायै को नाम अवकाश ? नास्त्येवेत्यर्थ । अत्र श्लेषार्थापत्ती अलङ्कारौ स्त । त्रयाणां पात्राणामत्र संवादात्परिभाषणं नाम निर्वहणसन्ध्यङ्गम् ।

परस्परमेव प्रशसत्सु प्रमुखपात्रेषु पौर्णमास्यपि सहयोगं कुर्वाणा राधामाधवाभ्यां पौर्णमास्येवोपकृतेत्यभ्युपगच्छति **वृन्द इति** — [ वस्तुत ] इयं युष्माकं पुरतो विद्यमाना ( आत्मन कृतेऽन्यपुरुषैकवचनेन परामर्श गौरवेऽपि विनयं गमयति ) अहं माधवीया माधवमाससम्बन्धिनी पौर्णमासी राधामनु विशाखानुराधानक्षत्र रुद्ध्यमानेन सह गम्यमानेन विधुना चन्द्रमसैव मधुरीकृता मधु राति ददातीति मधुरा तादृशीकृता । तात्पर्यन्तु अनुराधासयोगेन विधुनैव पौर्णमासी माधवीया सती मधुरीकृता मधुवर्षिणी सम्पन्ना अत नद गौरव पौर्णमास्या, न वा माधवमासस्य, अपितु विधोरेव, स च विधु सविशेषमाह्लादको यदा राधया विशाखानुराधया सवलित — एवं वृन्दया 'पौर्णमास्या विधु पूर्णतां नीयते' इति ख्यात गौरव पौर्णमासी विधोरुपरि प्रत्यावर्त्तयति इति भाव ।

श्लेषेण च हार्दमाकूत बोध्यते, तद्यथा — वस्तुत इयं पौर्णमासी तु माधवीया माधवस्य कृष्णस्यैव निघ्ना, तथाप्यद्य मानेन सन्मानेन शुल्कनिष्क्रयरूपेण राधामनुरुद्ध्य स्वीकृत्य विधुना कलानिधिना कृष्णचन्द्रेणैव मधुरीकृता स्वेप्सितोपलम्भाय साचिव्यसौभाग्य प्रदाय सर्वसखीजनमनोहरा राधायै च मधु कृष्णचन्द्र राति ददाति असौ तादृशी कृता, राधामाधवयो सयोगघटने करणत । नीतेति विधो कृष्णस्य एव माहात्म्य न तु पौर्णिमास्या इति । अपि च राधामनु रुद्ध्यमानन हठिलतया प्रवृत्तेन विधुनैव इयं माधवीया पौर्णमासी मधुरभाव नीतेति, यदि

[ > भगवती पौर्णमासी जहां हों, वहा विष्णु की समस्त कलाओं से सम्पन्न पूर्णावतार कृष्णचन्द्र ] की अपूर्णता के लिये कहाँ अवकाश रह जाता है !

**पौर्णमासी** — वृन्दे ! राधा ( = विशाखा ) नक्षत्र के साथ चलने वाले चन्द्रमा से ही यह माधव ( वैशाख मास ) की पौर्णमासी मनोहर बना दी गई है [ > राधा के पीछे हठ पूर्वक उलझे हुए कृष्णचन्द्र ने ही माधव ( कृष्णचन्द्र ) की ही इस पौर्णमासी को आह्लादित किया है ] ।

for want of fulness in the disc of the Moon !

PAURNAMĀSĪ Vṛndā ! just as the Full moon day in the month of May ( *Mādhava = Vaiśākha* ) during the vernal season ( *mādhavīya* ) looks all the more sweet with the association of the Moon in the company of the lunar mansion Rādhā, I, Paurnamāsī too devoted to Mādhava ( Kṛṣṇa ) ( = *mādhavīya* ), am, indeed, rendered sweet by Kṛṣṇacandra ( = *vidhu = Candra*, part of a name for the whole ) attached with Rādhā

**वृन्दा — तदेनं पूर्णमेव पूर्णिमासमक्षमुपलक्षयतु विशाखासख्या ।**

**पौर्णमासी — वैदग्धी[1]चन्द्रिकाचन्द्र ! बाढमत्र प्रतिभूरभूवम् । सायं**

एतावत्कालपर्यन्तं राधामनु आग्रहग्रहिलो नाभविष्यत्कृष्णस्तदा सत्यामपि माधवीयायां माधवच्छन्दानुवर्त्तिन्यां पौर्णमास्यां, उभयोरेकत्वघटनार्थं तस्याः ( पौर्णमास्याः ) कृते कुतो नु अवकाशः प्रसक्तोऽभविष्यत् ? अतः राधाबद्धलालसेन विधुनैव इयं पौर्णमासी सविशेषगौरवलम्भनात् मधुरीकृता लोकप्रियतां प्रापितेति हृदा तदुपकारमभ्युपैति पौर्णमासीति बोध्यम् । अत्र कृष्ण-वृन्दा-पौर्णमासीनां सँल्लापे मिथः प्रसादवर्णनात् पर्युपासनं नाम निर्वहणसन्धेरङ्गमुपक्षिप्तमभवति । अत्र शब्दार्थश्लेषालङ्कारः, विधुपदे अर्थश्लेषः, माधवीयपौर्णमासीपदयोः शब्दपरिवृत्त्यसहत्वात् शब्दश्लेषः । राधामनुरुद्धयमानेनेति सभङ्गः एकवृन्तगतफलद्वयन्यायेन श्लेषः ॥ अत्र मधुसमस्नेहं प्रति संकेतः ।

कार्यमुपसंहर्तुमिव वृन्दा नायकयोः सम्बन्धं घटयितुमाह **तदेनमिति** — तत् एवं सति पूर्णिमासमक्षमेव पौर्णमास्यां भगवत्यां उपस्थितायामेव तत्साक्ष्ये एव एनं विधुं विशाखा सख्या अनुवर्त्तिन्या राधया पूर्णमेव सम्पन्नमेव उपलक्षयतु प्रदर्शयतु । माधवे मासि पूर्णिमा प्रायेण राधानुराधानक्षत्रयुता भवति, राधानक्षत्रं च ( एकदेशग्रहणेन नाम्नः समग्रसंकीर्त्तनं भवतीति न्यायात् राधापदेनानु ग्राह्यम् ) अनुराधा सदा विशाखामनुवर्त्तते । [ विशाखानक्षत्रस्य राधेत्यपरपर्यायः ] अतः विशाखा सख्या राधया पूर्णमेनं कृष्णरूपं चन्द्रं पूर्णिमासमक्षं विदधातु । पक्षे विशाखा नाम सखी स्वसख्या राधया पूर्णं समेतं पौर्णमासीसमक्षमेव उपलक्षयतु विदधातु प्रदर्शयतु वेत्यर्थः । अत्र स्वाभीष्टलाभाद् ग्रथनं नाम सन्ध्यङ्गमुक्तमभवति ।

सङ्केतममुं सूत्रयित्वा विदग्धा पौर्णमासी मध्याह्नवेलेयं कार्यनिर्वृतेरनुपयुक्ता प्रसक्तस्य च कर्मणो यज्ञवाटगमनस्यानुरूपेति कृत्वा सर्वाः सखीः दानेन्द्रसन्दंशाद्उन्मोचयितुं कृष्णं सम्बोधयति **वैदग्ध्येति** — वैदग्ध्यं चातुरी सैव चन्द्रिका आह्लादिका ज्योत्स्ना

---

**वृन्दा —** तो अब विशाखा नक्षत्र की सहगामिनी अनुराधा से घटित पूर्णचन्द्र [ > विशाखा की सहेली राधा से सम्पन्न कृष्णचन्द्र ] भगवती पौर्णमासी के समक्ष प्रकट किये जाँय ।

**पौर्णमासी —** चातुरी की चन्द्रिका से सम्पन्न ( कृष्ण - ) चन्द्र ! इस विषय में मैं

VRNDĀ : Well then, may your holiness see him ( Kṛṣṇa – Candra ) full along with Viśākhā's friend, Rādhā in the presence of the Pūrṇimā ( *alias* Paurṇamāsī ) ( < in the same manner in which the Moon on the full moon night in Vaiśākha becomes all full in the association of his lady companion Viśākhā otherwise known in astronomy as the lunar mansion of Rādhā ).

PAURṆAMĀSĪ : Oh Moon, the mass of brilliant tactfulness ! ( *lit.*

1. "वैदग्ध्य°" – इति पाठभेदः ।

तवाभीष्टमेव शुल्कमर्पयिष्यामि । तदनुमन्यस्व साम्प्रतममूरध्वरवेदीप्रसाधनाय साधयन्तु ।

कृष्ण — ( सापत्रपम् ) यथाज्ञापयति भगवती ।

पौर्णमासी — सर्वानन्दकदम्बमूर्ते ! यद्यपि बाढमेतया हृदयङ्गमया ते

---

तया समन्वितश्चन्द्र तत्सम्बुद्धौ हे चातुर्यसम्पन्न ! अपि च विदग्धस्त्व जानीष यद् मध्याह्न नैव काल केले, अत नायिकानलिन्या विकासाय चन्द्रोदय अपेक्ष्यते इति हेतौ वैदग्ध्येन स्वचातुर्येण चन्द्रिकाया ज्योत्स्नास्वरूपाया श्रीराधाया अविनाभावेन सम्पृक्तश्चन्द्र (यत चन्द्रश्चन्द्रिका च सदैव सह वर्त्तते इति) अपि च विदग्धस्य विशेषेण मनसिजरुजा दग्धस्य भाव वैदग्ध्य शमयितु हे चन्द्रिकासमन्वितचन्द्र । अनोभयो युवयो राधामाधवयो सम्मेलनविषयेऽह बाढ सम्यक प्रतिभू दर्शनोपनिधि ( surety for presence ) अभूवम् । उभयो मेलन अह विश्वासप्रदायिनी । नून सायकाले उपपन्ने समये तव अभीष्ट शुल्क राधारूपमर्पयिष्यामि । तत् अनुमन्यस्व साम्प्रतमम् उपसखी अध्वरवेदिप्रसाधनाय यज्ञवाटे वेदिकार्यसम्पादनाय साधयन्तु गच्छन्तु येन ऋत्विजो नवनीत लभेरन् । साधधातुरत्र नाटकीयप्रवृत्तौ गमनार्थक । अनुमन्यस्व अनुजानीहि । मुच्यन्तामेता सम्प्रतीति उपसहाराख्य नाट्यलक्षणमुपस्थापयति । वैदग्ध्य चन्द्रिकाचन्द्रेति सम्बोधन श्लोकपादरूप वृत्तगन्धि ।

कृष्ण लज्जामपास्य धीरतया समाश्वस्त इवाह यथेति — यथा भगवती आज्ञापयति तथा सम्प्रति भवतु प्रतिश्रुतञ्च साय सम्पाद्यतामिति शेष ।

उपसखिहीर्षन्ती पौर्णमासी कृष्णमभ्यर्थयते सर्वानन्देति — सवस्य सर्वविधस्य आनन्दस्य य कदम्ब स्तोम तस्य मूर्त्ति साक्षात्प्रतिमा मूर्त्तिमान् आनन्द एव, कृष्णस्य पूर्णावतारत्वात्सच्चिदानन्दरूपता सिद्धैव — तत्सम्बुद्धौ हे आनन्दावतार !

---

सचमुच नमानतदार हो चुकी हूँ। शाम को तुम्हारी मनचाही शुल्क समर्पण करूँगी ही । तो इस समय इन्हें यज्ञवेदी के कार्य का सम्पन्न करने जाने दीजिये ।

कृष्ण — ( नि सङ्कोच भाव से ) जैसी आपकी आज्ञा ।

पौर्णमासी — सकल आनन्द राशि रूप ! यद्यपि तुम्हारी इस दानकेलिक्रीडा से मैं

---

moonl ght ) in fact I have stood a surety in the matter I shall therefore offer you this evening the very tax desired by you So please permit these ladies to go hence to decorate the altar in the booth of sacrifice.

KRṢṆA (*smiling blushed*) As it pleases your holiness

PAURṆAMĀSI Oh the joy of the universe incarnate ! I am

लीलया कृतार्थास्मि, तथापि किमप्यभ्यर्थयितुमिच्छामि ।

कृष्णः — ( सहर्षम् ) भगवति ! शीघ्रमाज्ञापय, किन्ते भूयः प्रियं करवाणीति ।

**पौर्णमासी** — निरवद्यकेलिमाधुरीसुधासिन्धो ! साधीयसि प्रसङ्गे कृता हि प्रार्थना निश्चितमेव फलगर्भिणी भवेदित्यधुना निवेदयामि—

---

यद्यपि एतया प्रस्तुतया बाढं प्रशस्यतया प्राचुर्येण च हृदयङ्गमया मनोहारिण्या तव लीलया दानकेलिरूपया कृतार्था धन्यास्मि, स्वान्तःप्रमोदाय सहृदयहृद्येयं तव लीलाऽलमेव, तथापि प्रसङ्गेऽमुष्मिन् किमपि सर्वजनहितमभ्यर्थयितुमिच्छामि इति ।

लब्धमनोरथः कृष्णः पौर्णमासी किमपि कामयते तां प्रत्युपकर्तुं प्राप्तावसरत्वात् प्रमोदभरमनुभवन् सहर्षमाह **भगवतीति** — शीघ्रमाज्ञापय । किं ते भूयः अधिकतरं प्रियमभीष्टं करवाणि इति [ प्रार्थनायां लोट् ] — आदौ शुल्कद्रव्यं समग्रं मुक्त्वा तत्स्थाने प्रतीकतया यत्त्वया प्रस्तुतं तदेव स्वीकृत्य तवाभीष्टं साधितमेव, ततः परं किमहमधुना ते प्रियतरं कुर्यामित्याज्ञापयेत्यर्थः । अत्र काव्योपसंहारो नाम निर्वहणसन्ध्यङ्गमुपस्थाप्यते ।

एवं प्रोत्साहिता पौर्णमासी स्वाभीष्टं ख्यापयन्ती कृष्णं सम्बुबुधे **निरवद्येति** — निरवद्या निर्दोषा सकलहेयोगुणरहिता या मधुररससान्द्रा केलिः नर्मक्रीडा तस्या या ( अगाधा ) माधुरी सा एव सुधा तस्याः सिन्धुः अपारसमुद्रस्तत्सम्बुद्धौ हे अलौकिकमाधुर्यपीयूषपारावार । अत्र सामान्यधिया या केलिरवद्या प्रतिपद्येत तां दिव्यामिति प्रख्याप्य भवदीयत्वात्सर्वथोपपन्नां प्रथयितुं निरवद्येति साभिप्रायं विशेषणम् । **साधीयसीति** — साधीयसी सर्वथा आनुकूल्यसद्भाविते प्रसङ्गेऽवसरे कृता प्रार्थना निश्चितमेव फलगर्भिणी भवेत् या काले फलं प्रसोष्यति इति अभियुक्तोक्तिः; तामनुसृत्य अधुना सफलमनोरथं सुप्रसन्नचेतसं परानुग्रहाभिमुखं भवन्तं निवेदयामि ।

---

सचमुच कृतार्थ हो गई, फिर भी कुछ निवेदन करना चाहती हूँ ।

कृष्ण — भगवति ! शीघ्र ही आदेश दें, मैं आपका और क्या प्रिय करूँ ।

पौर्णमासी — अनिर्वचनीय मधुरिमा से सम्पन्न सुधा के सागर ! अनुकूल अवसर पर की गई प्रार्थना निश्चित ही सफल होती है, यह समझकर निवेदन कर

---

indeed, very well satisfied with this excellent, charming sport of yours, yet I wish to make a request to you for something.

KRṢṆA : (*joyfully*) Revered lady ! please, quickly order me.

PAURṆAMĀSĪ : Oh ocean of nectarine sweetness of blameless sports ! knowing that a request made on an appropriate occasion certainly yields fruit, I submit now —

[ भरतवाक्यम् ]

सहचरीकुलसङ्कुलया गुणै-
रधिकया सह राधिकयानया ।
त्वमिह नर्मसुहृन्मिलितः सदा
घटय माधव घट्टविलासिताम् ॥ ९८ ॥

---

अत्र साधीयसि प्रसङ्गे इत्यत्र व्यवहारकौशलस्य पदिष्टत्वात् नीतिर्नाम नाट्य-भूषण सन्निवेशितम् । अपि च फलागमरूपस्यार्थप्रकृत सिद्धत्वात् निर्वहणसन्धे प्रशस्ति-रूपमङ्ग चरममुपस्थापयितुमयमुपक्रम । अपि च एतस्मिन् सवाद सवत्र पदलालित्य शोभाकर यत्र "सुधासिन्धो साधा°" – इत्यस्य सानुप्रासम्य गद्याशस्य शिखरिणीपादाश रूपत्वादस्य वृत्तगन्धित्वम् ।

भरतवाक्यम् नटवाक्यम् नटस्य भरत इति ख्याते । रूपक अभिनयममाप्तौ नटेन सामाजिकेभ्य आशीर्दीयते । रूपके पूर्वं नटादीना नट वेन प्रवेश प्रस्तावनापर्य त भवति । वस्तुनि समारब्धे नटस्याक्षे अन्याय्य वात् नाट्यशास्त्रप्रवर्तकमुनिविशेषस्य भरतस्य भूमिकाऽवलम्बिनो नटस्य शुभशसनात्मक वाक्यम् भरतवाक्यमिति कथित सर्वेषा मङ्गलरूप प्रशस्तिनामक निर्वहणसन्ध चरममिदमङ्ग वादतव्यम् "नृपदशादिशान्तिस्तु प्रशस्तिरभिधीयते" इति दर्पणकारा ।

अभीष्टस्य स्वरूपमाह **सहचरीति** — हे माधव लक्ष्मीपते ! त्वम् इह वृन्दा-विपिने स्वीया नमणि आमोदप्रमोदेषु ये सुहृद शोभनहृदया सवयस तै मिलित सङ्गत, अनया पुर स्थितया, स्व सहचरीणा कुल समूहस्तन सङ्कुलया परिवृतया, गुणै शाभा कान्तिमाधुर्यौदायादमि कमनीयधर्मै अधिकया सर्वोत्कृष्टया राधिकया (राधा एव राधिका स्नेहव्यञ्जकाल्पार्थ कन् तया) सह घट्टेऽस्मिन् चत्वरे विलासिता नमलाला सदा सवकाल न केवलमधुनैवापि तु समग्रे एष्यति काले घटय रचय । "समीहा रतिभोगार्था विलास इति कीर्तित", "विलासे सस्मित वच", "मुखनेनादिकर्मणां विशेषस्तु विलास स्यादिष्टदर्शनादिना", इत्येव परिभाषिता विलास विविधप्रण्यलीलाप्रक्रम तर्भावयति ।

पद्येऽस्मिन् ललितो बन्ध, कान्तिमाधुर्यादिशब्दगुणघटित, प्रमादार्थव्यक्ति-रूपार्थगुणरूपम्न द्वितीयचरणे "धिकया धिकया"– इति वणसहवेस्तेनैव क्रमेणावृत्ते, प्रथमचरणे कुल-कुलेति भिन्नाधकवर्णसहतेरावृत्त्या च यमकाद्ध्वारणान्यनानुप्रासेन च सुशोभितो वैदर्भीरात्योपनिबद्धो द्रुतविलम्बितेन वृत्तेन रचित सुतरां विभाति ॥९८॥

---

रही हूँ — 'हे माधव ! अपने विनोदी मित्रों क सग, सहेलियों से घिरी, अनुपम गुणों से सम्पन्न, इस राधिका क साथ आप सदैव इस घाट पर नर्मलीला किया करें' ॥ ९८ ॥

---

98 Mādhava ! accompanied by your pleasure companions please arrange at all times such lovely sports in this region of the toll station associated with this exceedingly virtuous Rādhā surrounded by a bevy of her friends

किञ्च

**राधाकुञ्जतटीकुटीरवसतिस्त्यक्तान्यकर्मा जनः**
**सेवामेव समक्षमत्र युवयोर्यः कर्तुमुत्कण्ठते ।**
**वृन्दारण्यसमृद्धि[1]दोहदपदक्रीडाकटाक्षद्युते !**
**तर्षाख्यस्तरुरस्य माधव ! फली तूर्णं विधेयस्त्वया ॥ ९९ ॥**

अपि चाभ्यर्थयते **राधाकुञ्जेति** — हे माधव कृष्ण ! कीदृशोऽसाविति तं विशिनष्टि वृन्दारण्येति — वृन्दारण्यस्य या समृद्धिः (सम्+ऋद्धिः) उत्तरोत्तरमेधमाना शोभा सम्पद्वा सा एव दोहदः अभिलाषः तस्मै तदर्थं वा या पदक्रीडा भवतः सञ्चरणलीला, कटाक्षाः नयनकोणावलोकाश्च तेषां द्युतिः प्रभा यस्य सः, अथवा दोहदपदं अभिलापविषयः क्रीडायाः कटाक्षस्य द्युतिर्यस्य सः तत्सम्बुद्धौ वृन्दावनस्य श्रियो वृद्ध्यर्थं क्रीडायै च कटाक्षद्युतिमन् । राधाकुञ्जेति राधामाधवयोः केलिस्थानं वृन्दावने प्रसिद्धम् । तस्य तटी परिसरस्तत्र कुटीरे वसतिर्यस्य सः राधाकुञ्जसमीपं कृतवसतिः, त्यक्तानि अन्यानि कर्माणि येन सः व्यापारान्तरनिवृत्तो यः कोऽपि जनः अत्र युवयोः राधामाधवयोः समक्षं पुरतः सेवां कर्तुम् उत्कण्ठते उत्सुको भवेत् तस्य एतादृशस्य भक्तस्य तर्पः तृष्णा मनोरथः एव तरुः त्वया तूर्णमविलम्बमेव फलमस्यास्तीति फली फलभृत् विधेयः कार्यः । इह वृन्दावने राधाकुञ्जमुपवसन् राधामाधवसेवामात्रसंलग्नचेता भूत्वा य उत्कण्ठया तदाराधनपरः स्यात्तस्य जनस्य यो यो मनोरथः ऐहिक आमुष्मिको वा स त्वया झगिति पूरणीयः । तेन अस्य वृन्दावनस्य महिमा एधिता, तस्य समृद्धिस्तव चरणन्यासेन कटाक्षपातेन प्रभाशालिनी भविष्यतीति हेतोस्त्वया भक्तेषु वात्सल्येन तन्मनोरथपूरकेन सदा भाव्यमिति भक्तजनोपकारिणी वृन्दारण्यमहिमोपबृंहिणी पौर्णमास्या अभ्यर्थना । वृन्दावनस्योत्तरदिग्भागे भूवैकुण्ठत्वाद्राधामाधवयोस्तत्र स्थितिः सार्वकालिकीति वैष्णवसिद्धान्तोऽत्रानुसन्धेयः ।

पद्येऽस्मिन् तत्पूर्ववर्तिनि सहचरीकुलेतिपद्ये च प्रशस्तिर्नाम निर्वहणसन्धेरङ्गमत्र विन्यस्तम् । तल्लक्षणन्तु प्रागुक्तमेव ।

अत्र माधुर्यं गुणः, पाञ्चाली रीतिः, वृत्तञ्च शार्दूलविक्रीडितम् ॥९९॥

---

और —

"वृन्दावन की अभ्युदय कामना की पूरक, निज चरण-सञ्चार की लीला तथा चितवन की छटा से देदीप्यमान हे कृष्णचन्द्र ! राधाकुञ्ज के समीप कुटी बनाकर रहते हुए, समस्त कार्य को छोड़कर कोई भी जन, आप

Further,

99. Oh Mādhava ! full of lustre in your side-long glances and the playful movements of foot, much needed to *serve as the source of fulfilment (prosperity) of the* Vṛndā forest ! please arrange in such a way that the tree of longing (for beatitude) of those people who, having given up all other activities and living in your

1. "समृद्धि" – इति पाठभेदः ।

**कृष्णः** — (सहर्षाभ्युपगमम्) भगवति ! तथास्तु, तदेहि प्रातिस्विका-भीष्टकृत्याय प्रयामः । [निष्क्रान्ता सर्वे]

*॥ इति श्रीदानकेलिकौमुदी नाम भाणिका समाप्ता ॥*

---

प्रसन्नामिमामभ्यर्थना शृण्वन् कृष्ण हर्षेण सहितोऽभ्युपगम स्वीकार तेन सहित-मिति सहर्षाभ्युपगमम् यथा स्यात्तथेति शेष । स्वीकृतिं बोधयितु कृष्ण प्राह **भगवतीति**— तथाऽस्तु । यथा भवत्याऽभिलषित तत्तथा एव अस्तु । भवत्या इच्छानुरूप सर्वं सम्पन्नमत एहि भगवति ! चलतु प्रातिस्विक स्व स्व प्रति इति प्रतिस्व तत्सम्बन्धि प्रातिस्विक यत् अभीष्टकत्य स्वामिप्रेत कार्यं तत्सम्पादयितुमिति प्रातिस्विकाभीष्टकृत्याय (क्रियार्थोप-पदेत्यादिना चतुर्थी) प्रयाम इत साधयाम ।

एव कार्यं सम्पाद्य राधावाप्तिरूप फलमुपलभ्य सर्वे भरता नाटकीयपात्राणि रङ्गमञ्चतो निष्क्रान्ता अपगता ॥

ग्रन्थकृदाह **इतीति**–इति समाप्तौ । एव श्री शोभा तन्मयी अथवा श्री लक्ष्मीरूपा या राधा तस्या यद्दानमेव दान घट्टशुल्क तन्निमित्त या राधामाधवयो केलि नर्मलीला तां द्योतयितु सहृदयहृदयमाह्लादयितु कौमुदी चान्द्रमसी अभिख्यारूपा नाम्ना च श्रीदानकेलिकौमुदीति लब्धप्रख्या भाणिका नामोपरूपकम् । तल्लक्षण यथा —

"भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।

---

दोनों राधा माधव की सेवा करने के लिये उत्सुक हो, उस भक्त के मनोरथरूपी वृक्ष को आप शीघ्र ही सफल करें' — इतना और अनुग्रह कीजिये ॥ ९९ ॥

**कृष्ण** — (प्रसन्न हो, स्वीकार करते हुए) भगवति ! ऐसा ही हो। अब चलो, अपने अपने अभिलषित कार्यों के लिये यहा से चलें।

[सभी नाटक के पात्र रङ्गमञ्च से चले जाते हैं]

[इस तरह घाट की चुगी के लिये लक्ष्मीरूपिणी राधा की विनोदमयी शामाधायिनी दानलीलारूप चाँदनी यह भाणिका सम्पूर्ण हुई ॥]

---

presence in a cottage in the vicinity of the RĀDHA ARBOUR, are anxious to serve you both (in devotion), soon bears fruit (with your grace descending upon them)

KRṢNA : (*agreeing with pleasure*) Your holiness ! so be it So come, let us go to attend to our own work (respectively)

[EXEUNT OMNES]

Thus ends the Bhānikā, DĀNA KELI KAUMUDI— the moonshine that sheds light on the episode of the sport of giving & taking the tolltax in the shape of the person of Rādhā by Lord Kṛṣna.

कैशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ॥
उदात्तनायिका मन्दपुरुषाऽत्राङ्गसप्तकम् ॥"

इत्येवं परिभाषिता यथास्थानमधस्तान्निर्दिष्टभाण्यङ्गसम्पन्ना रसस्रोतस्विनी उपरूपकान्यतमा कविनिर्मितिः समाप्ता पूर्णतामगमत् ।

अस्यां श्रीमच्चैतन्यमहाप्रभुपादप्रसादभातप्रतिभावैभवानां श्रीलरूपगोस्वामिनां कृतौ भाणिकायां समासेनोपन्यस्तं कथावस्तु तावद्भगवतः पूर्णावतारस्य श्रीकृष्णचन्द्रस्य तथा च तस्य ह्लादिनीशक्तेः राधायाश्च प्रणयप्रसङ्गे शान्तिककविधेः वसुदेवेन वृन्दावने प्रारब्धस्य यज्ञस्य सामग्रीसम्पादनविधौ सखीसमेताया राधाया गुरुजनानुज्ञया यज्ञवाटम्प्रति हैयङ्गवीनं गृहीत्वा प्रस्थानम् । तदुदन्तं नान्दीमुखादुपश्रुत्य श्रीकृष्णोऽपि सहचरसमेतो घट्टाधिकारिभूमिकया तस्मिन्परिसरे पर्यटन् शुल्कभारमारोपितवान् । अस्मिन् प्रसङ्गे शुल्कदानमेव दानं स्वाङ्गदानरूपं, तन्निमित्तं या केलिस्तां विविधाभिः युक्तिप्रयुक्तिभिः सहृदयहृदयहारिणीभिः कथोपकथनभङ्ग्या कौमुदीव प्रकाशयन्ती वक्रोक्तिश्लेषसमासोक्तिप्रसाधिताभिर्भणितिभिर्मरीचीभिरिव देदीप्यमाना भाणिकेयं राजतेतराम् । अस्यां भाणिकायां मधुकरवर्णने (१९ तमे पद्ये) अप्रस्तुतप्रशंसया राधापरोधप्रमुखान् भाविनोऽर्थान् विज्ञाप्योपन्यासाख्यं कार्यकीर्त्तनरूपमङ्गमादिमुपक्षिप्तम् । तदनु विन्यासादयः षड् यथायथं योजितानि भाणिकाङ्गानि ।

उपन्यासमुखेन बीजं विन्यस्य कार्यस्यारम्भावस्थया तं संयोज्य मुखसन्धिं सविस्तरं साङ्गमुपस्थापितवान्कविः । तत्रैव स्थाने सहचरप्रेरणया उपपत्तिप्रयुक्त्या च यत्नस्य प्राप्त्याशायाश्चोन्मेषो हृद्ययाऽनवद्यया प्रणालिकया कविना यथायथं बिन्दुं निवेशयता साध्वकारि । नान्दीमुखीं भगवतीं पौर्णमासीं च पताकाप्रकरीरूपेण विनियोज्य नियताप्तिं निवेद्य शुल्कदानान् मुक्तिरूपं नायिकाकार्यं हृदा चोभयसम्मतं नायकयोः संयोगरूपं कार्यं सम्यग घटयित्वा कविशेखरेणान्तराऽन्तरा सन्ध्यन्तरैः विविधैर्नाट्यभूषणैश्च प्रसाध्य निर्वहणसन्धिः फलोदर्कः प्रसाधितः । अत्र नान्दी अष्टपदा नीली पत्रावली, प्रस्तावना च कथोद्घातरूपा ।

उपरूपकेऽस्मिन् भगवान् श्रीकृष्णो धीरललितो दिव्यो नायकः, गान्धर्विका धीरा मुग्धा परकीया राधा नायिका; नान्दीमुखी पौर्णमासी च प्रमुखसहायिके, सुबलार्जुनौ नर्मसचिवौ, ललितावृन्दादयो वस्तूपकारिण्यः इत्येवं पात्राणि पेशलानि उपस्कारकाणि । वृत्तिश्च प्राधान्येन नर्मप्रधाना कैशिकी प्रायेण भारत्या सात्वत्या च वृत्त्या क्वचित्कोमलयाऽरभटीवृत्त्या स्थाने स्थाने चोपस्कृता । माधुर्यप्रसादसंवलितः विविधैर्भावानुरूपैः वृत्तैः, विद्याधरीसंस्कृतेन प्रायेण वृत्तगन्धिना गद्येन, शौरसेनीप्राकृतेन चानुप्रासमसौन्दर्येणोपस्कृतो वैदर्भीपाञ्चालीरीत्योपनिबद्धः पूर्वरागोज्ज्वलरसानुप्राणितोऽत्र मृद्वीकापाकसुरभिः सचेतसां मनोहरः प्रबन्ध इति दिक् ॥

तत्र संग्रहयुग्मिका —

भाणीयं रचिता महाकविवरश्रीरूपगोस्वामिभि-
यंत्र श्लिष्टवचोमयी मधुयसां केलिं कलिं कुर्वताम् ।
वर्ण्या दानकथा प्रिया सुमनसां चेतोहरा भाविका
दिव्यो नर्मचरित्रधीरललित. श्यामोऽभिको नायकः ॥
श्रीराधा व्रजवल्लभा सुरुचिरा मुग्धा परा नायिका
पाञ्चाली च विदर्भजा च ललिता प्रायेण रीतिद्वयी ।
माधुर्यञ्च गुणः प्रसादसहितो द्राक्षारसास्वादनं
प्राधान्येन तु पूर्वरागललितो दिव्यो रसश्चोज्ज्वलः ॥ * ॥

⁑ **पुष्पिका —**

**ग्रथिता सुमनस्सुखदा यस्य निदेशेन भाणिका स्रगियम् ।**
**तस्य मम प्रियसुहृदः कण्ठतटीं क्षणमलङ्कुरुताम् ॥ १ ॥**
**गते मनुशते शाके चन्द्रस्वरसमन्विते ।**
**नन्दीश्वरे निवसता भाणिकेयं विनिर्मिता ॥ २ ॥**

तत्र च क्वचित्पाठे कवेः प्रवृत्तिनिमित्तं रचनायाः स्थानं तत्समाप्तिसमयञ्च निर्दिशती पुष्पिका प्रवर्त्तते । तत्राद्यं पद्यं **ग्रथितेति** — यस्य मम प्रियसुहृदः निदेशेनाज्ञया इयं सुमनोभ्यः सहृदयेभ्यः सुखदा भाणिकारूपिणी स्रक् पुष्पमाला मया ग्रथिता सन्दब्धा तस्य प्रियसुहृदः कण्ठतटीम् इयं क्षणं मुहूर्तमात्रमपि अथवा "क्षण उत्सवे" स यथा स्यात्तथा क्षणम् अलङ्कुरुताम् तेनात्मनः कृतकृत्यताबोधनाय कविनाऽऽत्मनेपदप्रयोगः समादृतः । पद्येऽस्मिन् कवेराशंसा प्रकाश्यते । अत्रार्या जातिः पथ्या कान्तिर्नाम ॥ १ ॥

अपि च देशकालप्रबोधायाऽऽह **गत इति** — शाके चन्द्रः एकः, स्वराः सप्त = अङ्कानां वामतो गतिरिति नियमात् एकसप्ततिरित्यर्थः तत्समन्विते तदधिकं मनवश्चतुर्दश तत्सङ्ख्यामिते शते अर्थात् एकसप्तत्यधिकचतुर्दशशततमे शकाब्दे [ तदनु वैक्रमे रसव्योमरुकन्दाननेन्दु (=१६०६) सम्मितेऽब्दे [ क्रिस्तीये ग्रहवेदबाणभूमिते = १५४९ वा ] इयं भाणिका वृन्दावनपरिसरे नन्दीश्वरे तदाख्ये स्थाने निवसता मया विनिर्मिता इति ॥ अत्र चपलावक्त्रं नामानुष्टुप् वृत्तम् ॥ २ ॥

एवं सुगृहीतनामधेयानां श्रीवैष्णवभक्तिसारसान्द्राणां स्वामिनामिन्दूरपुराभरणानां श्रीकृष्णाचार्यवर्याणां तनुजनुषा सिद्धान्तवागीशेन वाराणसेयसंस्कृतविश्वविद्यालयोपकुलपतिचरेण

---

१. जिसके सङ्केत पर सहृदयों को सुख देनेवाली भाणिका के रूप में यह माला मैंने गूँथी है, उस मेरे प्रियसखा की कण्ठतटी में यह क्षणमात्र भी [ > उसे हर्ष से उल्लसित करती हुई ] शोभा धारण करे।

२. शकाब्द चौदह सौ एकहत्तर (= वि. सं. १६०६ = सन् १५४९ ई.) में, नन्दीश्वर में रहते हुए यह भाणिका रची गई।

*✻ हिन्दी व्याख्या सुषमा समाप्त ✻*

COLOPHON ⁑

1. May this garland of the BHANIKA adorn the central region of my dear friend's throat under whose direction this delightful wreath of flowers (pleasing to the scholars of discernment), was herein stringed together.
2. In the era *Śaka* of Śālivāhana, during the year, One thousand four hundred and seventy-one (1400 + 71) (*i. e.* 1549 *A.D.*) this Bhāṇikā was composed by me, while living at Nandīśvara.

*F I N I S*

---

⁑ इयं पद्यद्वयात्मिका पुष्पिका क्वचित्पाठेषु न दृश्यते । ⁑ Not found in certain Mss.

नैकविद्याविरुदभाजा दक्षतरण सुरेन्द्रनाथशास्त्रिणा विरचिता श्रीदानकेलिकौमुद्यां श्रीमत्प्रभु-पादरूपगोस्वामिकृतायां भाणिकायां मधूलिकासमाख्या व्याख्या वैक्रमे चन्द्रवह्निनखसम्मिते वत्सरे माधवे मासि पक्षे वलक्षे पौर्णमास्यां पूर्णतामभजत् ॥

**तत्र प्रशस्तिः —**

परिचयः —

प्रश्नोरानागराणां दशपुरवसुधाधीशलब्धादराणां
श्रीमज्जूनागढीयप्रथितगुणवतामन्ववाये द्विजानाम् ।
गोपीनाथाभिधानोऽभवदमितमतिर्दैवविद्विद्वरेण्यो
दृश्यन्ते यत्प्रसादार्जितविशदयशोभागिनोऽनेकशिष्याः ॥ १ ॥

तस्यानन्तगुणाम्बरे समुदितः प्रौढोपलब्धिस्फुरत् –
पाण्डित्यप्रसृतप्रभाप्रविलसत्प्रोच्चैःप्रतापः पपीः ।
पुत्रो यस्य विशुद्धधीखरकरस्पर्शोद्गमत्स्वार्चिषो
न्यक्कारादिव सूर्यकान्तसदृशा दग्धा विदग्धाः परे ॥ २ ॥

साहित्याम्भोधिमन्थान्निसृतरसझरीनिर्मितौ निर्मितोऽयं
सिद्धो हृद्योऽनवद्यो गुणगणगुरुतागीर्णगीर्वाणगीर्यैः ।
श्रीमद्रामानुजार्यप्रथितमहिमसद्धर्मचर्यैकधुर्यैः
श्रीकृष्णाचार्यवर्यैः प्रचुरतरयशः सञ्चिनोति स्म लोके ॥ ३ ॥

तत्पुत्रेण सुरेन्द्रनाथसुधिया साहित्यवारांनिधिं
श्रीमद्रूपमहाकवीशकवितानेत्रेण विद्वन्मुदे ।
स्वीयप्रातिभमन्दराचलमथा कौतूहलान्मथ्नता
सेव्या सेह मधूलिका मधुमयी धारा समुद्भाविता ॥ ४ ॥

पूर्णता —

पौर्णमासी माधवीया दानकेलिं पुरा यथा ।
रूपाभिरूपरूपां हि रम्यरूपां सुरूपिताम् ॥
पूर्णतां प्रापयद्भव्यां तथैवेमां मधूलिकाम् ।
राधारागसुधासारधारापूर्णप्रपायिताम् ॥
कृतां सुरेन्द्रनाथेन शास्त्रिणेन्द्रपुरे वरे ।
संवत्सरे विक्रमाङ्के चन्द्राग्निनखसम्मिते ॥

॥ *श्रीराधामाधवार्पणमस्तु* ॥



# APPENDIX

## [ परिशिष्ट क ]

1 NOTES [ विवरणी ]

2 A NOTE ON METRICS [ वृत्तवृत्तम् ]

3 CONSPECTUS OF METRES USED [ वृत्तपरिचयः ]



## ABBREVIATIONS

A — *Ātmanepada.*
Abl. — Ablative.
Abs. — Absolute.
Acc. — Accusative.
Act. — Active.
Adj. — Adjective.
Adv. — Adverb.
Al. — *Alaṅkāra.*
Aor. — Aorist.
Avya. — *Avyayībhāva.*
Bah. — *Bahubrīhi.*
Ben. — Benedictive.
Caus. — Causative.
Cf. — Compare.
Comp. — Compound.
Dat. — Dative.
Den. — Denominative.
Des. — Desiderative.
Du. — Dual.
F. — Future.
Fem. — Feminine.
Fp. — Future Participle.
Freq. — Frequentive.
Gen. — Genetive.
Gr. — Gerund.
Indl. — Indeclinable.
Infn. — Infinitive.
Instr. — Instrumental.
Imp. — Imperative.
Karm. — *Karmadhāraya*
Lit. — Literally.
Loc. — Locative.
Mas.(m.) — Masculine.
N. (n.) — Neuter.
Nom. — Nominative:
P. — *Parasmaipada.*
Pass. — Passive
Per. — Person.
Pl. — Plural.
Pot. — Potential.
P. p. — Past participle.
P. pr. — Past preterite.
Pr. — Present.
Pr. cl. — Principal clause.
Pro. — Pronoun.
Pr. p. — Present participle.
S. — *Sandhi.*
Sing. — Singular.
Tat. — *Tatpuruṣa.*
U. — *Ubhayapada.*
Voc. — Vocative.

## SYMBOLS

The figure 1, 2, 3, 4, 5, 6, 7, 8, 9 and 10 indicate the Conjugation of verbs.

The Numbers I, II, III indicate the person of the verbs.

The numbers १, २, ३, ४, ५, ६, ७ indicate the case of Tatpuruṣa or Bahubrihi Compounds.

The Symbol √ indicates the root of a verb.

### Sanskrit Abbreviations

१. इतरे. — इतरेतर।
२. कर्म. — कर्मधारय।
३. तत्पु. — तत्पुरुष।
४. उ. — उपपद।
५. द्व. — द्वन्द्व।
६. बहु. — बहुव्रीहि।

# NOTES

PAGE

1. स्मेर ( adj ) = √स्मि 1A + रन् = smiling = मन्दहास्य युक्त ।

   व्याकीर्ण ( adj ) = वि + आ + किर 1 P + क्त = scattered = बिखरे हुए ।

   पाटलित ( adj ) = पाटल + इतच् = rosy = गुलाबी ।

   किलकिञ्चित ( n ) = hysterical joy, *a commixture of* various feelings – a natural grace of women = विविध भावों के सङ्कर से जायमान मादक हर्ष – [ एक योषिदलङ्कार ] । 'स्मित–शुष्करुदित–हसित–त्रास क्रोधश्रमादीनाम् । साङ्कर्यं किलकिञ्चितम् ।'
   ( साहित्यदपण ३–११७ )

3 मुरद्विषि ( m. Loc sing ) = मुर + द्विष् ( 2 U ) + क्विप् = मुरारि ।

   विभुरपि ·· वृद्धिम् = Though full and all pervading, it is constantly increasing अपि suggests here that this love is something different, being spiritual in character, and, therefore, it transcends human logic, cf अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत् । *Though God's bliss is* perfect *we* speak *as* though it *admits of some* future bliss to add to it *cf* नारदपुराण "आगमिष्यत् सुखञ्चापि तच्चाप्यस्त्येव सदापि तु । तथाऽप्यचिन्त्य शक्तित्वाज्जात सुखमतीव च" ॥ ( Madhva – G B VII 6, Also Ramānuja – "पारार्थ्यलक्षण हि शेषत्वम् ।" अत शेषभूतो मुक्त स्वप्रयुक्तेन केनचिदतिशयेन शेषिण संयोजयति – Nitimala – X.

4 नान्दी ( नन्द् + 1 P Caus – to delight + घञ् + ङीप ) A benedictory song opening a dramatic piece, *wishing well of the actors* as well as of *spectators* Such *a song is conventional,* and is sung behind the screen before the stage manager appears on the stage to introduce the play to the audience

5 विस्तरेण ( n ) Instr singular of विस्तर = वि + स्तृ 9 P = to spread + अप् since घञ् is denied here by Pānini under Sūtra प्रथने वावशब्दे" ( Ast III iii–33 )

   सूत्रधार — The actor in-chief who in his prelude acquaints the audience with the author place, season and the title and the type of the play under enactment

7 पुलक ( n ) a natural reaction on the body ( सात्त्विकभाव ) betraying delight or consternation = horripilation = रोमाञ्च । So is विवर्णता = pallor here due to the fact that the subject lacked *enthusiasm to witness* the Lord with mortal eyes due to insufficiency of that devotion

8 साधिष्ठ ( adj. ) superlative of साधु or बाढम् ।

   कादम्बर ( m ) a spirituous liquor made from Kadamba flowers

PAGE

more covetable to be born as a reed rather than a cowherdess. Here the womanly jealously is extended even to the inanimate objects, which is the third stage of density of love ( *anurāga* ) – vide Ujjvala-Nīla-Maṇi. Cf. "this little flute of a reed thou hast carried over hills and dales and hast breathed through it melodies eternally new" – Tagore – Gitānjali–1.

47. भ्रमरमणीः निरुन्धानः – the description of a drone blocading female bees is suggestive of the future action in the play through the alaṅkāra Atiśayokti, presenting the first element of *Upanyāsa* of the Bhāṇikā.

48. धन्याः कुसुमक्रीय्यः *cf.* धन धन सखि ! सफल जनम जाके अनुकूल सजन।
[ आस्थायी ] राग परज।

51. तत्र यज्ञे...श्रूयते = It is only proper to have the ornaments removed from the person of Rādhā here so that the ornaments to be bestowed by the Brāhmaṇas at the sacrifice, which were auspicious, could be put on. In fact, it was a tactful way of presenting Rādhā before Kṛṣṇa without the load of ornaments, for the best beauty is unadorned. Cf. Kālidāsa : Parivrājikā as the Judge asks Ācārya Gaṇadāsa to present Mālavikā at the dance unornamented : Refer–
'सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः प्रवेशोऽस्तु ॥' ( Mālavikāgnimitra Act I )
also किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥ ( Śākuntala – Act I )

52. प्राञ्जल्यम्...क्रियताम् = As it was not possible to pay respects by bending their heads, which were loaded with pots of *ghee*, Vṛndā advises them to pay respects only with folded palms.

54. गिरिरसावेष ..विशेषम् = The superiority of the Govardhana mountain over Śeṣa lies in the fact that where Lord Kṛṣṇa ( Viṣṇu ) simply rests during the rainy season only, on the body of Śeṣa, He uses all the parts of the mountain for His marvellous sports with his beloved belles all the time.

57. घुणा = Lit. insects which incise the wood and cause holes. Here it means "musical sounds" on the principle that the name of the cause is substituted for its effect. Here the insects are the cause of the holes and *the musical sounds are their effect.*

धृतिध्वान्तं...भिन्दन् = destroying the darkness of the lotus eyed belles' firmness of mind. It is known that the rise of the Moon is an excitant *(Uddīpana)* and causes the blooming young women so very infatuated with love that they forget all propriety of conduct

PAGE

which remains no longer a hindrance to their free exhibition of love

60 नव सदा ....किमक्षिणी = Sri Krsna's beauty ever appearing new may be due to both the facts, viz (i) His beauty was exceptionally extraordinary so that it always appeared new [ *cf* Magha – "क्षणे क्षणे यन्नवतामुपैति, तदेव रूप रमणीयताया ।" Sisupalavadha IV–17b ] and (ii) that Radha being saturated in her fondness for Krsna always found him new and fresh. This is the characteristic of *Anurāga* – Vide Ujjvalanilamani "सदानुभूतमपि य कुर्यान्नवनव प्रियम् । रागो भवन्नवनव सोऽनुराग इतीर्यते ।"

63 मूर्छितवल्गुरागा &c = मूर्च्छना is normally defined as "क्रमात्स्वराणा सप्ताना मारोहश्चावरोहणम् । सा मूर्छेत्युच्यते ॥" They are said to be twenty one सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशति । A मूर्च्छना may be taken to be like the ठाठ of the modern Hindustani music or मेलकर्त्ता of the Karnataka music But beyond this no exact concept of मूर्च्छना meant by ancient musicologists could be had now, as the celebrated authority on modern music Śri Bhatkhande admits in his Laksya samhita

मूर्च्छनाया रहस्य तद्रत्नाकरप्रपञ्चितम् ।
स्फुग्मेवाभवद् बोद्धुं न शक्त कोऽपि पण्डित ॥ ( I–31 )

64 क्षण तावत्प्रच्छन्ना भवामि = This is to avoid being detected as an informer

65 मयापि बिम्बाधरे वशी निधेया = *Bimbādhara* means beautiful lips red like the Bimba fruit The question is — how could Krsna refer to his own lips as beautiful red lips – a self praise beyond decorum The way of justifying is to recall that Krsna is the Supreme God (कृष्णस्तु भगवान्स्वयम् ) and it is his prerogative to refer to himself in glorious terms ( *cf* Gita — अतोऽस्मि लोके वेदे च प्रथित पुरुषोत्तम । XV–18 )

66 कलस्वनस्तरल्लताव्याजृम्भणे = Fanciful'y, the poet is making an attempt to establish a new poetic convention – music of flute blossoming the plants and creepers The accepted convention in this behalf is summed up in the following verse 'पादाघातादशोकस्तिलककुरबकौ वीक्षणा लिङ्गनाभ्यां, स्त्रीणां स्पर्शात्प्रियङ्गुर्विकसति बकुल सीधुगण्डूषसेकात् । मन्दारो नर्मवाक्यात्पटु मृदुहसनाच्चम्पको वक्त्रवातात् । चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात् कर्णिकार ।" Here Koel (*Pika* ) is compared to a *Brāhmana* and its warbling to the Vedika recitation.

धराधरेन्द्र ( m ) = great mountain दम्भोलि ( m ) = thunderbolt

67 In verse 33 all the verbs are desiderative ( सन्नन्त ) वि + निर् + √मा 2 P ( > Atm ) + सन् = विनिर्मित्सते, √ इष् 6 P to desire + सन् = ईप्सति आ + √ रभ 1 A to begin + सन् = आरिप्सते सम + √धा 3 P to join + सन् = सन्धित्सते all Pr III per sing What is indicated by this description here is that love for Krsna is transforming the entire personality of Rādhā into a fully blossomed youth.

PAGE

8. हरेरास्पदम् = The ocean is said to be the abode of Viṣṇu, for he rests in the Kṣīra-sāgara.

9. स्फार (adj.) √ स्फाय् 1 A + रक् Unādi – III–13 = swollen. परिवृद्ध ।

10. हंस (m.) 1. a swan ; 2 a yogin of a particular order.

11. सन्धि (mas.) means political alliance in statecraft ; 2 in dramatic parlance it means Junctures which constitute the plot.

सप्ताङ्ग (n.) Lit. seven divisions : In statecraft, they are king, minister, the allies, treasure, territory, fortress & army; "स्वाम्यमात्य-सुहृत्कोषराष्ट्रदुर्गबलानि च ।" 2. In dramaturgy, there are seven sub-divisions of Bhāṇikā (a wee-monologue), viz. 1. Intimation (उपन्यास) 2. Insertion of a statement (विन्यास) 3. Vigilance (विबोध) 4. Misstatement of facts (साध्वस), 5. Saracastic speech (समर्पण), 6. Citation of an illustration (निवृत्ति) and 7. Culmination of motive (संहार).

14. सनातन (m.)=In the case of the Lord it means eternal. 2. It also refers to his elder brother, by name, Sanātana. It is out of modesty that Rūpagosvāmin refers to his elder brother Sanā tana as his preceptor ; but in the Vaiṣṇava tradition, Rūpa is deemed senior, for it was he who met the Master, Caitanya Mahāprabhu earlier and got his blessings.

15. गान्धर्वग्राम (m.) = the third of the seven primary notes of the Indian gamut There are the three scales in Indian music, one higher than the other in pitch. They are Ṣadja-grāma, Madhyama-grāma and Gāndharva-grāma. It is believed that only the Gandharvas in Heaven sing or play on instruments in the Gandharva-grāma.

कुरङ्ग-धर्म (m.) the temperament of deer who have weakness for the melody of music and get lost.

16. नान्दीमुखी — 1. a female character in this play, 2. this play which opens with Nandi, the Invocatory verse (नान्दी मुखे यस्याः सा नान्दीमुखी ।)

21. सान्दीपनि (m.) a celebrated scholar hailing from Kāśī, settled in Ujjayant — the tutor to Kṛṣṇa in his childhood.

हैयङ्गवीन (n.) Ghee (clarified butter churned from milk or curds drawn yesterday : 'तत्तु हैयङ्गवीनं यद्ध्यो गोदोहोद्भवं घृतम् ।' – Amarakośa.

23. आनकदुन्दुभि (m.) an epithet of Vasudeva, Kṛṣṇa's father, so named because at his birth gods beat loud drums – [ He perfomed the

PAGE

sacrifice ) "वसुदेवो महाबाहुः पूर्वमानकदुन्दुभिः ।"
जज्ञे यस्य प्रसूतस्य दुन्दुभ्यः प्राणदन् दिवि ॥
आनकानां च संह्रादः सुमहानभवद् दिवि ॥ — हरिवंश ।

23 गर्ग ( m ) an *ācārya*, the family priest to Nanda Rai, the chief of cowherds in Gokula

आभिचारिक ( adj ) In the orthodox Hindu tradition there are sacrifices performed either for spiritual benefit or for some worldly gain The latter is again of two kinds, the auspicious one, meant for gaining the good, called the benific sacrifices, and the other is for doing wrong to the enemies, which is called malefic ( *or ābhicārika* )

25 मानसगङ्गा ( fem ) The river Gangā, the holiest of the holy rivers is conceived to be present in any river or lake or water reservoir by the devotees when they bathe in it. Any river thus mentally conceived to have the presence of the Gaṅgā is called Manasa ganga In fact it is the presiding *deity with a corpus of a stream*

तुलाकोटि ( m ) the anklet, a foot-ornament for women, नूपुर ।

27 आखण्डलकोदण्ड ( m ) the bow of Lord Indra, i e Rainbow.

31 विष्कम्भक (m ) An Intermediary Scene in a play which connects events, the past and the future.

32 ध्वजकुलिश etc These are, according to the Samudrika, the natural prints on the body, deemed to be the marks predicting imperial prowess.

33 बन्धुर ( adj ) undulating owing to rise and fall of musical notes.

34 क्वचित् &c. this fourth foot of the verse is reconstructed by the Editors the available readings being faulty

38 39 सर्वदा भवितरित विबन्ति It is believed that pleasures enjoyed here are the fruits of past merits and the miseries are the results of evil *deeds done in past births Accordingly those who enjoy the blessed* sight and company of Kṛṣṇa are deemed to possess better merits This is an expression of womanly jealousy

40 सीधु ( m. ) a spirituous liquor made from molasses.

43 वेणुरु प्रतु etc. The flute made *of reeds is enjoying the nectar of the* lips of Kṛṣṇa constantly of which we are deprived Hence it is

PAGE

68-69. लेहयन् = caus. of लिह् 2 P. to lick. कवलयति is a nominal verb (नामधातु) from the noun कवल = eats up.

70. वालतया (Instr. sing.) = the word वाल has two meanings : (i) hair, (ii) child ∴ वालता = crookedness of hair, and childishness.
In the verse 35 there is a beautiful figure of speech उत्प्रेक्षा fancying the cause for giving up straightforwardness. It may be noted that comparatively, the breasts and hair are much inferior to the eyes that are capable of reading intelligent works like the Vedas. The treatment given to them is, therefore, unfair and insulting.

71. महासार्थवाह (m.) = the leader of the great caravan.

72. व्याघोटन (n.) = holding them up and making them to drift hither.

73. पृष्ठमांसाद (m.) = पृष्ठे मांसमत्तीति – अच् = a slanderer, a back-biter. Vide "पृष्ठमांसादन तद्यत्परोक्षे दोषकीर्त्तनम्।" (Hemcandra).

76. पञ्चालिका = a pun on the word meaning "five friends" and "a doll".

77. कृष्णस्य &c. = By this acting Madhumaṅgala makes Rādhā and her friends guess that he is telling Kṛṣṇa that Rādhā's standing motionless as though in fear is only a ruse to escape paying tax.

In verse 37, the adjs. like मृगाधिपतिमध्यम &c. qualifying Kṛṣṇa make him appear formidable when the compound is dissolved as मृगाधिपतिः मध्यमे = कटिदेशे यस्य सः, but in fact they are meant to denote his handsome personality having a slender waist (मृगाधिपतेर्मध्यम इव मध्यमो यस्य), a stout chest etc. They also indicate His previous incarnations such as Narasiṁha and Varāha.

79. आपृच्छेमहि = आ + प्रच्छ 6 P. turned into Atm. with आ = to take leave. Pot. I per. Pl.

82. सुश्लोक (adj.) श्लोक means कीर्त्ति or public opinion, reputation, i. e. highly spoken of.

86. विडम्बना (f.) strictly speaking means "imitation or acting like-°. Here it is used colloquially meaning disgrace : *cf.* Marathi विडम्बणा।

87. फणिवल्लीपर्णवीटिका (f) = a roll of betel leaves. It contains lime, catechu, slices of areca-nut, cardamom, clove, saffron and other spices. Offer of such betel rolls is a mode of honouring a distinguished visitor.

87. औपयिक (adj.) = befitting the occasion, appropriate.

88. ठग-वट्टिका (a slang) : ठग = a cheat, a thug, वट्टिका = a pill. The stupefying pills used by cheats to make the prey senseless and then rob him.

89. अनास्वादितचरी = अन + आस्वादित + चरट् (भूतपूर्वे) + ङीप् = Not tasted so far or ever before.

PAGE

94-95. By reference to Krsna the following words in the verse 39 are to be understood as shown below :

कुहुकण्ठ ( voc ) = Oh ! sweet-voiced, कूटं भजन् ( Pr.P ) = under the guise of collecting tax i. e. by fraud., रसालता ( f. ) = राधा । द्विरेफपतिभिता ( f. ) = married to a barbarian, opposite to रसिक The word परिमल is highly significant, for परिमल means copulation as well. The adj. परिमलवती hints at her being परकीया ( another's wife ).

96 In verse 40, the word गुण having two meanings, viz, ( i ) string, ( ii ) character, वैगुण्य means ( i ) having no string ( ii ) absence of character, and गुणच्युति means ( i ) being free from the string, and ( ii ) losing character.

100 जगद्गुनमय लुब्धा· &c = the other hemistich of this verse reads as "नारायणमयं धीरा पश्यन्ति परमार्थिन ।" The wise seekers after truth see the world filled with Nārayana, the Supreme spirit.

101. पुण्याह ( n ) Technically, in the preistly language पुण्याह means an auspicious day on which some ceremony is to be performed. Before the actual ceremony of the day, there is a ritual called पुण्याहवाचन performed

102. सूर्योपासिका ( f ) The regular worshippers of God Sun By virtue of their worship of the Sun they are deemed to be possessed of some extraordinary strength

104 चातुरिक ( m ) चत्वरिक, चोरोद्धरि &c = It seems that during the medieval India especially under the Muslim regime, there used to be an office of tax-collectors or liason officers of these names

Verse 41 It is a sarcasm full of jealousy A flute ( *Vamsi* ), a stick ( *Yasti* ) and a horn ( *Visanikā* ) a sort of a bugle - were carried by Krsna they were his constant companions All of them being in the feminine form, they are deemed as if espoused by him, and out of jealousy fault is found with them inasmuch as the first is full of holes, the second is crooked and the third is hard and curved

106. भुजङ्गेश . . आप्नोति = there is a natural antipathy between a snake and mongoose ( ichneumon ) The latter, being stronger, in a duel the snake is sure to get killed The whole verse is full of pun and repartee.

110 गन्धफली ( f ) = a *campaka* flower. मरकत ( n ) = an emerald.
The incident which Subala sarcastically refers to seems to have taken place some what like this Perhaps some of these Sun-worshippers ( Gopis ) once plucked flowers from a garden and were caught red handed By way of punishment the Keeper of the garden took off their ornaments and made them offer

apology, which was signified by holding a blade of grass in between their teeth – a mark of surrender.

111. जैनदीक्षा ( Lit. ) the Jain order. i. e. nakedness. A euphemism for denuding.

111. अनुजगृहिरे = अनु + ग्रह 9 P. Pr. Pass. III per. sing. = were obliged.

काकुः ( m. ) a word of negation used in such a manner that it implies the contrary, i. e. affirmative. काकूक्तिः means affected protest = though enjoying, protested out-wardly.

It may be noted that what the hero is saying her here is just a boast. All this Lalitā makes clear in her following dialogue with Viśākhā.

112. सखि विशाखे...आद्रितवती = the idea is that the Gandharva pleaded on behalf of Kṛṣṇa saying that he had not committed any serious crime, but had, to extract toll from her, only undone Rādhā's bodice wherein presumably lay valuables concealed. This is to pacify Paurnamāsī from whom a severe reprimand was apprehended for Kṛṣṇa's a bit of misdemeanour, let alone, the offence of depriving her of her garments.

114. पश्याम...से चैत्रयीम् = Just as a Kōel plucks a cluster of sprays from the mango tree, so shall I cleverly manage to extract the toll-tax from these belles.

116. The pun on the following words in verse 47 is :

अपश्चिमा = ( i ) without west ( ii ) behind none ;

अपूर्वा = ( i ) without east, ( ii ) unprecedented ;

अदक्षिणा = ( i ) without south, ( ii ) uncivil ;

अनुत्तरा – ( i ) without north, ( ii ) unresponsive, answerless.

120. The pun on महाभार is "great weight" in which sense Lalitā uses the word, ( ii ) 10,00,000 *tankas* in which sense Madhumaṅgala takes it.

121. उत्कोच &c. – This signifies that bribery was well in vogue in those days. Perhaps the practice in those days was to disburse one-fourth of the revenue to the revenue officer who collected it from the tax-payer. Accordingly, the toll-gate chief was entitled to 16 lakhs of *tankas* as against only 4 lakhs calculated by Madhumaṅgala, hence accusation.

127 महावर्ति = a great rope to fasten the elephant.

दुर्ललिता = ( i ) difficult Lalitā ( ii ) rude or unruly ;

अमृतसर – ( i ) a lake of nectar, ( ii ) Rādhā.

वासन्तलता = a creeper yielding white-yellow flowers ( ii ) Rādhā's friend of that name.

PAGE

128. सद्मनर्दिनि (Voc.) सद्मनि नर्दति असौ (नर्द् 1 P + इनि + ङीप् (fem ) Lit "One who roars at home only" i. e one who shouts defiance at home only, in fact a coward.

129. Note the pun on पयोधर meaning (i) breast, (ii) a cloud नक्षत्रमाला meaning (i) a neckless with 27 pearls, (ii) the group of 27 stars, कल्यता meaning (i) strength (ii) daybreak.

130 राहूत्थाने &c It is well known that Rahu eclipses the Sun

131 नागरनाग &c The sentence is full of pun नाग (i) a snake, (ii) an elephant Radha uses the word नाग in the sense of a serpent, and Krṣna takes it in the sense of an elephant in his rejoinder In Prakrit विसाण could be rendered into Sanskrit as (i) विषाण = a tusk of an elephant, (ii) विषाणाम् (Gen Pl ) = of the poisons In this dialogne Radha uses it in the latter sense, while Krsna takes it in the former sense महासार means great strength (महा + सार) in case of the tusk, but means (महा + आसार) = profuse outpour in case of poison.

132 Then again सुप्रतीक (adj ) means handsome प्रतीक = body, as noun it means the elephant of the north east quarter (a दिग्गज). सुप्रतीक is one of the eight elephants, said to guard and preside over the eight cardinal points

They are – ऐरावत पुण्डरीको वामन कुमुदोऽञ्जन ।
पुष्पदन्त सार्वभौम सुप्रतीकश्च दिग्गजा ॥ – *Amarakosa*

पद्मिनी = (i) the lotus plant (ii) a woman, first in order of *the four classes described by Kamasāstra* Vide Ratimañjarī –

"भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा, अविरलकुचयुग्मा चारुकेशी कृशाङ्गी ।
मृदुवचनसुशीला गीतवाद्यानुरक्ता, सकलतनुसुवेशा पद्मिनी पद्मगन्धा ॥"

134 भुग्न (adj ) [ √भुज् 6P + क्तस्य न ] = bent or stooping, झुका हुआ ।

135 भद्र (adj.) = *happy or prosperous*, (n ) *a bullock*

137 सारी or शारी – सारिका or शारिका has two menaings (i) a kind of bird, *Mainā* (thrush) which provides recreation to lovers during separation (ii) a pawn or piece at chess or a die-board In verse 52, the word शारी is used in the second sense, but Rādhā takes it in the first sense with a suggestion of an *Abhisārikā* = a woman who goes to meet her lover at the appointed place "कान्तार्थिनी या याति संकेतं साभिसारिका ।" — Amarakosa.

138 The word 'उत्कोपपतौ' (Loc sing ) can be dissolved in three ways (i) उत्कोपश्चासौ पतिश्च तस्मिन्, (ii) उत्कोप उपपति, तस्मिन्, (iii) उत्का उपपतौ (two substantives), (उत्का) = eager, + उपपति (m ) = a paramour, उत्कोप = a tar temperad.

